

हें पुस्तक

पृष्ठ १–३२० प्रभु गोविंद कानडे यानीं घर नं. ४०१०
शुक्रवार पेठ–सोलापूर येथें आपल्या सच्चिदानंद प्रेसमध्ये

आणि

पृष्ठ ३२१–३९० व टायटल वगैरे पृष्ठ १–१६ 'मुंबईवैभव' प्रेस,
सर्व्हंट्स् ऑफइंडिया सोसायटीज् बिल्डिंग, सँढर्स्ट रोड,
गिरगाव–मुंबई येथें रा. चिंतामण सखाराम देवळे,
यानीं छापिलें

तें

शेठ नाथा-रंगजी गांधी यानीं माडवी–मुंबई येथें प्रसिद्ध केलें.



अस्मद्विद्यागुरव

स्याद्वादवारिधि वादिगजकेसरी न्यायवाचस्पति दिवगत

**प० गोपालदास बरैया.**



जन्म चैत्र संवत् १९२३.] [ मृत्यु चैत्र सं० १९७४

# समर्पणपत्रम्.

—:o:—

वादिगजकेसरीति, स्याद्वादवारिधिरिति,
न्यायवाचस्पतिरिति च राजकीय-
कलिकाता विश्वविद्यालये वङ्गीयैर्विद्वद्वरै-
र्लब्धपदप्रतिष्ठं श्रीमन्तं **गोपालदास**जीति
शुभाभिधानं जैनधर्मविदुषामग्रेसरं
तदाज्ञावशात्कृतामिमां कृतिं सादरं
समर्पयते ग्रन्थकर्ता—

तच्छिष्यान्यतमो
**वंशीधरः**

# प्रस्तावना ।

शब्दात्पदप्रसिद्धिः पदसिद्धेरर्थनिर्णयो भवति ।
अर्थात्तत्त्वज्ञानं तत्त्वज्ञानात्परं श्रेयः ॥

( सिद्धान्तटीका )

**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिकाः ॥**

इत्युक्तश्लोके जैनेन्द्रनाम्नो व्याकरणस्य महाव्याकरणेषु कृतं समावेशं दृष्ट्वा तत्कतमत् स्यादिति पिपृच्छा स्याद्वाचकजनानां हृदि, तस्य च कोस्ति कर्तेति च । तन्निरासाय किंचिन्निर्णायकं प्रमाणमुद्धरामः ।

शब्दार्णवे व्याकरणे ' उपज्ञोपक्रमम् ' इति सूत्रव्याख्याने सोमदेवो ' देवोपज्ञमनेकशेषं व्याकरणम् ' इति वाक्यमुदाजहार । देवशब्देन देवनन्दी गृह्यते, उत्तरपदस्य लुप्तत्वात् । यथा भामा सत्यभामा सत्या वेति । ततो देवनन्दी यद्व्याकरणमरीरचत्तदेकशेषरहितमित्यर्थः स्यात् । अस्मत्प्रक्रियामूलाधारेऽस्मिन्नेव सूत्रेष्वेकशेषस्य निरासः कृतो ग्रन्थकृता ' स्वाभाविकत्वादभिधानस्यैकशेषानारम्भः ' इति । न त्वेकशेषनिराकरणं व्याकरणान्तरेषूपलभामहे । अत एतदेव व्याकरणं देवोपज्ञमिति सिद्ध्यति । जैनेन्द्रनाम्ना यद्व्याकरणं तद्देवोपज्ञमिति गणरत्नमहोदधिकर्ता चाभिदधे स्वग्रन्थे महावैयाकरणानां संग्रहणसमये । अत एतदेव जैनेन्द्रनामकं व्याकरणमिति सिद्ध्यति ।

किंच, श्रीमदाशाधरेण स्वप्रशस्तौ ' यो जैनेन्द्रव्याकरणमपठत्सोहमाशाधर इत्युक्त्वाऽनगारधर्मादिग्रन्थेषु जैनेन्द्रस्यास्यैवासकृत् प्रमाणान्युद्धृतिरे । अतो ज्ञायते जैनेन्द्रनामकमिदमेव व्याकरणमिति । अस्यैव च ग्रन्थस्य विद्यानन्दाकलङ्कदेवादयोपि महान्तः प्रमाणान्युदाजह्रुः । अत इदमेव व्याकरणं जैनेन्द्राभिधं देवोपज्ञं चेति निर्विवादं संसिध्यते ।

केचन शब्दार्णवं जैनेन्द्रनाम्ना प्रमादात् ख्यापयित्वाधुना समर्थ-यन्ते, तत्प्रामादिकम् । नाम्नैव तस्य शब्दार्णव इति प्रसिद्धेश्च संतोष्टव्यं तैः । यदि नाम तन्नाम जैनेन्द्रमित्यभविष्यन्न तर्हि तट्टीकानाम शब्दार्णवचन्द्रिकेति प्रसिद्धिमगमिष्यत् । शब्दार्णवनाम्नश्चन्द्रिकेव चान्द्रिकानाम्नीयं टीका, दृष्टीणामाल्हादहेतुत्वादिति हि तन्निर्वचनसिद्धो भावः । एवं शब्दार्णवनिर्णय इति अपरोपि टीका-ग्रन्थोस्य मूलस्य शब्दार्णवसंज्ञामेव प्रकटीकरोति । यस्तु शब्दार्णव-चन्द्रिकाया आद्यन्ते देवनन्दिनामुल्लेखो दृश्यते स आदरार्थत्वान्न परमार्थेन कर्तृत्वबोधकः स्यात् । अन्यथा स एव वक्ता एकत्र एकशेष-प्रकरणयुक्तमेकं व्याकरणं देवोपज्ञमभिधाय स्थलान्तरे ' अनेकशेषं देवोपज्ञम् ' इति पूर्वविरुद्धमपरं व्याकरणं देवनन्दिकृतं कथं प्रतिजानीयात् ? इति दिक् ।

## अस्य व्याकरणस्य वैशिष्टयम्–

पाणिनीयाद्यपेक्षयात्र व्याकरणे किं नाम वैशिष्ट्यम् ? एतत्—

( १ ) संज्ञाकृतं लाघवमपि स्वीकृतमत्र । पाणिनीये तु ' संज्ञाकृतं लाघवमिह न गृह्यते ' इत्युक्तम् ।

( २ ) पाणिनीये स्वरादिभेदार्थं बहवोऽनुबन्धाः ककारणकार-पकारादयः प्रत्ययेषु कृता, न तथा जैनेन्द्रे । यथा–ठक्-ठण्-मतुप्-स्थाने ठणमतुश्च कृतौ । अतः प्रक्रियाकृतमप्यत्र लाघवमस्ति । किंच,

( ३ ) पाणिनीये चतुर आमागमं विधाय यणादेशं स्वादौ कृत-वान् । अत्र तु उतो वादेशमेव व्यधात् । इत्यपि प्रक्रियाकृतं लाघवमत्र ।

( ४ ) ' तृज्वत् क्रोष्टुः, पद्दन्नोमास–' इत्यादिवचनैः पाणि-नीये आदेशविधिरुक्तः । जैनेन्द्रे तु क्रोष्ट्रादीनां पदादीनां च शब्दा-न्तरत्वं तृजन्तत्वेन हलन्तत्वादिना च प्रदर्श्य नादेशार्थं पृथग् वचनानि कृतवान्कर्ता ।

( ५ ) स्वाभाविकीं शब्देषु एकत्वबहुत्वादिर्वाचकत्वशक्तिं समर्थ्य एकशेषप्रकरणप्रक्रियां निराचक्रे ।

( ६ ) जैनेन्द्रकर्ता एकमेव वचनमित्संज्ञार्थं विधाय 'आदिर्ञिटुडवः' इत्यादिपाणिनीयवन्न वचनान्तराणि चक्रे, तत एवाप्रयोगार्हस्य सर्वस्येत्संज्ञासिद्धेः ।

( ७ ) अत्र बुद्धिकृतं विश्लेषं परिकल्प्य तादृशस्य वचनेनैकेनैवापादानसंज्ञां विधाय 'भीत्रार्थानाम्' इत्याद्यष्टसूत्री पाणिनीये इव न कृता । भाष्यकारैरपि पतञ्जलिभिरपास्ता । एवमेकशेषप्रकरणमपि भाष्यकारैरपास्तम् । इत्युत्तरोत्तरं मुनीनां प्रामाण्ये सति तदकरणमेव श्रेय इति भाति ।

( ८ ) पाणिनीये यथा वैदिकप्रयोगाः साधितास्तथा, नात्र साधिता लोके तदनुपयोगात् । तथापि केचन शब्दाः पाणिनिना छन्दोधिकारे साधितास्तेऽपि लौकिका इति मत्वा साधिताः । यथा "ओमभ्यादाने" इत्यनेन पाणिनिना प्लुतत्वं छन्दसि एव कृतं, जैनेन्द्रे तु लोके एव ।

( ९ ) समासे तत्पुरुषार्थे लिङ्गं न निर्धारितमुत्सर्गेणोत्तरपदार्थस्य तत्र प्राधान्येनैवोत्तरपदवल्लिङ्गविधेर्ज्ञातुं सुशकत्वात् । एवमेकत्वादिवचनविधिरपि सुतरां यत्र संभवेत्तदर्थं न सूत्राणि कृतानि । अपवादे तु "तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे द्वित्वम् ॥१।१।९९॥ इत्याद्यवश्यकरणीयं कृतमेव ।

( १० ) जैनेन्द्रे कथादिर्गुडादिश्च गणौ कथादिष्वेव संगृहीतौ । तदर्थं न पृथग्वचनम् । एवं पाणिनिना 'आत्माध्वानौ खे' इत्यनेनात्मशब्दस्य नान्तता प्रकृतिभावेन स्थापिता । जैनेन्द्रे तु 'विश्वजनात्मभोगान्तात्सः' इत्यत्र खविधाने एव नान्तत्वमुच्चार्य प्रकृतिभावः सूचित इति न तदर्थं पृथग्वचनमपेक्षितम् ।

( ११ ) 'अर्धं नपुंसकम्' इत्यादिवचनानि समासविधानार्थं यथा पाणिनिना विरचितानि तथा न जैनेन्द्रकर्त्रा, सामानाधिकरण्ये-नोत्सर्गवचनादेव समाससिद्धेः। एवं शतशो वचनानां लाघवं कृतं जैनेन्द्रकर्त्रा तत्र तत्र महावृत्तौ तदनावश्यकत्वं च समर्थितम्।

(१२) अनेकान्तसिद्धान्तास्वीकारेऽर्थसिद्ध्यभाववत् शब्दसिद्धिरपि न संभवतीति आ शास्त्रपरिसमाप्तेः "सिद्धिरनेकान्तात्" इति महाधिकारो देवेन दर्शितो ग्रन्थारम्भे एव। तदुपयोगश्च कारकादिप्रकरणेषु दर्शितः। तदनुकृत्य श्रीहेमचन्द्रेणापि 'सिद्धिः स्याद्वादात्' इत्युक्तम्। एवं श्रीदेवनन्दिना शब्दशास्त्रेपि जैनसिद्धान्तवादस्य जीव इव स्याद्वादः सूपयोजितः सादरं विदुषां हृदि निधातुम्। इति दिक्।

## सूत्रकारस्य परिचयः।

एतद्ग्रन्थकर्तुः श्रीमद्देवनन्दिनः पूज्यपादादीन्यपि नामान्तराणि-सन्ति। तत्कृता अन्येऽपि सर्वार्थसिद्धिप्रभृतयो निबन्धा बहव उपलभ्यन्ते। 'पूज्यपादेन भाषितम्' इति स्वनामाङ्किता बहवो वैद्यकश्लोका अप्युपलभ्यन्ते खण्डशो यत्र तत्र।

महिशूरराजधान्यां प्रकाशितो राजतरङ्गिणी नामैतिहासिकग्रन्थोस्ति, तस्मिन् 'पादलिप्ताचार्य एको महाविद्वान् रसायनादिविषयवेत्ता विक्रमसंवत्सराणां पञ्चमशताब्द्यामासीत्। तच्छिष्यः सिद्धनागार्जुननामा बभूव। सोपि रसायनशास्त्रपारं प्राप्त आसीत्। पादलेपं कृत्वा गगनतलेन यथेष्टं स विहरति स्म इति पादलिप्ताचार्यनाम्ना जैनो नागार्जुनगुरुः प्रसिद्धिमाप।' इत्याशयोल्लेखो वर्तते। एतादृश एवाभिप्रायः कर्णाटभाषायां पद्यबद्धेन प्रसिद्धेन पूज्यपादचरितेनापि प्रकटो भवति। तच्चरिते 'नागार्जुनः पूज्यपादस्य शिष्यो भागिनेयश्च' इति निर्दिष्टम्। पूज्यपादसमीपे नागार्जुनो रसव्याकरणादिशास्त्रेष्वधीतीति व्यावर्णनं लभ्यते। तादृशं प्रतिबुद्धं शिष्यमुपलभ्य पूज्यपादेन

पाणिनिव्याकरणं सुव्यवस्थापितं व्याख्यावार्तिकादिविशेषोपस्कारं कृत्वा इति च तच्चरिते एव लिखितमस्ति ।

श्रीपूज्यपादसंबन्धे इत्थं प्राचीनैरुपश्लोकितम्—

" यो देवनन्दी प्रथमाभिधानो बुद्ध्या महत्या स जिनेन्द्रबुद्धिः ।
श्रीपूज्यपादोऽजनि देवताभिर्यत्पूजितं पादयुगं यदीयम् ॥
जैनेन्द्रं निजशब्दभागमतुलं सर्वार्थसिद्धिः परा,
सिद्धान्ते निपुणत्वमुद्धकवितां जैनाभिषेकः स्वकः ।
छन्दः सूक्ष्मधियं समाधिशतकं स्वास्थ्यं यदीयं विदा-
माख्यातीह स पूज्यपादमुनिपः पूज्यो मुनीनां गणे " ॥

इति ।

सोमदेवस्तु ' अनुपूज्यपादं वैयाकरणाः ' इति स्तौति स्म शब्दार्णवचन्द्रिकायाम् ।

अस्मिन् जैनेन्द्रव्याकरणे,

**राद्भूतबलेः ॥ ३ । ४ । ८३ ॥**
**गुणे श्रीदत्तस्यास्त्रियाम् ॥ १ । ४ । ३४ ॥**
**कृवृषिमृजां यशोभद्रस्य ॥ २ । १ । ९९ ॥**
**रात्रेः कृति प्रभाचन्द्रस्य ॥ ४ । ३ । १८० ॥**
**वेत्तेः सिद्धसेनस्य ॥ ५ । १ । ७ ॥**
**चतुष्टयं समन्तभद्रस्य ॥ ५ । ४ । १४० ॥**

इति षण्णां महावैयाकरणानां नामानि आदरार्थं संगृहीतानि । एषु मध्ये भूतबलिविरचितः सिद्धान्तग्रन्थोस्ति प्रसिद्धः । प्रभाचन्द्रकृतौ न्यायकुमुदचन्द्र-प्रमेयकमलमार्तण्डनामानौ द्वौ न्यायग्रन्थौ स्तः । समन्तभद्रभगवत्कृतास्तु आप्तमीमांसा-गन्धहस्तिमहाभाष्य-जिनचतुर्विंशतिस्तव-सिद्धान्तग्रन्थटीकाप्रभृतयो बहवो ग्रन्थाः सन्ति । सिद्धसेनस्तु न्यायावताराद्यिग्रन्थकर्तैव भवेत् । सोपि प्रसिद्ध एव । यशोभद्रश्रीदत्तकृतास्तु नोपलभ्यन्ते केचन ग्रन्थाः । सामन्तभद्रीयादयोपि ये ग्रन्थास्तेषु व्याकरणग्रन्थो न लभ्यते कश्चन । को हि जानीयाद्यदेभि-

र्व्याकरणरचना कृता नवेति । केवलमादरार्थमेव वा नामान्येषामगृहीद्ग्रन्थकर्ता श्री-देवनन्दी । वैदुष्यं त्वेतेषां लोकोत्तरमासीदिति ग्रन्थदर्शनेन निर्विवादीभवति विदुषां चेतः । "यशः सामन्तभद्रीयं मूर्ध्नि चूडामणीयते ॥ प्रभेन्दुवचनोदारचन्द्रिका प्रसरे सति । मादृशाः क्व नु गण्यन्ते ज्योतिरिङ्गणसन्निभाः ॥ कवयः सिद्धसेनाद्या वयं तु कवयो मताः" ॥ इत्यादिबहुभिर्वचनैरुपरिष्ठाः कवयः स्तूयन्ते कविभिर्जैनैः ।

देवनन्दिभिरुल्लिखितनामा प्रभाचन्द्रः प्रमेयकमलमार्तण्डग्रन्थकर्तैवान्यो वेति संशीतिपदे स्थिता वयं, यतोस्य मार्तण्डकर्तुः कालोर्वाचीनः । देवनन्दी तु चतुर्थीं वा पञ्चमीं वा विक्रमशताब्दीं स्वजन्मनाऽलंचकारेति निर्णीतप्रायमेतत् ।

**श्रीपद्मनन्दिसैद्धान्तशिष्योनेकगुणालयः ।**
**प्रभाचन्द्रश्चिरं जीयाद्रत्ननन्दिपदे रतः ॥**

एतस्मिन्पद्ये पद्मनन्दिशिष्यः प्रभाचन्द्र इत्युक्तम् । किंच, "स **श्रीप्रभाचन्द्रो गोपनन्दिना** सूरिणा सहाध्येष्ट यस्य पादौ धारानगराधिपतिः श्रीभोजराजः समपूजयत्" । एवं शिलालेखपुस्तके प्रभाचन्द्रपरिचयो दत्तः । "का हेतौ" इत्यादिजैनेन्द्रवचनान्यपि प्रभाचन्द्रकृते प्रमेयकमलमार्तण्डग्रन्थे दृष्टिपथमायान्ति । अतो यदि एष एव प्रभाचन्द्रो देवनन्दिनोल्लिखितस्तर्हि समकालिकावेव देवनन्दी प्रभाचन्द्रश्च । अन्यो वा देवनन्द्युल्लिखितः प्रभाचन्द्रो भवेत् मार्तण्डकर्तुरस्मात् । अस्य प्रभाचन्द्रस्य कालस्तु अकलङ्ककालादप्यर्वाचीनः । कुतः ? यतः, प्रभाचन्द्रेण माणिक्यनन्दिकृतसूत्राणामुपरि मार्तण्डनाम्नी टीका कृता । माणिक्यनन्दिना तु,

**"अकलङ्कवचोम्भोधेरुद्दध्रे येन धीमता ।**
**न्यायविद्यामृतं तस्मै नमो माणिक्यनन्दिने ॥"**

एतत्पद्याधारादकलङ्कवचनान्युद्दध्रिरे । अकलङ्कदेवास्तु विक्रमस्याष्टमशताब्द्यां बभूवुः । एवं पौर्वापर्यविलोकनेन सोन्य एव प्रभाचन्द्रः

स्यायो देवनन्दिना उल्लिखित आर्मीडितीहते स्वीकर्तुं मनः । देवनन्दी तु पञ्चमशताब्द्यां जात इति तच्चरितादेव निर्णीयते । किं च, अकलङ्कादिभिस्तद्वचनान्युद्धृतानि, अतोऽष्टमशताब्द्यास्तु प्रागेव देवनन्दी जात इति स्थिरीभवति ।

## प्रक्रियाया आधारः—

एतज्जैनेन्द्रस्योपरि महावृत्तिर्न्यासश्चेति द्वौ टीकाग्रन्थावुपलभ्येते । महावृत्तिस्तत्र षोडशसहस्रीं ग्रन्थप्रमाणमावहति । न्यासप्रमाणं त्वनुष्टुप्प्रमाणेन त्रिंशत्सहस्रमात्रं भवेत् ।

इयं प्रक्रिया जैनेन्द्रमहावृत्तिगतवचनान्यादाय कृता अतः प्रमाणमिति जानन्तु सन्तः । एतत्प्रक्रियानिर्माणे सौलभ्यं स्यादिति मनसि संचिन्त्य अस्माभिः सिद्धहैमशब्दानुशासनं, शब्दार्णवः, शाकटायनापरनाम शब्दानुशासनं, कलापव्याकरणं, चन्द्रिकाव्याकरणं मुग्धबोधश्चेति व्याकरणग्रन्था अवलोकिताः । पाणिनीयटीकाग्रन्थास्तु कतिपये प्रथमत एवाभ्यस्ताः । तेषु सर्वेष्वपि मध्ये सिद्धान्तकौमुद्या रचनाशैलीं विशेषत आदरकोटीमागतां ज्ञात्वा तच्छैलीमेवात्र प्रक्रियायामवतार्य कृतवानहमेनां प्रक्रियाम् ।

## जैनेन्द्रस्योल्लेखकर्तारः—

" नयश्च नयौ च नयाश्च नया इत्येकशेषस्य स्वाभाविकस्याभिधाने दर्शनात् केषांचित्तथा वचनोपलम्भाच्च न विरुध्यते " । इति विद्यानन्दस्वामिना श्लोकवार्तिकस्य प्रथमाध्याये नयप्रकरणे उक्तम् । स्वाभाविकत्वादभिधानस्यैकशेषानारम्भ इत्युक्तं हि वचनं जैनेन्द्रस्य प्रथमाध्यायप्रथमपादान्ते लभ्यते ।

आप्तमीमांसालङ्कारेऽष्टसहस्रीनाम्नि द्वात्रिंशे शततमे पृष्ठे " वर्णे कर्मेत्युपसंख्यानात् " इति वचनमुद्धृतम् । एतदपि वचनं जैनेन्द्रस्य महावृत्तिनाम्नटीकाग्रन्थस्य कारकप्रकरणे उक्तम् ।

अकलङ्कदेवाश्च तत्त्वार्थवार्तिकालङ्कारे प्रथमाध्यायस्यैकादशसूत्रव्याख्यायां 'सर्वादिः सर्वनाम, टिदादिः' इति वचनद्वयमुद्दभुः । एतद्द्वयवचनमपि जैनेन्द्रस्यैव । 'करणाधिकरणयोः । २ । ३ । ९९ ।' इति चोद्धृतं तत्रैव वचनम् ।

श्रीमदाशाधरः स्वोपज्ञेऽनगारधर्मालङ्कारे सप्तमाध्यायस्य चतुर्विंशश्लोकव्याख्याने "स्तोके प्रतिना । १ । ३ । ७ ।, भार्थे ।१।४।१४।" इति वचनद्वयमुद्दध्रे ।

श्रीसोमदेवविरचितशब्दार्णवस्य चन्द्रिकानाम्नि टीकाग्रन्थे 'आद्यावुपज्ञोपक्रमम् । १।४।११४ ।' एतत्सूत्रव्याख्याने 'देवोपज्ञमनेकशेषं व्याकरणम्' इत्युदाहृतमेकशेषप्रकरणनिषेधकस्य व्याकरणस्य देवनन्दिकृतत्वेन । एकशेषनिषेधो ह्यत्रैव व्याकरणे ।

षट्प्राभृतटीकायां चतुर्थे दर्शनाधिकारे "दंसेदि मोक्खमग्गे" इत्यादिगाथाव्याख्याने "कृत्ययुटोऽन्यत्रापि" इति जैनेन्द्रसूत्रं प्रमाणत्वेनोद्धृतं श्रीश्रुतसागरेण ।

वर्धमानेन कविना स्वोपज्ञे गणरत्नमहोदधौ देवनन्दिकृतत्वेन जैनेन्द्रस्योल्लेखोऽष्टसु महाव्याकरणेषु मध्ये कृतः ।

## प्रक्रियाप्रयोजनम्—

अस्य व्याकरणस्य पठनपाठनप्रचारः पूर्वमासीत् । अधुना पुनरपि तदुज्जीवयितुं प्रक्रियामिमां कृतवानहम् ।सूत्रपाठक्रमेणाधीते व्याकरणे न तथा सुखबोधो जायते इति बहूनां मतम् । अत एवास्य व्याकरणस्यापि प्रक्रिया स्याच्चर्हि प्रचारमायादिदं व्याकरणम् । इति मनसि कृत्य कृतेयं प्रक्रिया प्रमादाज्ञानवशात्स्खलितं संशोधयितुमौद्धत्यं च परिहर्तुं प्रार्थये पण्डितान् । यत ,

सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।

तथापि,

परस्य तुच्छेपि परोनुरागो
महत्यपि स्वस्य गुणे न तोषः ।
एवंविधो यस्य मनोविवेकः
किं प्रार्थ्यते सोत्र हिताय साधुः ॥

( श्री महाकविहरिश्चन्द्रः ).

गुणानगृह्णन् सुजनो न निर्वृत्तिं
प्रयाति दोषानवदन्न दुर्जनः ।
चिरन्तनाभ्यासनिबन्धनेरिता
गुणेषु दोषेषु च जायते मतिः ॥

( श्रीवीरनन्दी )

सन्तः सन्तु मम प्रसन्नमनसो वाचां विचारोद्यताः,
सूतेम्भः कमलानि तत्परिमलं वाता वितन्वन्ति यत् ।
किंवाभ्यर्थनयानया यदि गुणोऽस्त्यासां ततस्ते स्वयं,
कर्तारः प्रथनं न चेदथ यशः प्रत्यर्थिना तेन किम् ॥

( श्रीसोमप्रभः ).

किंच,

वर्णैः कृतानि चित्रं पदानि तु पदैः कृतानि वाक्यानि ।
वाक्यैः कृतं पवित्रं शास्त्रमिदं न पुनरस्माभिः ॥ ( अमृत. ).

यद्वा,

गुरूणामेव माहात्म्य यदपि स्वादु मद्वचः ।
तरूणां हि स्वभावोयं यत्फलं स्वादु जायते ॥ ( श्रीगुणभद्रः ).

## के मे गुरवः।

मम विद्यागुरवस्त्रय आसन् । प्रथमं तावत् साहित्यव्याकरणादिकं छपरा ग्रामसमीपपण्डितपुरग्रामवास्तव्यश्रीमत्पूज्यनाम–**चण्डीप्रसाद**–गुरुसकाशादधीतवानहम् । तदानीमेव श्रीमत्–**श्यामसुन्दराचार्या** अपि मेऽधीतशास्त्रचिन्तापका गुरुसदृशा एव आसन् । ततः प्रयाग-समीपवास्तव्यश्रीमत्पूज्यनामधेय **ठाकुरप्रसादाचार्य** समीपेऽधीतवान् ।

अन्ते च पूज्यनाम श्रीमद्–**गोपालदासगुरुवराणामन्ते**ऽन्तेवासी भूत्वा जैनशास्त्रमधीत्य, तदनुग्रहाल्लब्धात्मबोधोऽभूवमहम् ।

## कः प्रक्रिया-कारयिता ?

जैनेन्द्रव्याकरणस्य बृहतीं प्रक्रियामिमां कर्तुं त एव श्रीमद्–**गोपालदासेति** गृहीतशुभाभिधा गुरवो मां प्रेरयामासुः । तदादेशवशादेव मयेयं प्रक्रिया पाणिनीयव्याकरणस्य सिद्धान्तकौमुदीनाम्नीं प्रक्रियामनुसधाय कृता । निमित्तं त्वत्र मत्सहोदरोऽनुजो **नेमिचन्द्रनामा**, तत्कृतेह एतत्प्र-नियामकार्यम् । अधीयानः स एनां प्रक्रियां मत्साहाय्यमचीकरत् । यदादेशादिमां प्रक्रियां व्यधामहं तानेव गुरुवरान् सादरं समर्पि-तुकामोऽसकृदनुशोचे, यतस्तेऽद्य दिवंगताः ।

विदुषामनुचरो–वंशीधर

---

## जैनेन्द्रे याः संज्ञास्तत्स्थाने व्याकरणान्तरेषु काः ?

स्वम्–सवर्णसंज्ञा ।
स्फ –संयोग ।
मृत्–प्रातिपदिकम् ।
स –समास ।
ह –अव्ययीभाव ।
ष –तत्पुरुष ।
य –कर्मधारय ।
र –द्विगु ।
ब –बहुव्रीहि ।
वाक्–उपपदम् ।
हृत्–तद्धित ।
व्य –कृत्य ।
उप्–उक् ।
उचू–श्लु ।

उम्–लुप् ।
न्यद्–उपसर्जनम् ।
ग्र –ह्रस्व ।
दी –दीर्घ ।
घि –लघु ।
रु–गुरु ।
प –प्लुत ।
ऐप्–वृद्धि ।
एप्–गुण ।
दि –प्रगृह्यम् ।
भु –घु ।
त –निष्ठा ।
खु –सज्ञा ।
ग्नि–भावकर्म ।
ङ –अनुनासिकम् ।
धम्–सर्वनामस्थानम् ।
इल्–पद् ।
सर्वनाम–स्नि ( शब्दार्णवे ) ।
नि –सम्प्रसारणम् ।
खम्–लोप ।
उङ्–उपधा ।
दु –वृद्धम् ।
क्षि –अव्ययम् ।
धु –धातु ।
धि –अकर्मक ।
द –आत्मनेपदम् ।
मम्–परस्मैपदम् ।

न –उभयपदम् ।
सु–घि ।
गु –अङ्गम् ।
नि –निपात ।
गि –उपसर्गः ।
ति –गति ।
त्य –प्रत्यय ।
विभक्ती –विभक्ति ।
वा–प्रथमा ( वि० ) ।
इप्–द्वितीया ।
भा–तृतीया ।
अप्–चतुर्थी ।
का–पञ्चमी ।
ता–षष्ठी ।
ईप्–सप्तमी ।
द्यु–उत्तरपदम् ।
बोध्य–सबोधनम् ।
कि–सवृद्धि ।
नप्–नपुसकम् ,
ग –सार्वधातुकम् ।
अग –आर्धधातुकम् ।
द्रि –तद्राज ।
वृद्ध–गोत्रम् ।
च –अभ्यास ।
म्रि–आम्रेडितम् ।
थ –अभ्यस्तम् ।

# प्रकरणसूची.







श्रीवीतरागाय नमः ।

# श्रीजैनेन्द्रप्रक्रिया ।

## संज्ञाप्रकरणम् ।

—००—

श्रीजैनेन्द्रव्याकरणसूत्राणां बालबोधिनीम् ।
प्रक्रियां सरलां कुर्वे साधुशब्दप्रकाशिकाम् ॥१॥
लक्ष्मीरात्यन्तिकी यस्य निरवद्यावभासते ।
देवनन्दितपूजेशे नमस्तस्मै स्वयम्भुवे ॥ २ ॥

लोके साधूनां शब्दानामन्वाख्यानार्थं शास्त्रमारभ्यते । अन्वाख्यानं च प्रकृत्यादिविभागेन सामान्यविशेषलक्षणेन शब्दानां व्युत्पादनम् । तच्च शब्दार्थसम्बन्धमन्तरेण न सम्भवति । शब्दार्थसम्बन्धसिद्धिश्चानेकान्ताधीनेत्यत आहादिमं सूत्रम् ।

**सिद्धिरनेकान्तात्** । १ । १ । १ । आ शास्त्रपरिसमाप्तेरधिकारोऽयम् । प्रकृत्यादिविभागेन व्यवहाररूपा श्रोत्रग्राह्यतया परमार्थतोपेता शब्दानां सिद्धिरनेकान्ताद्भवति । यथा स्वरूपपररूपाद्यपेक्षयास्तित्वनास्तित्वाद्यनेकस्वभावत्वात्पदार्थानां सिद्धिस्तथाऽकारादीनां साधर्म्यवैधर्म्यात्मकेऽनेकान्ते सत्येव तुल्यस्थानकरणत्वेन स्वसंज्ञाव्यवहारः सिद्ध्यति ।

**अइउण् १ । ऋलृक् २ । एओङ् ३ । ऐऔच् ४ । हयवरट् ५ । लण् ६ । ञमङणनम् ७ । झभञ् ८ । घढधष् ९ । जबगडदश् १० । खफछठथचटतव् । ११ । कपय् । १२ । शषसर् १३ । हल्[1] । १४** इति प्रत्याहारसूत्राणि ।

**कार्यार्थोऽप्रयोगीत् । १ २ । ३ ।** शास्त्रेऽन्यस्य कार्यार्थमाश्रीयते प्रयोगे च न श्रूयते य स इत्सञ्ज्ञो भवति । अन्वर्था चेयमित् सञ्ज्ञा । एति गच्छति नश्यतीतीत् । इत्यनेनैव तस्य नाशसम्भवान्न शास्त्रान्तरेण स विधीयते । इति णादीनामित्सञ्ज्ञायाम् ।

**अन्त्येनेतादिः । १ । १ । ७३ ।** अन्त्येनेत्सञ्ज्ञकेन गृह्यमाण आदिस्तन्मध्यपतितानामात्मना सह ग्राहको भवति । यथाऽणिति अइउवर्णानां सञ्ज्ञा ।

**आकालोऽच् प्रदीपः । १ । १ । ११ ।** अ आ आ३ इत्येवकाल इव कालो यस्य सोऽच् यथासंख्य प्र दी प इत्येव सञ्ज्ञो भवति । स प्रत्येकमुदात्तानुदात्तस्वरितभेदेन त्रिधा ।

**उच्चनीचावुदात्तानुदात्तौ । १ । १ । १३ ।** ताल्वादिस्थाने ऊर्ध्वभागनिष्पन्नोऽजुदात्तसञ्ज्ञो भवति । नीचभागनिष्पन्नोऽनुदात्त ।

**व्यामिश्रः स्वरितः । १ । १ । १४ ।** उच्चनीचगुणव्यामिश्रोऽच् स्वरितसञ्ज्ञो भवति । स नवविधोपि प्रत्येकं ङसञ्ज्ञकोऽङसञ्ज्ञक इति द्विविध ।

---

१ हकारो द्विरुपात्तोऽयमटि यद्यपि वाञ्छता । अर्हणाधुक्षदित्यत्र द्वय सिद्ध भविष्यति ॥ १ ॥

**नासिक्यो ङः** । १ । १ । ४ । नासिकायां भवो वर्णो ङसंज्ञो भवति । तदेवं अइउऋऌ एषां प्रत्येकमष्टादश भेदाः । सन्ध्यक्षराणां श्रा न सन्ति । तान्यतो द्वादशप्रभेदानि ।

**सस्थानाक्रियं स्वम्** । १ । १ । २ । ताल्वादिस्थानमाभ्यन्तरक्रिया च यदीये यदीयाभ्यां तुल्ये तन्मिथः स्वसंज्ञं भवति । रेफोष्मणां स्वा न सन्ति । अकुहविसर्जनीयाः कण्ठ्याः । 'जिह्वामूलीयो जिह्व्यः । इशयच्चेदैतस्तालव्याः । उप्वोदौदुपध्मानीया ओष्ठ्याः । वकारो दन्तोष्ठ्यः । ऋटुरषा मूर्धन्याः । ऌतुलसा दन्त्याः । नासि'क्यो ऽनुस्वारः । इति स्थानानि ।

क्रिया यत्न । स द्वेधा आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्धा स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतभेदात् । तत्र स्पृष्टकरणा वर्गाः । ईषत्स्पृष्टकरणा अन्तस्थाः । ईषद्विवृतकरणा ऊष्माणः । विवृतकरणाः स्वराः । बाह्यश्चाष्टविधः—विवारः, संवारः, श्वासो, नादो, घोषो, अघोषो, अल्पप्राणो, महाप्राण इति भेदात् । वर्गाणां प्रथमद्वितीयाः शषसा विसर्गश्चैषां श्वासो ऽघोषो विवारश्च । वर्गाणां तृतीयचतुर्थपञ्चमा हकारो यणश्चैषां संवारो, नादो, घोषश्च । वर्गाणां प्रथमतृतीयपञ्चमा यरलवाश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कवर्गादयः पञ्च वर्गाः । यरलवा अन्तस्थाः । शषसहा ऊष्माणः । अचः स्वराः । अं अः इत्यचः परावऽनुस्वारविसर्गौ । कखाभ्यां प्रागर्धविसर्गो-

---

१ धमहवर्ते द्वौ ।

च्चारणं जिह्वामूलीयः । पफाभ्यां प्रागर्धविसर्गोच्चारणं उपध्मानीयः । * **ऋकारऌकारयोः स्वसंज्ञा वक्तव्या ।**

**अणुदित्स्वस्यात्मनाऽभाव्योऽतपरः।१।१।७२।** अणुदिच्च गृह्यमाणः स्वस्य ग्राहको भवत्यात्मना सह, भाव्यमानं तपरं च वर्जयित्वा । इदमेवाण् परेण णकारेण । तिदिति सिद्धे परग्रहणमुभयार्थम् । तः परो यस्मात्स तपरः, तादपि परस्तपर इति । कुचुटुतुपु एते उदितः । तदित्थम् अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋ इति षट्त्रिंशतः । तथा ऌकारोपि । एचो द्वादशानाम् । यवला द्विप्रभेदा नासिक्येतरभेदात् । तेन द्वयोर्द्वयोः संज्ञा ।

**आदैगैप् । १ । १ । १५ ।** आदैचां प्रत्येकमैबित्येपा संज्ञा भवति ।

**अदेङेप् । १ । १ । १६ ।** अदेङां प्रत्येकमेबित्येपा संज्ञा भवति ।

**भूवादयो धुः । १ । २ । १ ।** अर्थोपलक्षिता भू इत्येवमादयो धुसंज्ञा भवन्ति ।

**नि. । १ । २ । १२६ ।** अयमधिकार. प्राग्घोस्तेरित्यत. प्राग् वेदितव्य ।

**चादिरसत्त्वे । १ । २ । १२७ ।** सीदतोऽस्मिन् लिङ्गसख्ये तत्सद् द्रव्यमित्यर्थः। चादयो निसंज्ञा भवन्ति न चेरसत्त्वे वर्त्तन्ते ।

**प्रादिः । १ । २ । १२८ ।** प्रादयो निसंज्ञा भवन्त्यसत्त्वे। प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः ।

**क्रियायोगे गिः । १ । २ । १२९ ।** क्रियायोगे प्रादयो गिसंज्ञा भवन्ति ।

**तिः । १ । २ । १३० ।** क्रियायोगे तिसंज्ञाश्च प्रादयो भवन्ति ।

**येनालि विधिस्तदन्ताद्योः । १ । १ । ६७ ।** येन शब्देन यो विधिर्विधीयते स तदन्तस्य भवति, अलि यो विधि. स तदादौ भवति ।

**सुम्मिङन्तं पदम् । १ । २ । १०२ ।** सुबन्तं मिङन्तं च शब्दरूपं पदसंज्ञं भवति ।

**हलोऽनन्तरा स्फः । १ । १ । ३ ।** अज्भिरव्यवहिता हलः स्फसंज्ञा भवन्ति ।

**म्रो घि च । १ । २ । ९८ ।** म्रो घिसंज्ञो भवति ।

**स्फे रुः । १ । २ । ९९ ।** स्फसंज्ञके परत. म्रो रुसंज्ञो भवति ।

**दीः । १ । २ । १०० ।** दश्च रुसंज्ञो भवति ।

इति संज्ञाप्रकरणम् ।

---

## अथ परिभाषाप्रकरणम् ।

**इकस्तौ । १ । १ । १७ ।** ऐपौ संज्ञया विधीयमानौ इक एव स्थाने भवतः ।

**अचश्च । १ । १ । १२ ।** प्रदीपसंज्ञकाः संज्ञया विधीयमाना अच एव स्थाने भवन्ति ।

**टिदादिः । १ । १ । ५३ ।** टिद्यः स तानिर्दिष्टस्यादिर्भवति।

**किदन्तः । १ । १ । ५४** किद्यः स तानिर्दिष्टस्यान्तो भवति।

**परोऽचो मित् । १ । १ । ५५ ।** अन्त इति वर्तते। मिद्यः स तानिर्दिष्टस्यान्त्यादचः परो भवति । अन्तग्रहणानुवृत्तेर्हलन्तस्यापि भवति। ता स्थाने, त्यः पर इत्यनयोरपवादोऽयम्।

**ता स्थाने । १ । १ ४६ ।** येयमनुसूत्रमुच्चारिता ता सा स्थाने एव ज्ञातव्या । स्वस्वाम्यादिबहुषु तार्थेषु प्राप्तेष्वन्यार्थसम्प्रत्ययो मा भूदिति नियम्यते । तेनानन्तरसमीपादयस्तार्था निवार्तिता भवन्ति ।

**स्थानेऽन्तरतमः । १ । १ । ४७ ।** अन्तरः=प्रत्यासन्नः। स्थाने प्राप्यमाणानामन्तरतम एवादेशो भवति । आन्तर्यं च शब्दस्य स्थानार्थगुणप्रमाणतः । यत्रानेकविधमान्तर्यं तत्र स्थानकृतमेवान्तर्यं बलीयः।

**ईप्केत्यव्यवाये पूर्वपरयोः । १ । १ । ६० ।** ईपा यत्र निर्दिश्यते तत्र पूर्वस्याव्यवहितस्य कार्यं भवति। कया यत्र निर्दिश्यते तत्र परस्याव्यवहितस्य कार्यं भवति ।

**अन्तेऽलः । १ । १ । ४९ ।** तानिर्दिष्टस्य यो विधिरुच्यते सोऽन्ते वर्तमानस्यालः स्थाने भवति ।

**ङित् । १ । १ । ५० ।** ङितः सर्वेऽनेकालः । ङिद्य आदेशोऽनेकाल् सोन्तेऽलः स्थाने भवति । अन्तेऽल इत्येव

सिद्धे इदं सूत्रं नियमार्थ-ङिदेवानेकाल्ऽन्त्यस्य भवतीति । तेनान्यो ऽनेकाल् सर्वस्येति सिद्धम् ।

**परस्यादेः । १ । १ । ५१ ।** परस्य क्रियमाणं कार्यं शिष्यमाणमादेरलः स्थाने वेदितव्यम् ।

**शित्सर्वस्य । १ । १ । ५२ ।** शिदादेशः सर्वस्य स्थाने वेदितव्यः ।

**स्वरितेनाधिकारः । १ । २ । ५ ।** स्वरितेन लिङ्गेनाधिकारो वेदितव्यः । आचार्यप्रतिज्ञया लक्ष्यं स्वरितत्वम् । परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ।

## इति परिभाषाप्रकरणम् ।

—:o—

## अथ अच्सन्धिः ।

**सन्धौ । ४ । ३ । ६० ।** अधिकारोऽयम् । संश्लेष सन्निकर्षो वा सन्धिः ।

**अचीको यण् । ४ । ३ । ६५ ।** अचि परत इकः स्थाने यणादेशो भवति सन्धिविषये । दधि आनय इति स्थिते स्थानत आन्तर्यादिकारस्य स्थाने यकारः । दध्य् आनय इति जाते ।

**अनचि । ५ । ४ । १२७ ।** अच इति वर्तते । अच उत्तरस्य यरो विभाषया द्वे भवतोऽचि तु न । इति धकारस्य द्वित्वम् । दध्ध्य् आनय इति जाते ।

**झलां जश् झशि। ८। ४। १२८।** झलां वर्णानां जशादेशो भवति झशि परतः। इति पूर्वधकारस्य दकारः।

**नाशः खम्। १। १। ६१।** प्रसक्तस्य नाशः खसंज्ञो भवति।

**स्फान्तस्य खम्। ५। ३। ४१।** स्फान्तस्य पदस्य खं भवति। इति यस्य खं प्राप्तम् "असिद्धं बहिरङ्गमन्तरङ्गे। अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं स्यात्" इति न भवति। दद्ध्यानय। दध्यानय। * **मयः परस्य यणोचि विकल्पः।** तेन यकारस्य द्वित्वम्। दध्य्यानय। दद्ध्य्यानय। एवं मध्वपनय। भर्त्रर्थः। लाकृतिः।

**अचो रहाद् द्वे। ५। ४। १२६।** अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे वा भवतः। गिर्य्यारोहणम्। * **शरोचि द्वित्वं न।** आदर्शः। वर्षति।

**एचोऽयवायावः। ४। ३। ६६।** एचः स्थाने अय्, अव्, आय्, आव् इत्येते यथासंख्यमादेशा भवन्ति। चयनम्। लवनम्। चायकः। लावकः।

**यि स्ये। ४। ३। ६७।** यकारादौ स्ये ऽयादय आदेशा भवन्ति। गव्यं पयः। नाव्यो ह्रदः। स्ये किम्? गो यानम्। * **गोर्यूतावध्वपरिमाणे।** गव्यूतिः। असौ उद्धरतीत्यत्राऽऽयादेशे कृते।

**व्योः खं वा। ५। ४। ५।** वकारयकारयोरशि परतो वा खं भवति। इति खे कृते।

**पूर्वत्रासिद्धम्** ।५। ३ ।२७। एतदधिकृतमा शास्त्रपरिसमाप्ते । येय चतुरध्यायी सार्द्धद्विपादातिक्रान्ता एतस्यामय सार्धैकपादोऽसिद्धवद् भवति । सार्द्धैकपादेपि उत्तरो योग पूर्वं प्रत्यसिद्धो भवति । इत्यसिद्धत्वान्न एप् । अस्मा उद्धरति । अस्मायुद्धरति ।

**क्षिज्योः** । ४ । ३ । ६८ । एतयोरचोऽयादेशो भवति यि त्ये । क्षेतु शक्य क्षय्य पापम् । जेतु शक्यो जय्य । पूर्वेण सिद्धे नियमार्थोयमारम्भ - धुपु यि त्ये क्षिज्योरेव नान्यस्य । चेयम् । नेयम् । अनेन तुल्यजातीययोरेकारैकारयोरेव निवृत्ति । तेन घोरोकारौकारयोरऽवाऽऽवादेशयोर्न निषेध । पव्यम् । अवश्यपाव्यम् ।

**शक्तौ** । ४ । ३ । ६९ । अयमपि नियम । शक्तावेव क्षिज्योरयादेशो नान्यस्मिन्नर्थे । तेन क्षेतुमर्हं क्षेयम् । जेतुमर्हं जेयम् ।

**धोस्तास्मिन्नेव** । ४ । ३ । ७० । धोर्यादित्यानिमित्त एव य एत् तस्यायादयो भवन्ति । लव्यम् । अवश्यलाव्यम् । धो किम् ? मृदो नियमो मा भूत् । माण्डव्य । तन्निमित्तस्येति किम् ? श्रोयते । औयत । लौयमानि । एवकार इष्टतोवधारणार्थे । तेन धोरेव तस्मिन्निति नियमो मा भूत् । एव हि बाभ्रव्य इति न स्यात् ।

**क्रय्यः स्वार्थे** । ४ । ३ । ७१ । क्रय्य इति निपात्यते

**झलां जश् झशि । ८ । ४ । १२८ ।** झलां वर्णानां जशादेशो भवति झशि परतः । इति पूर्वधकारस्य दकारः ।

**नाशः खम् । १ । १ । ६१ ।** प्रसक्तस्य नाशः खसंज्ञो भवति ।

**स्फान्तस्य खम् । ५ । ३ । ४१ ।** स्फान्तस्य पदस्य खं भवति । इति यस्य खं प्राप्तम् "असिद्धं बहिरङ्गमन्तरङ्गे । अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं स्यात्" इति न भवति । दद्ध्यानय । दध्यानय । * **मयः परस्य यणोचि विकल्पः ।** तेन यकारस्य द्वित्वम् । दध्य्यानय । दद्ध्य्यानय । एवं मध्वपनय । मन्वर्थः । लाकृतिः ।

**अचो रहाद् द्वे । ५ । ४ । १२६ ।** अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे वा भवतः । गिर्य्यारोहणम् । * **शरोचि द्वित्वं न ।** आदर्शः । वर्षति ।

**एचोऽयवायावः । ४ । ३ । ६६ ।** एचः स्थाने अय्, अव्, आय्, आव् इत्येते यथासंख्यमादेशा भवन्ति । चयनम् । लवनम् । चायकः । लावकः ।

**यि त्ये । ४ । ३ । ६७ ।** यकारादौ त्येऽयाद्य आदेशा भवन्ति । गव्यं पयः । नाव्यो ह्रदः । त्ये किम् ? गो यानम् । * **गोर्यूतावध्वपरिमाणे ।** गव्यूतिः । असै उद्धरतीत्यत्राऽऽयादेशे कृते ।

**व्योः खं वा । ५ । ४ । ५ ।** वकारयकारयोरशि परतो वा खं भवति । इति खे कृते ।

**पूर्वत्रासिद्धम्** ।५।३।२७। एतदधिकृतंमा शास्त्रपरिसमाप्तेः। येयं चतुरध्यायी सार्द्धद्विपादातिक्रान्ता एतस्यामयं सार्धैकपादोऽसिद्धवद् भवति। सार्द्धैकपादेपि उत्तरो योगः पूर्वं प्रत्यसिद्धो भवति। इत्यसिद्धत्वान्न एप्। अस्मा उद्धरति। अस्मायुद्धरति।

**क्षिज्योः** । ४ । ३ । ६८ । एतयोरचोऽयादेशो भवति यि त्ये। क्षेतुं शक्यं क्षय्यं पापम्। जेतुं शक्यो जय्यः। पूर्वेण सिद्धे नियमार्थोयमारम्भः- धुपु यि त्ये क्षिज्योरेव नान्यस्य। चेयम्। नेयम्। अनेन तुल्यजातीययोरेकारैकारयोरेव निवृत्तिः। तेन घोरोकारौकारयोरवाऽऽवादेशयोर्न निषेधः। पव्यम्। अवश्यपाव्यम्।

**शक्तौ** । ४ । ३ । ६९ । अयमपि नियमः। शक्तावेव क्षिज्योरयादेशो नान्यस्मिन्नर्थे। तेन क्षेतुमर्हं क्षेयम्। जेतुमर्हं जेयम्।

**धोस्तास्मिन्नेव** । ४ । ३ । ७० । धोर्यादित्यनिमित्त एव य एच् तस्यायादयो भवन्ति। लव्यम्। अवश्यलाव्यम्। धोः किम्? मृदो नियमो मा भूत्। माण्डव्यः। तन्निमित्तस्येति किम्? ओयते। औयत। लौयमानिः। एवकार इष्टतोवधारणार्थः। तेन धोरेव तस्मिन्निति नियमो मा भूत्। एवं हि बाभ्रव्य इति न स्यात्।

**क्रय्यः स्वार्थे** । ४ । ३ । ७१ । क्रय्य इति निपात्यते

परमिति सिद्धे रूपग्रहणादिदं लभ्यते । * **एवे चानियोगे पररूपम्** । इहेव । अद्येव । अनियोगे किम् ? इहैव भवानध्यगात् । ***शकन्ध्वादिषु पररूपम्** । शक अन्धुः, शकन्धुः । कर्क अन्धुः कर्कन्धुः । कुलटा । ***सीमन्तः केशवेशे** । सीमान्तोऽन्यत्र । ***ओत्वोष्ठयोः से वा पररूपम्** । स्थूलोतुः, स्थूलौतुः । बिम्बोष्ठी, बिम्बौष्ठी । से किम् ? वाक्ये मा भूत् । पश्यौष्ठम् ।

**ओमाङोः** । ४ । ३ । ८२ । गेरिति निवृत्तम् । अवर्णान्तादोमाङित्येतयोः परतः पररूपं भवति । का ओमित्यवोचत्, कोमित्यवोचत् ।

**तद्वत्** । ४ । ३ । ७३ । तयोरिव तद्वत् । तयोर्विधीयमानयोर्यत्कार्यं तत्कृतेऽप्येकादेशे भवतीत्यर्थः । अद्य आ ऊढा इत्यत्र गिध्वोर्यत्कार्यं तदन्तरङ्गमिति पूर्वमाङः परेण योगः । ततः पूर्वान्तवद्भावेनाङ्त्वमाश्रित्य पररूपम् अद्योढा ।

**डाजर्हस्येतावतः** । ४ । ३ । ८५ । डाजर्हस्य योऽच्छब्दस्तस्येतौ पररूपं भवति । पटत् इति, पटिति । नानर्थकेऽन्तेऽलो विधिरिति सर्वस्यातः पररूपम् । डाजर्हस्येति किम् ? जगदित्याह । श्रदिति । व्यक्तानुकरणौकाचौ डाचं नोत्पादयतः । इतौ किम् ? पटदत्र । अतः किम् ? छपिदिति ।

**परो भ्रिः** । ५ । ३ । २ । प्रकृतयोर्द्विरुक्तयोः परोऽवयवो भ्रिसंज्ञको भवति ।

**न प्रेस्तौ वा।४।३।८६।** प्रिसंज्ञकस्य योऽच्छन्दसस्येतौ पररूपं न भवति तकारस्य तु वा। पटत्पटेति। पक्षे—

**झलो जश्।५।४।५७।** पदान्ते वर्तमानस्य झलो जश् भवति। झलीति निवृत्तम्। पदमध्यार्थं झला जश् झशीति वर्तते। पटत्पटदिति।

**प्रौ डाचि नित्यम्।४।३।८७।** डाजन्ते प्रौ परे डाजर्हस्यातस्तकारस्य नित्यं पररूपं भवति। इदमेव ज्ञापकं टिखात्पूर्वं डाचीति द्वित्वम्। पटपटा भवति।

**स्वेऽको दीः।४।३।८८।** अकः स्वेऽचि परे पूर्वपरयोरेको दीर्भवति। लोकाग्रम्। विद्यान्तः। कवीन्द्रः। मधूदकम्। पितृषभः। स्वे किम्? दध्यत्र। अचि किम्? दधि शीतलम्।

**एङोऽति पदान्तात्।४।३।९९।** पूर्वोऽमीत्यत पूर्व इत्यनुवर्तते। एङः पदान्तादति परतो द्वयोरेकः पूर्वो भवति। मुनेऽनघ। साधोऽनघ। तपरकरणं किम्? पटवायाहि। पदान्तादिति किम्? मुनयः।

**गोरिन्द्रेऽवङ्।४।३।१०१।** गोरन्त्यस्येन्द्रस्थेऽचि परतोऽवङादेशो भवति। गवामिन्द्रो गोइन्द्रः गवेन्द्रः।

**विभाषाऽन्यत्र।४।३।१०२।** इन्द्रशब्दादन्यत्र शब्दे योऽच् तस्मिन्विभाषया गोरवङादेशो भवति। गवाग्रम्। गोऽग्रम्। विभाषाग्रहणादिह नित्यं भवति। गवाक्षः।

परतः । ऊँ इति । नासिक्यो दीसंज्ञकश्च ऊँ इति । यद्यप्यपठितोऽपि निसंज्ञकः संभवति तथापि तस्यैतावेव प्रयोगो यथा स्यादित्यारम्भः ।

**मयो वोऽच्युञः** । ५ । ४ । १५ । मयः परस्योञो वो वा भवत्यचि परे । शमु अत्र । शम्वत्र ।

**अन्त्याद्यचष्टिः** । १ । १ । ६५ । अच इति निर्धारणे ता । अचां योऽन्त्योऽच् तदादि शब्दरूपं टिसंज्ञं भवति ।

**वाक्यटेः पः** । ५ । ३ । ६० । वाक्यस्य टेः पो भवति । एषोऽधिकारः । वाक्यग्रहणं किम् ? अन्त्यस्य यथा स्यात् । पदाधिकारात् सर्वेषां पदानां मा भूत् । टेरिति किम् ? अचश्चेत्यऽनन्त्यस्याप्यचो यथा स्यात् । अन्यथाऽचा वाक्ये विशेष्यमाणे हलन्तस्य न स्यात् । अचो विशेष्यत्वे सर्वेषामचां स्यात् ।

**प्रत्यभिवादेऽशूद्रस्त्र्यसूयके** । ५ । ३ । ६१ । शूद्रस्त्रीअसूयकविषयवर्जिते प्रत्यभिवादे यद्वाक्यं तस्य टेः पो भवति । अभिवाद्यमानेन गुरुणा प्रयुक्तमाशीपूर्वकं प्रियहितयुक्तं वा प्रतिवचनं प्रत्यभिवादः । अभिवादये देवदत्तोऽहम् । भो आयुष्मानेधि देवदत्त ३ । अशूद्रस्त्र्यसूयक इति किम् ? अभिवादये तुपजकोऽहम् । भो आयुष्मानेधि तुपजक । अभिवादये गार्ग्यहम् । भो आयुष्मती भव गार्गि । असूयकोऽयमिति ज्ञाते तु कुत्रापि न । लोकव्यवहारात् प्रधाने कार्यसम्प्रत्ययाद्वा नामान्तस्य गोत्रान्तस्य चैव पविधिः । इह न भवति, देवदत्त कुशल्यसि । सर्व. पवि-

धिर्वा भवति । सा च व्यवस्थितविभाषा । तेन भोराजन्यविशाया । इन्द्रवर्माऽ३ भो ३ । इन्द्रवर्मा ऽ३ भो । आयुष्मानेधीन्द्रवर्म ३ न् । आयुष्मानेधीन्द्रवर्मन् । आयुष्मानेधीन्द्रपालित ३ । आयुष्मानेधीन्द्रपालित । भोशब्दस्याप्राप्ते राजन्यविशोर्गोत्रस्याप्राप्ते च विकल्पः ।

**दूराद्धूते । ५ । ३ । ६२ ॥** दूरादाह्वाने वर्तमानस्य वाक्यस्य टे पो भवति । आगच्छ भो देवदत्त ३ । दूरादिति किम् ? सन्निहिते मा भूत् । आगच्छ भो जिनदत्त । प्रयत्नविशेषेण आह्वाने यत्र शब्दः श्रूयते तद्दूरम् ।

**हैहेप्रयोगे हैहयोः । ५ । ३ । ६३ ॥** है हे इत्येतयोः प्रयोगे हैहयोः पो भवति दूराद्धूते । जिनदत्त है ३ । जिनदत्त हे ३ । पुनर्हैहयोर्ग्रहणं किम् ? अन्यस्य मा भूत् । प्रथमं हैहेग्रहणं किम् ? अनन्त्ययोरपि यथा स्यात् । अन्यथा वाक्यटेरेव प्राप्नोति ।

**अनृतोऽनन्त्यस्याप्येकैकस्य रोः । ५ । ३ । ६४ ॥** ऋकारवर्जितस्य रोरनन्त्यस्याप्यन्त्यस्यापि टेरेकैकस्य पो भवति । दे३वदत्त । देवद३त्त । देवदत्त३ । अनृत इति किम् ? कृष्ण मि३त्र । रोरिति किम् ? देवदत्तशब्दे वकारात्परस्य मा भूत् । एकैकग्रहणं पर्यायार्थम् ।

**ओमभ्यादाने । ५ । ३ । ६५ ।** अभ्यादानं प्रारम्भः । ओमित्येष शब्दोऽभ्यादाने पो भवति । ओ३मृषभं पवित्रं प्रणमते । अभ्यादान इति किम् ? ओं भो ददाति । अयमोंशब्दः प्रतिश्रवणे वर्त्तते ।

**वा हे पृष्टप्रत्युक्तौ । ५ । ३ । ९६ ॥** पृष्टप्रत्युक्तौ हे पो भवति वा । अकार्षीः कटं देवदत्त इति पृष्ट । अकार्षं हि ३ । अकार्षं हि । हेरिति किम् ? करोमि ननु । पृष्टप्रत्युक्ताविति किम् ? देवदत्त कटं करिष्यति हि । वेति योगविभाग । तेन सर्वे एव पविधिर्वा प्रयोक्तव्य ।

**विचार्ये पूर्वम् । ५ । ३ । ९७ ॥** विचार्ये पूर्वं पविधिमापद्यते । अहिर्नु ३, रज्जुर्नु । द्वयोर्बहूना वा वाक्याना पूर्वस्य टे पो भवति ।

**प्रतिश्रवणे ॥ ५ । ३ । ९८ ॥** प्रतिश्रवणे च वाक्यस्य टे पो भवति । प्रतिश्रवण श्रवणाभिमुख्य प्रतिज्ञानमभ्युपगमश्चा विशेषेण गृह्यते । श्रवणाभिमुख्ये देवदत्त भो किमकार्षीः ३ । प्रतिज्ञाने कृतक शब्दो भवितुमर्हति ३ । अभ्युपगमे भोज्य मे देहि भो, हत भो दास्यामि ३ ।

**पूजिते । ५ । ३ । ९९ ।** पूजिते च वाक्यस्य टे पो भवति । शोभन खल्वसि अग्निभूत ३ ।

**चिदित्युपमार्थे । ५ । ३ । १०० ।** चिदित्येतस्मिन्नुपमार्थे प्रयुज्यमाने वाक्यस्य टे पो भवति । अग्निचिद्भाया३त् । चिदिति किम् ? राजेव ब्रूयात् । अग्निर्माणवको भूयात् । इवशब्दस्य प्रयोगाप्रयोगयोरुपमार्थोऽस्ति न तु चिच्छब्दस्य । उपमार्थ इति किम् ? कथंचिद् ब्रवीषि । कुत्रेऽत्र चिच्छब्द । इतिकरण किम् ? । चिच्छब्दस्य मा भूत् । वाक्यटेर्यथा स्यात् ।

**कोपासूयासम्मतौ ओ वा । ५ । ३ । १०१ ।**
कोपासूयासम्मत्यर्थेषु ओ परत पो भवति वा । कोपे अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म । असूयायाम् । अभिरूपक ३ अभिरूपक रिक्त ते आभिरूप्यम् । सम्मतौ । अभिरूपक अभिरूपक शोभन खल्वसि ।

**क्षियाशी प्रैषेषु मिङाकाङ्क्षम् । ५ । ३ । १०२ ।**
क्षिया क्षेप । इष्टाशसनमाशी । असत्कारपूर्विका व्यापारणा प्रैष । क्षियादिषु मिङन्तमाकाङ्क्ष पविधिं लभते । स्वय ह रथेन याति ३ उपाध्याय पदातिं गमयति । आशिषि । तात तर्कं चाध्येषीष्ट ३ जैनेन्द्र च । प्रैषे । त्व ह पूर्वं ग्राम गच्छ ३ देवदत्तो दक्षिण गच्छतु । आकाङ्क्षमिति किम् ? दीर्घमायुरस्तु ।

**अनन्त्यस्यापि प्रश्नाख्यानयो ॥ ५ । ३ । १०३ ॥**
प्रश्ने आख्याने चानन्त्यस्यापि मिङन्तस्यान्त्यस्यापि यस्य कस्य चित्पदस्य टे पो भवति । अगम ३ पूर्वान् ग्रामान् । आख्याने । अगम ३म् पूर्वान् ग्रामा ३न् । अत्र सर्वेषामपि पदाना केचित्प मिच्छन्ति ।

**वाऽपवदितौ ॥ ४ । ३ । १०६ ॥** पसञ्ज्ञकस्यापव त्कार्यं वा भवतीतौ परे । देवदत्त ३इति । देवदत्तेति । क्वचिद नितावपि । राम३ इयमस्ति । रामेयमस्ति । वत्करणात्पकार्य प्रतिषेध । अप इत्युक्ते पस्यैव प्रषिषेध स्यात् । ततश्च अग्नी इति अत्र दिसञ्ज्ञाश्रये प्रकृतिभावे त्रिमात्रस्य श्रवण न स्यात् ।

**इत्** ॥ ४ । ३ । १०७ ॥ इदन्तः पोऽचि परेऽपवद्वा भवति । लुनिही३ इदम् । लुनिहीदम् ।

**एचोऽदेः पूर्वस्यात् परस्येदुतौ** ॥ ५ । ३ । १०४ ॥ आदिसंज्ञकस्य पदान्तस्यैचः पप्रसङ्गे पूर्वस्यार्द्धस्याऽऽकारः पो भवति परस्य चार्द्धस्येदुतौ भवतः प्रश्नान्तपूजितप्रत्यभिवादेषु । पदान्तस्यैचः पो भवतीति ज्ञापनार्थम् । प्रश्नान्ते । अगमः पूर्वान् ग्रामान् अग्निभूता ३ इ पटा ३ उ । पूजिते । शोभनः खल्वसि अग्निभूता ३ इ पटा ३ उ । प्रत्यभिवादे । आयुष्मानेधि अग्निभूता ३ इ पटा ३ उ । परिगणनं किम् ? दस्यो ३ दस्यो घातयिष्यामि त्वाम् । आगच्छ भो अग्निभूते ३ । पदान्तस्येति वचनादिह न भवति । भद्र कोसि गौरिति ।

**य्वावचि सन्धौ** ॥ ५ । ३ । १०५ ॥ अर्थवशाद्विभक्तिपरिणामः । इदुतोरचि परतो यकारवकारादेशौ भवतः सन्धौ विवक्षिते । अग्ना ३ यिन्द्रम् । पटा ३ वुदकम् । सिद्धः पविधिः । सन्धाविति ज्ञापितं पुरस्तात् । तेनाचीको यणिति यत्र यणादेशो नास्ति तदर्थमिदम् । अचीति किम् ? अग्ना ३ इ गतम् । सन्धाविति किम् ? अग्ना ३इ इन्द्रम् ।

इत्यच्सन्धिप्रकरणम् ।

---

पुम्सः स्कान्तत्वे कृते अनुकरणम्। खयीति प्रत्याहारसाहचर्या-दम्यपि प्रत्याहारग्रहणम्। पुंस्कामा। पुंश्चली। सकारस्या-सिद्धत्वाद्द्वित्वं न भवति। खयीति किम्? पुंगवः। अम्परे इति किम्? पुंक्षीरम्। पुम इत्यत्र पुंशब्दस्यानर्थकत्वाद-ग्रहणम्।

**नश्छव्यप्रशान्** ॥ ५ । ४ । २ ॥ नकारान्तस्य पदस्याम्परे छवि स् भवत्यनुस्वारपूर्वः प्रशान्तं वर्जयित्वा। भवांस्तरति। छवीति किम्? भवान् करोति। अप्रशान् किम्? प्रशान् तरति। अम्परे इत्येव भवान्त्सरुकः।

**मोऽनुस्वारः** ॥ ५ । ४ । ७ ॥ मकारान्तस्य पदस्या-नुस्वारो भवति हलि परतः। व्रतं रक्षति।

**नश्चापदान्तस्य झलि** ॥ ५ । ४ । ८ ॥ नकारस्य मकारस्य चापदान्तस्यानुस्वारो भवति झलि परतः। तितंसति। रिरंसते। अपदान्तस्येति किम्? हे राजन् भवान् स्थास्यति। झलीति किम्? राजन्यः। गम्यः।

**सम्राट्** ॥ ५ । ४ । ९ ॥ सम्राडिति निपात्यते क्वयन्ते राजतौ परतः। सम्राट्।

**हि म्परे वा** ॥ ५ । ४ । १० ॥ हकारे मपरे परतो मकारस्य वाऽनुस्वारो भवति। कथं ह्मलयति, कथम्ह्मलयति हीति किम्? कथं स्मरसि। प्राप्ते विकल्पोऽयम्। वा ग्रहणं

**इत् ॥ ४ । ३ । १०७ ॥** इदन्तः पोऽचि परेऽपवद्वा भवति । लुनिहीर इदम् । लुनिहीदम् ।

**एचोऽदेः पूर्वस्यात् परस्येदुतौ ॥ ५ । ३ । १०४ ॥** आदिसंज्ञकस्य पदान्तस्यैचः पप्रसङ्गे पूर्वस्यार्द्धस्याऽऽकारः पो भवति परस्य चार्द्धस्येदुतौ भवतः प्रश्नान्तपूजितप्रत्यभिवादेषु । पदान्तस्यैचः पो भवतीति ज्ञापनार्थम् । प्रश्नान्ते । अगमः पूर्वान् ग्रामान् अग्निभूता ३ इ पटा ३ उ । पूजिते । शोभनः खल्वसि अग्निभूता ३ इ पटा ३ उ । प्रत्यभिवादे । आयुष्मानेधि अग्निभूता ३ इ पटा ३ उ । परिगणनं किम् ? दस्यो ३ दस्यो घातयिष्यामि त्वाम् । आगच्छ भो अग्निभूते ३ । पदान्तस्येति वचनादिह न भवति । भद्र कोसि गौरिति ।

**य्वावचि सन्धौ ॥ ५ । ३ । १०५ ॥** अर्थवशाद्विभक्तिपरिणामः । इदुतोरचि परतो यकारवकारादेशौ भवतः सन्धौ विवक्षिते । अग्ना ३ यिन्द्रम् । पटा ३ वुदकम् । सिद्धः पविधिः । सन्धाविति ज्ञापितं पुरस्तात् । तेनाचीको यणिति यत्र यणादेशो नास्ति तदर्थमिदम् । अचीति किम् ? अग्ना ३ इ गतम् । सन्धाविति किम् ? अग्ना ३इ इन्द्रम् ।

इत्यच्सन्धिप्रकरणम् ।

---

## अथ हल्सन्धिप्रकरणम् ।

**पुमः खय्यम्परे सऽनुस्वारपूर्वः ॥ ५ । ४ । २ ॥** पुमित्येतस्याम्परे खयि परतः स् भवत्यनुस्वारपूर्वः । पुमिति

प्रात्परो यो ङम् तदन्तात्पदात्परस्याचो नित्यं ङमुट् भवति। कुङ्ङास्ते। सुगण्णिह। कुर्वन्नास्ते।

**स्तोः श्चुना श्चुः॥ ५।४।११९॥** सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः। अत्र स्थान्यादेशयोर्यथासंख्यम्। स्थानिनिमित्तयोस्तु नेष्यते। शादिति तवर्गस्य चुत्वप्रतिषेधाज्ज्ञायते। सकारस्य शकारेण। जिनालय श्शोभते। चवर्गेण धन्यश्चिनोति पुण्यम्। वृश्चति पापं। मुनिश्छिनत्ति कर्मबन्धनम्। तवर्गस्य शकारेण अग्निचिच्छेते। छत्वमसिद्धमिति शे चुत्वम्। तवर्गस्य चवर्गेण तत्वविच्चिनोति। भवाञ्झकारीयति। श्चाविति सिद्धे श्चुनेति निर्देशः शादिति प्रतिषेधश्च ज्ञापकः परेण पूर्वेण च श्चुनायोगे श्चुत्वमिति। तेन राज्ञः। याच्ञा।

**ष्टुना ष्टुः॥ ५।४।१२०॥** सकारतवर्गयोः षकार टवर्गाभ्यां योगे षकारटवर्गौ भवतः। कष्षण्ढः। अश्वष्टीकते। पेष्टा। वृहड्ढकः। अट्टते। भवाण्णकारीयति।

**पदस्य टोर्नाम्नवतिनगरी ॥ ५।४।१२१॥** पदस्य टोः परेषां नाम्नवतिनगरीणामेव ष्टुत्वं भवति। षण्णाम्। षण्णवतिः। षण्णगरी। नियमार्थमिदम्। पदान्ताट्टोः परस्य नान्यस्येति। तस्त्वामृतलिट् तरति।

**न तोः षि॥ ५।४।१२२॥** तवर्गस्य षकारे यदुक्तं तन्न भवति। तीर्थकृत्षोडशः।

बहु[1]लार्थम् । तेन यवल[2]परे हकारे वा यवला भवन्ति । किँय्ँह्यः, किंह्यः । किँव्ँह्लयति । किंह्वलयति । किल्ँह्लादयति, किंह्लादयति ।

**नपरे नः ॥ ५ । ४ । ११ ॥** नपरे हकारे परतो मकारस्य वा नकारादेशो भवति । किन्ह्नुते, किंह्नुते ।

**ङ्णोः कुक् टुक् शरि ॥ ५ । ४ । १२ ॥** ङकारणकारयोः पदान्ते वर्त्तमानयोः वा कुक् टुगित्येतावागमौ भवतः शरि परतः । प्राङ्क्छेते । प्राङ्शेते । सुगण्ट्षष्ठः । सुगण् षष्ठः ।

**नश्शि तुक् ॥ ५ । ४ । १४ ॥** नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति । भवाञ्च्छेते, भवाञ्च् शेते । भवान् शेते ।

**ङ्नां धुट् सोऽश्च ॥ ५ । ४ । १३ ॥** ङकारान्तान्नकारान्ताच्च परस्य सकारस्य श्चावयववर्जितस्य वा धुडागमो भवति ।

**खरि ॥ ५ । ४ । १३० ॥** झलां चर् भवति खरि परे । मधुलिट्त्सीदति । मधुलिट् सीदति । महान्त्साधुः । महान्साधुः । अश्चेति किम् ? अद् श्चोतसि ।

**ङमो नित्यं ङमुट् प्रात् ॥ ५ ॥ ४ । १६ ॥**

---

(१) क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ॥ विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ।

(२) यमयवने यथासंख्यमिति नैतीयमाचार्येभ्येति शाकटायनः ॥

प्रातपरो यो ङम् तदन्तात्पदात्परस्याचो नित्य ङमुट् भवति। क्रुङ्ङास्ते। सुगण्णिह। कुर्वन्नास्ते।

**स्तोः श्चुना श्चुः॥ ५। ४। ११९॥** सकारतवर्गयोः शकारचवर्गाभ्या योगे शकारचवर्गौ भवत। अत्र स्थान्यादेशयोर्यथासख्यम्। स्थानिनिमित्तयोस्तु नेष्यते। शादिति तवर्गस्य चुत्वप्रतिषेधाज्ज्ञायते। सकारस्य शकारेण। जिनालय श्शोभते। चवर्गेण धन्यश्चिनोति पुण्यम्। वृश्चति पाप। मुनिश्छिनत्ति कर्मबन्धनम्। तवर्गस्य शकारेण अग्निचिच्छेते। छत्व मसिद्धमिति शे चुत्वम्। तवर्गस्य चवर्गेण तत्त्वविच्चिनोति। भवाञ्झकारीयति। श्चाविति सिद्धे श्चुनेति निर्देश शादिति प्रतिषेधश्च ज्ञापक॰ परेण पूर्वेण च श्चुनायोगे श्चुत्वमिति। तेन राज्ञ। याच्ञा।

**ष्टुना ष्टुः॥ ५। ४। १२०॥** सकारतवर्गयो षकार टवर्गाभ्या योगे षकारटवर्गौ भवत। कष्षण्ढ। अश्वष्टीकते। पेष्टा। वृहट्टङ्क। अट्टते। भवाण्णकारीयति।

**पदस्य टोर्नाम्नवतिनगरी॥ ५। ४। १२१॥** पदस्य टो परेषा नाम्नवतिनगरीणामेव ष्टुत्व भवति। षण्णाम्। षण्णवति। षण्णगरी। नियमार्थमिदम्। पदान्ताट्टो परस्य नान्यस्येति.। तत्त्वामृतलिट् तरति।

**न तोः षि॥ ५। ४। १२२॥** तवर्गस्य षकारे यदुक्त तन्न भवति। तीर्थकृत्षोडश।

**शात्** ॥ ५ । ४ । १२३ ॥ शकारात्परस्य तवर्गस्य यदुक्त तन्न भवति । विश्न । पदान्तस्य शकारस्यासभावादपदान्ते प्रतिषेध ।

**यरो ङो विभाषा ङे** ॥ ५ । ४ । १२५ ॥ यर पदान्तस्य विभाषया ङादेशो भवति ङे परत । सुवाङ् नयति, सुवाग्नयति । पदान्तस्येति किम् ? स्तभ्नाति । वेत्यनुवृत्तौ विभाषा ग्रहण व्यवस्थार्थम् । तेन त्ये नित्य भवति । त्वङ्मयम् ।

**विरामे वा** ॥ ५ । ४ । १३१ ॥ विरामे वर्तमानाना झला वा चर्त्वं भवति । वाक्, वाग् ।

**यय्यनुस्वारस्य परस्वम्** ॥ ५ । ४ । १३२ ॥ ययि परतोऽनुस्वारस्य परस्व भवति । शङ्कित । अञ्चित । ययीति किम् ? रिरसते ।

**वा पदान्तस्य** ॥ ५ । ४ । १३३ ॥ पदान्तस्यानुस्वारस्य वा परस्व भवति ययि परत । शुद्धङ्करोषि, शुद्ध करोषि । ययीति किम् । त्वशेष ।

**तोर्लि** ॥ ५ । ४ । १३४ ॥ तवर्गस्य लकारे परत परस्व भवति । तडिल्लीला । भवाँल्लोकेशः । नकारस्य नासिक्यो लकार ।

**स्थास्तम्भोः पूर्वस्योदः** ॥ ५ । ४ । १३५ ॥ स्था स्तम्भि इत्येतयोरुद परयो पूर्वस्व भवति । उत्थातव्यम् । उत्तम्भितव्यम् । उद इति का निर्देशात्परस्यादे । अघोषस्य सकारस्य थकार । पूर्वस्येति किमर्थम् । परस्वनिवृत्त्यर्थम् । उद

इति योगविभाग कल्पनीय तेन स्कन्देरपि रोगे पूर्वस्वम्। उत्कन्दको नाम रोग ।

**झयो हः ॥ ५ । ४ । १३६ ॥** झय पदान्तादुत्तरस्य हकारस्य पूर्वस्व भवति। सुवाग्घसति। मधुलिड्ढसति। महाप्राणस्योष्मण स्थाने तादृश एव पूर्वचतुर्थो भवति। चतुष्टय समन्तभद्रस्येति विकल्प । सुवाग्हसति। झय इति किम्? प्राङ् हसति।

**शश्छोऽटि ॥ ५ । ४ । १३७ ॥** झय पदान्तादुत्तरस्य शस्याटि परत छकारो भवति। धर्म्मविच्छेते। ककुप्छोभते। पक्षे न भवति। धर्मविच्शेते। केचित् शश्छोऽमीति पठन्ति। तेन तच्छ्लाघनम्, तच्श्लाघनम्।

**हलो यमां यमि खम् ॥ ५ । ४ । १३८ ॥** हल उत्तरेषा यमा यमि परत ख भवति। शय्या इत्यत्र क्यपि अयि च कृते द्वौ यकारौ। क्रमजस्तृतीय। मध्यमस्थाने वाख शय्या। पक्षे न भवति। शय्य्या। यमामिति किम्? अर्घ्यम्। यमीति किम्? शार्ङ्गम्। यथासख्यादिह न भवति। पित्र्यम्।

**चतुष्टयं समन्तभद्रस्य ॥ ५ । ४ । १४० ॥** झयो ह इत्यादि चतुष्टय समन्तभद्राचार्यस्य मते न भवति।

**छे । ४ । ३ । १४१ ॥** छकारे परत सन्धौ ह्रस्य तुग्भवति। गच्छति। ह्रस्याय तुक्। न तदन्तस्य। यदि ह्रान्तस्य स्यात् चिच्छिदुरित्यत्र हलो नादे ख प्रसज्येत।

वृक्षव् करोति । अशि हलि तु वृ[1]क्षहसति ।

**हल्येतत्तदोरनञ्सेऽकोःसुग्वम्॥ ४ । ३ । १०४॥** अककारयोरेतत्तदोर्हलि परत सुख भवति नञ्से तु न । एष ददाति । एष पठति । स तरति । हलीति किम् ? एषोऽत्र । अनञ्से इति किम् ? अनेषो हसति । वाक्ये तु भवत्येव । नैष ददाति । अको[3]रिति किम् ? एषको ददाति । सकस्तरति । अन्यथा तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति प्राप्तिरस्ति ।

इति हल्सन्धिप्रकरणम् ।

---

## अथ विसर्गसन्धिप्रकरणम् ।

**विरामे विसर्जनीयः ॥ ५ । ४ । १९ ॥** वर्णस्यानुच्चारण विराम । विरामविषये रेफान्तस्य पदस्य विसर्जनीयादेशो भवति ।

**शर्परे खरि ॥ ५ । ४ । २० ॥** शर्परे खरि परतो रेफान्तस्य विसर्जनीयादेशो भवति । पुरुष त्सरुक । प्राप्ते सत्वस्यायमपवाद ।

**कुप्वोः॥ ५ । ४ । २१ ॥** खरि यौ कुपू तयो शर्परयो परत रेफस्य विसर्जनीयादेशो भवति । वास क्षौमम् । अद्भि

---

१ वृक्ष वनतीति वृक्षवत् वृक्षवन्तमाचष्टे इत्यर्थे णिच् वृक्षवयति । ततः क्विपि वृक्षव् । अस्माद्धे परतो वस्य ऊम् । न च स्थानिवद्भावावयोर्व्यवधानं पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवद्भावाभावात् (म०वृ०) (२) ज्ञापकश्चैतद्देवेति बोध्यम् ।

प्सातम् । ननु पूर्वेण सिद्धे किमर्थमिदम् ? अस्मिन्नसति स पुरस्तादपवाद सन् कपयोरेव बाधक स्यात् । नच्छवि सत्वस्य । कुप्वोरित्यनेनारम्भेण कपयोर्बाधा पूर्वेण छवि सत्वस्येति ।

**≍क[1] ≍ पौ च** ॥ ५ । ४ । २२ ॥ शर्परे इति निवृत्तम् । खरीति वर्तते इष्टत्वात् । खरि यौ कुप् तयोः परत रेफस्य≍क ≍प इत्येतावादेशौ भवतो विसर्जनीयश्च । क ≍ करोति, कः करोति । क ≍खनति, कः खनति । क ≍ पचति, कः पचति । केवलौ जिव्हामूलीयोपध्मानीयावुच्चरयितुमशक्यौ तस्मात् ककारपकारौ उच्चारणार्थौ । नृकुट्या भवो नार्कुट इत्यत्र तु रेफस्य बहिरङ्गत्वान्नायं विधिः ।

**शरि सश्च** ॥ ५ । ४ । २३ ॥ शरि परतो रेफस्य सकारादेशो भवति विसर्जनीयश्च । कश्शेते । कस्सरति । पक्षे विसर्जनीय ।

**रेश्च सुपि** ॥ ५ । ४ । २४ ॥ ईव्बहु[2]वचने परतो रेरेव सकारादेशो भवति विसर्जनीयश्च । पयस्सु, पयः सु । सर्पिष्षु, सर्पिः षु इत्यत्र सत्वपक्षे नुम् शर्व्यवाये इति परस्य षत्वे कृते पूर्वस्य पदान्तत्वान्नाद्यन्त इति षत्वप्रतिषेधे सति ष्टुत्वम् । विसर्जनीयपक्षे परस्य षत्व अयोगवाहस्य शर्ग्रहणेन ग्रहणात् ।

---

(१) मूलपाठस्य सूत्रमिदम् । (२) शरीत्यनुवर्तनात्सुपीत्यस्य विशेषणे कृते ईयो बहोर्ग्रहणं सिद्ध्यति । म० वृ० ।

पूर्वेण सिद्धे नियमार्थमिदम्। रे रेव सुपि सत्वविसर्जनीयौ नान्यस्य। गीर्षु[१]।

छवि ॥ ५। ४। २५॥ रोरीत्यतो रेफमात्रमनुवर्तते। विसर्जनीय इति निवृत्तम्। छवि परतो रेफस्य सकारादेशो भवति। कश्छिनत्ति। कष्टकारीयति। कस्थुडति। पुनश्चरति।

कुप्वोस्त्ये ॥ ५। ४। २६॥ स इति वर्तते। पदान्तस्य रेफस्य सकारादेशो भवति कवर्गपवर्गादौ त्ये परत। पाशकल्पककाम्या प्रयोजयन्ति। अयस्पाशम्। ईषदसिद्ध पय पयस्कल्पम्। महोरस्क। पयस्काम्यति। त्ये इति किम्? अय करोति। भि सज्ञा वक्ष्यते। **अत्राभि संज्ञकस्येति वक्तव्यम्**। इह मा भूत्। प्रात कल्पम्। धुड्ड काम्यति। **रे रेव काम्ये वक्तव्यम्**। इह माभूत्। गी काम्यति।

इणः पः ॥ ५। ४। २७॥ इण उत्तरस्य सकारस्य षकारादेशो भवति कवर्गपवर्गादौ त्ये परत। सर्पिष्कल्पम्। कुप्वोस्त्ये इत्यनेन निर्वृत्तस्य सकारस्य षत्वमनेन विधीयते इति लक्षणमिदम्। अधिकारश्च इत उर्ध्वं यत्सत्व विधीयते तस्येण उत्तरस्य षत्व भवतीति।

उपान्त्याऽलुङ् ॥ १। १। ६६॥ अलामन्त्यस्य समीपोऽल् उङ् सञ्ज्ञो भवति।

---

(१) सुप्येव रेरिति कस्मान्न नियम। यस्ते धुस्थस्येति भकारद्वयनिर्देशात्।

**इदुदुपधस्य चाऽप्रत्ययस्य ॥ ५ । ४ । २८ ॥** त्ये हि पूर्वेण सिद्धेऽत्यार्थोऽयमारम्भः । इकारोकारोडो रेफस्य पकारादेशो भवति कुप्वोः परतः त्यपुम्मुहुसो वर्जयित्वा । निर्दुर्वहिराविश्चतुः-प्रादुषः प्रायः प्रयोजयन्ति । निष्कृतम् । दुष्कृतम् । वहिष्कृतम् । आविष्पीतम् । चतु[१]ष्कण्टकः । तपरग्रहणं किम् । गीः करोति । धूः करोति । अत्यपुम्मुहस इति किम् ? मुनिः करोति । पुंस्कामा । मुहुः कामा । ननु पुस्कामेत्यत्र रेफाभावाल्लक्षणान्तरेण सत्वस्य विधानाच्च पत्वप्रतिषेधोऽयुक्तः । नैप दोपः । उक्त हि भाष्ये-अविशेषेण सत्वमुक्त्वा इणः प इति पत्वं विधीयते इति प्राप्तिरस्ति । पितु करोतीत्यत्र न पत्वम् । कस्कादिषु भ्रातुष्पुत्रग्रहणेनैकादेशनिमित्तकस्य न पत्वमिति ज्ञापनात्[२] ।

**नमस्पुरसोस्त्योः ॥ ५ । ४ । २९ ॥** त्य इति निवृत्तम् । नमस्पुरसित्येतयोस्तिसंज्ञकयो रेफस्य सकारादेशो भवति कुप्वोः परत । नमस्कर्तव्यम् । पुरस्कर्तव्यम् ।

**तिरसो वा ॥ ५ । ४ । ३० ॥** तिसंज्ञकस्य तिरसो रेफस्य-वा सकारादेशो भवति कुप्वो परतः । तिरस्कृत्य, तिरः कृत्य । तिरोन्तर्धौ वा कृञीति तिसंज्ञा । इह तिरसस्तिसज्ञकस्येति विशेषण विषयद्वारकम् । तेनान्तर्धौ विषये या कृञीति तिसज्ञाविरहेपि[३] सत्वम् । तिरस्कृत्वा । तिसज्ञकस्येति किम् ।

---

(१) चतुर्षु कण्टकेषु भव इत्यर्थ इदुदुपधस्य चाऽप्रत्यये इत्यस्य उप् ।
(२) नैरुक्त्य बहिष्कृतमित्यत्र बहिरङ्गत्वादेषविषये. षत्वम् । (३) अनादरः परिभवः परीभावस्तिरस्क्रियेति कोषात् ।

तिरः कृत्वा काण्डं गतः, अन्तरेण कृत्वा गत इत्यर्थः।

**सुचः ॥ ५ । ४ । ३१ ॥** सुजन्तस्य पदस्य यो रेफस्तस्य वा सकारोदेशो भवति कुप्वोः परतः। द्विष्करोति, द्विः[१] करोति। त्रिष्करोति। चतुष्करोति। पक्षे≍क≍पौ।

**इसुसोः सामर्थ्ये[२] ॥ ५ । ४ । ३२ ॥** इसुसित्येतयो रेफस्य वा सकारादेशो भवति कुप्वादिना सामर्थ्ये सति। सर्पिष्करोति, सर्पिः करोति। धनुष्पतति। धनुः पतति। सर्पिर्धनुःप्रभृतयः शब्दा इसुसन्ता व्युत्पाद्यन्ते इति दर्शने त्यस्य नेत्य प्राप्ते अव्युत्पत्तौ इदुदुड इति प्राप्ते विकल्पः। सामर्थ्ये इति किम्। तिष्ठतु सर्पिः पिबतु पयः।

**सस्सेऽद्युस्थस्य ॥ ५ । ४ । ३३ ॥** इसुसोः रेफस्याद्युस्थस्य से सकारादेशो भवति। सर्पिष्पात्रम्। धनुष्पति.। पुनः स ग्रहणं नित्यार्थम्। अद्युस्थस्येति किम्? परमसर्पिः कुण्डिका।

**कृ कमि कंस कुम्भ कुशा कर्णी पात्रेऽतोऽभ्रेः ॥ ५ । ४ । ३४ ॥** कृ कमि कंस कुम्भ कुशा कर्णी पात्र इत्येषु

---

(१) द्वौ वारौ करोतीति विगृह्य। द्विस्त्रिश्चतुर्भ्यः सुजिति सुच्। द्वित्रिभ्यां पदस्यायपुग्मुदुष इति प्रतिषेधादप्राप्तं चतुः शब्दस्येदुदुड इति प्राप्तं विकल्प्यते। (२) पदाधिकारे समर्थ परिभाषाधिकारात् सिद्धे सामर्थ्यग्रहणं कवर्गपवर्गादिना त्यपेक्षालक्षण एव सामर्थ्ये यथा स्यादित्येवमर्थम्। देवदत्तस्य सर्पिष्करोति। इह मा भूत्। सर्पिः कालयम् यजुः पीतकम्।

परतोऽकारत उत्तरस्य रेफस्याघुशस्य से सकारादेशो भवति, न तु
झे । कृकम्यो सर्वत्यान्तयोर्ग्रहणम् । यशस्कार । तपस्काम ।
अयस्कान्त । अयस्कंस । कस इति कमेरव्युत्पत्तिपक्षे पृथग्ग्र-
हणम् । अयस्कुम्भ । मृद्ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
अयस्कुम्भी । अयस्कुशा । अय इव कर्णावस्या साऽयस्कर्णी ।
शुनस्कर्णस्तु कस्कादौ । अयस्पात्रम् । अयस्पात्री । कृकम्यादि-
ग्रहण किम् ? पय पानम् । अत इति किम् ? गी कार । भास्कर
इति तु कस्कादौ । अझेरिति किम् ? प्रात कार-। स इत्येव। यश
करोति । अघुसस्येत्येव । परमयश कार ।

**शिरोऽधसोः पदे** ॥ ५ । ४ । ३५ ॥ एतयो रेफस्य
सकारादेशो भवति पदशब्दे परत । शिरस्पदम् । अधस्पदम् ।
सेऽघुस्थयोश्चेत्येव । शिरस पदम् । परमशिर पदम् ।

**कस्कादौ** ॥ ५ । ४ । ३६ ॥ कस्क इत्येवमादिषु
रेफस्य सकारादेशो भवति । यथा ते तत्र पठ्यन्ते तथैव तेषा साधु
त्वम् । कस्क । कौतस्कुत । समुदायस्यामृत्त्वेऽपि वचनाच्चत आग
तेऽर्थेऽत्राऽण् । भ्रातुष्पुत्र । सेऽपि, शुनस्कर्ण । असंज्ञाया "ताया
आक्रोशे" इत्यनुप् । सद्यस्काल । सद्यस्की । तमस्काण्डम् ।
अयस्काण्डम् । तपस्काण्डम् । मेदस्पिण्ड । आकृतिगणोऽयम् ॥

## इति विसर्गसन्धि ।

---

## अथ विनामप्रक्रिया ।

**इण्कोः सः षः । ५ । ४ । ३७ ॥** इणः कवर्गाच्चोत्तरस्यापदान्तस्य सस्य षत्वं भवतीत्यधिकारः । षग्रहणं कुप्वोरित्यस्य निवृत्त्यर्थम् । विनाम इति षत्वणत्वयोः सञ्ज्ञा[1] ।

**नुम्शर्व्यवायेऽपि ॥ ५ । ४ । ३८ ॥** नुम्व्यवाये शर्व्यवायेऽव्यवायेऽपि इण्कोरुत्तरस्य सस्य षत्वं भवति । सर्पींषि । अत्र नुमादेशो नुम् । तेनेह न, पुंसु ।

**स्त्यादेशयोः ॥ ५ । ४ । ३९ ॥** इण्कवर्गाभ्यामुत्तरस्यादेशरूपस्य त्यावयवस्यैव सस्य षादेशः । आदेशस्य तावत्, सुष्वाप । त्यावयवस्य, मुनिषु । अत्रेण्[2] परेण णकारेण, स्त्रियाची प्रैषेष्विति निर्देशात् ।

**शास्वस्घसाम् ॥ ५ । ४ । ४० ॥** शास् वस् घस इत्येतेषामिण्कोः परस्य सस्य षादेशो भवति । अशिष्ट । ऊषतुः । जक्षतुः । इण्कोः किम् ? उवसिथ ।

**पूर्वश्च ॥ ४ । ३ । ६ ॥** द्विरुक्तयोः पूर्वोऽवयवश्चसंज्ञो भवति ।

**षणि चाणिण्स्तोरेव ॥ ५ । ४ । ४१ ॥** षण्भूते सनि परे ण्यन्तस्य स्तौतेश्च चादिणः परस्यादेशसकारस्य षो भवति । सुष्वापयिषति । तुष्टूषति । सिद्धे सत्यारम्भो नियमाय ।

---

(१) मध्यां मरो इति ज्ञेयः । (२) मानस्त्वाच यजुधुमुषाभिश्चेतद्रूपटकयशोरित्येव, अन्यथेणोरित्येव ब्रूयात्

षणि परे चोत्तरस्य सस्य णिस्तोरेव षो, नान्यस्येति । तेन सिसिक्षतीत्यत्र न । विपरीतनियमबाधनार्थमेवकारः ।

**सः स्विदिस्वदिसहेः ॥ ५ । ४ । ४२ ॥** षण्भूते सनि परे चादिणः परस्य ण्यन्तानामेषां सस्य स एव भवति । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ।

**नाद्यन्ते ॥ ५ । ४ । ७६ ॥** पदस्यादावन्ते च षत्वं न भवति । दधि सिञ्चति । अग्निस्तत्र । इति निषेधे प्राप्ते ।

**प्राक्सितादड्यपि ॥ ५ । ४ । ४३ ॥** सेवसितेति वक्ष्यति । तत्र प्राक् सिताद्ये सुञादयस्तेषामटा व्यवायेऽव्यवायेपि गेः परस्य सस्य षो भवति । अभ्यषुणोत् ।

**स्थादेश्चेन चस्य ॥ ५ । ४ । ४४ ॥** प्राक् सितात् स्थादीनां सस्य चेन व्यवाये षो भवति चस्य चैषामेव । अभितष्ठौ । अषोपदेशार्थं चैतत् । अभिषिषेणयिषति । षणि प्रतिषेधार्थं च । परिषिषिक्षति । गेः सिचो वक्ष्यते षत्वम् । तत एव सिद्धे पुनरारम्भो नियमाय । स्थादीनामेव वक्ष्यमाणानां चस्य षत्वं चेन च व्यवाये नान्येषां सुनोत्यादीनाम् । अभिसुषूषति ।

**गेः सुञ्सूसोस्तुस्तुभः ॥ ५ । ४ । ४५ ॥** निमित्तभूताद्गेः परेषामेषां सस्य षो भवति । अभिषुणोति ।

**सुञः स्यसनोः ॥ ५ । ४ । ८३ ॥** सुनोतेः सस्य षो न भवति स्यसनोः परयोः । अभिसोष्यते । अभिसुसूः । सस्य रित्वे विसर्जनीये च कृते षणीति नियमाभावाच्चोत्तरस्य प्राप्तं षत्वं प्रतिषिध्यते।

**स्थासेनयसेधसिचसञ्जस्वञ्जाम्** ॥ ५ । ४ । ४६ ॥ गे परेषामेषा सस्य षो भवति । अभिष्ठास्यति । अटा व्यवाये, अभ्यष्ठात् । अभितष्ठौ । अभिषिषेणयिषति । स्तु-स्वञ्जोरटा व्यवाये वा षत्व वक्ष्यते ।

**सेधो गतौ** ॥ ५ । ४ । ७६ ॥ गत्यर्थस्य सेधते' सस्य षो न भवति । अभिसेधति, प्रतिसेधति वा गा । गता-विति किम् ? प्रतिषेधति पाप निवारयतीत्यर्थ ।

**सिचो यङि** ॥ ५ । ४ । ७८ ॥ सिचो यङि परत षो न भवति । अभिसेसिच्यते । गिलक्षणस्य षत्वस्य येन ना-प्राप्तन्यायेन नाधन्ते इत्यस्यैव बाधकत्वान्न सिचो यङीत्यस्येति गिलक्षणस्यापि प्रतिषेधोऽयम् ।

**सदोऽप्रते** ॥ ५ । ४ । ४७ ॥ अप्रतेर्गे परस्य सदे सस्य षो भवति । अभिषीदति । अभ्यषीदत् । अभिषिषत्सति । अप्रतेरिति किम् ? प्रतिसीदति ।

**सदिस्वञ्ज्योः परस्य लिटि** ॥ ५ । ४ । ८४ ॥ सदि-स्वञ्ज्योर्लिटि परत परस्य षत्व न भवति । येन व्यवाये सदो-ऽप्रतेरिति प्राप्त षत्व प्रतिषिध्यते । अभिषसाद । अभिषस्वञ्जे ।

**स्तम्भेः** ॥ ५ । ४ । ४८ ॥ गेरिण परस्य स्तम्भे सस्य षो भवति । अभिष्टम्नाति । अभ्यष्टम्नात् । अभितष्टम्भ । प्रतिताष्टभ्यते ।

**निस्तब्धप्रतिस्तब्धौ** ॥ ५ । ४ । ८० ॥ उपरिष्ठेन प्राप्त षत्व के परत प्रतिषिध्यते ।

**आलम्बनाविदूरेऽवात्** ॥ ५ । ४ । ४६ ॥ अनिणर्थ आरम्भ । अवाद्धेरुत्तरस्य स्तम्भेः सस्य षो भवत्यालम्बनेऽविदूरे चार्थे । अवष्टभ्नाति । अवाष्टभ्नात् । अवतष्टम्भ । विदूरप्रतिषेधान्नातिदूरमासन्नं च गृह्यते ।

**वेश्च स्वनोऽशने** ॥ ५ । ४ । ५० ॥ वेरवाच्चोत्तरस्य स्वने सस्य षो भवत्यशनेऽर्थे । विष्वणति । सशब्दमश्नातीत्यर्थ । व्यष्वणत् । अवषष्वाण । अशने इति किम् ? अवस्वनति मृदङ्ग ।

**परिनिविभ्यः सेवसितसयाम्** ॥ ५ । ४ । ५१ ॥ परिनिविभ्य परेषां सेवसितसया सस्य षो भवति । सेव इति भौवादिक सेवार्थो धु । परिषेवते । पर्यषेवत । परिषिषेविषते । परिषित । निषय । विषय ।

**सिवुसहस्सुट्स्तुस्वञ्जाम्** ॥ ५ । ४ । ५२ ॥ परिनिविभ्य परेषामेषा सस्य षो भवति । परिषीव्यति । परिषहते । सुट् परिमेव प्रयोजयति । परिष्कार सपर्युपात्कृञो भूषणे सुट् वक्ष्यते । गे परयो स्तुस्वञ्जो पत्वे सिद्धे पुनर्ग्रहणमुत्तरार्थम् ।

**सोढः** ॥ ५ । ४ । ८१ ॥ सोढ्भूतस्य सहे षत्व न भवति । परिसोढा ।

**वाऽटा** ॥ ५ । ४ । ५३ ॥ सिवादीनामटा व्यवाये षो वा भवति । पर्यषीव्यत्, पर्यसीव्यत् । पर्यषहत, पर्यसहत । पर्यष्करोत्, पर्यस्करोत् । पर्यष्टौत्, पर्यस्तौत् । न्यष्वजत, न्यस्वजत ।

**स्थासेनयसेधसिचसञ्जस्वञ्जाम्** ॥ ५ । ४ । ७६ ॥ गेः परेषामेषां सस्य षो भवति । अभिष्ठास्यति । अटा व्यवाये, अभ्यष्ठात् । अभितष्ठौ । अभिषिषेणयिषति । स्वु-स्वञ्जोरटा व्यवाये वा षत्वं वक्ष्यते ।

**सेधो गतौ** ॥ ५ । ४ । ७९ ॥ गत्यर्थस्य सेधतेः सस्य षो न भवति । अभिसेधति, प्रतिसेधति वा गाः । गता-विति किम् ? प्रतिषेधति पापं निवारयतीत्यर्थः ।

**सिचो यङि** ॥ ५ । ४ । ७८ ॥ सिचो यङि परतः षो न भवति । अभिसेसिच्यते । गिलक्षणस्य षत्वस्य येन ना-प्राप्तिन्यायेन नाद्यन्ते इत्यस्यैव बाधकत्वान्न सिचो यङीत्यस्येति गिलक्षणस्यापि प्रतिषेधोऽयम् ।

**सदोऽप्रतेः** ॥ ५ । ४ । ४७ ॥ अप्रतेर्गेः परस्य सदेः सस्य षो भवति । अभिषीदति । अभ्यषीदत् । अभिषिषत्सति । अप्रतेरिति किम् ? प्रतिसीदति ।

**सदिस्वञ्ज्योः परस्य लिटि** ॥ ५ । ४ । ८४ ॥ सदि-स्वञ्ज्योर्लिटि परतः परस्य षत्वं न भवति । चेन व्यवाये सदो-ऽप्रतेरिति प्राप्तं षत्वं प्रतिषिध्यते । अभिषसाद । अभिषस्वञ्जे ।

**स्तम्भेः** ॥ ५ । ४ । ४८ ॥ गेरिणः परस्य स्तम्भेः सस्य षो भवति । अभिष्टभ्नाति । अभ्यष्टभ्नात् । अभितष्टम्भ । प्रतितष्टभ्यते ।

**निरनवप्रतिस्तब्धौ** ॥ ५ । ४ । ८० ॥ उपरिष्ठेन प्राप्तं षत्वं क्ते परतः प्रतिषिध्यते ।

**आलम्बनाविदूरेऽवात्** ॥ ५ । ४ । ४९ ॥ अनिणर्थ आरम्भः । अवाद्रेरुत्तरस्य स्तम्भेः सस्य षो भवत्यालम्बनेऽविदूरे चार्थे । अवष्टभ्नाति । अवाष्टभ्नात् । अवतष्टम्भ । विदूरप्रतिषेधान्नातिदूरमासन्नं च गृह्यते ।

**वेश्च स्वनोऽशने** ॥ ५ । ४ । ५० ॥ वेरवाच्चोत्तरस्य स्वनेः सस्य षो भवत्यशनेऽर्थे । विष्वणति । सशब्दमश्नातीत्यर्थः । व्यष्वणत् । अवषष्वाण । अशने इति किम् ? अवस्वनति मृदङ्गः ।

**परिनिविभ्यः सेवसितसयाम्** ॥ ५ । ४ । ५१ ॥ परिनिविभ्यः परेषां सेवसितसयां सस्य षो भवति । सेव इति भौवादिकः सेवार्थो धुः । परिषेवते । पर्यषेवत । परिषिषेविषते । परिषितः । निषयः । विषयः ।

**सिवुसहसुट्स्तुस्वञ्जाम्** ॥ ५ । ४ । ५२ ॥ परिनिविभ्यः परेषामेषां सस्य षो भवति । परिषीव्यति । परिषहते । सुट् परिमेव प्रयोजयति । परिष्कारः संपर्युपात्कृञो भूषणे सुट् वक्ष्यते । गेः परयोः स्तुस्वञ्जोः षत्वे सिद्धे पुनर्ग्रहणमुत्तरार्थम् ।

**सोढः** ॥ ५ । ४ । ८१ ॥ सोढ्भूतस्य सहेः षत्वं न भवति । परिसोढा ।

**वाऽटा** ॥ ५ । ४ । ५३ ॥ सिवादीनामटा व्यवाये षो वा भवति । पर्यषीव्यत्, पर्यसीव्यत् । पर्यषहत, पर्यसहत । पर्यष्करोत्, पर्यस्करोत् । पर्यष्टौत्, पर्यस्तौत् । न्यष्वजत, न्यस्वजत ।

**स्तम्भुसिवुसहां कचि** ॥ ५ । ४ । ८२ ॥ एषां कचि परतो गिलक्षण षत्व न भवति । अभ्यतस्तम्भत् । स्तम्भेरिति प्राप्तं षत्व प्रतिषिध्यते । सिवसहोस्तु वाटेति प्राप्तो विकल्पः प्रतिषिध्यते । पर्यसीषिवत् । पर्यसीषहत् ।

**निव्यभ्यनुपरेः स्यन्दोऽजीवे** ॥ ५ । ४ । ५४ ॥ निव्यभ्यनुपरिभ्य, परस्य स्यन्दे. सस्य षो वा भवत्यजीवे । निष्यन्दते, निस्यन्दते वा जलम् । जीवे तु अनुस्यन्दते मत्स्य. । अजीव इति पर्युदासेन जीवाजीवसमुदायस्य जीवादन्यत्वात् षत्व-विकल्प । अनुष्यन्देते मत्स्योदके, अनुस्यन्देते वा ।

**वे स्कन्दोऽते** ॥ ५ । ४ । ५५ ॥ क्तक्तवत्वोस्तसंज्ञा वक्ष्यते । वेरुत्तरस्य स्कन्दे सस्य षो वा भवति न तु ते परे । विष्कन्ता, विस्कन्ता । अते किम् ? विस्कन्नः । विस्कन्नवान् ।

**परे.** ॥ ५ । ४ । ५६ ॥ परेरुत्तरस्य स्कन्दे सस्य षो वा भवति । योगविभागसामर्थ्यात्तेपि । परिष्कन्न, परिस्कन्न. । परिष्कन्नवान् परिस्कन्नवान् ।

**परिस्कन्द प्राच्यभरतेषु** ॥ ५ । ४ । ५७ ॥ प्राच्यभरतेषु परिस्कन्द इति निपात्यते । परिस्कन्दो वहति । प्राच्यभरतेष्विति किम् ? परिष्कन्दः, परिस्कन्द ।

**स्फुरिस्फुल्योर्निर्निवे.** ॥ ५ । ४ । ५८ ॥ निर्निविभ्य. परयोः स्फुरिस्फुल्यो. सस्य षो वा भवति । निष्फुरति, निस्फुरति । निष्फुलति, निस्फुलति ।

**वेः स्कम्भः पः ॥ ५ । ४ । ५९ ॥** वेरुत्तरस्य स्कम्नातेः सस्य पो भवति नित्यम् । विष्कम्नाति । विष्कम्भकः ।

**सेऽङ्गुलेः सङ्गः ॥ ५ । ४ । ६२ ॥** अङ्गुलेरुत्तरस्य सङ्गसकारस्य षो भवति से । अङ्गुलिषङ्गा यवागूः । अन्यथारम्भसामर्थ्याद्विभक्त्याव्यवधानेऽपि वाक्ये प्रसज्यते ।

**भीरोः स्थानम् ॥ ५ । ४ । ६३ ॥** भीरोरुत्तरस्य स्थानसकारस्य षो भवति से । भीरुष्ठानम् । से इति किम् ? भीरोः स्थानम् ।

**ज्योतिरायुषः स्तोमः ॥ ५ । ४ । ६४ ॥** ज्योतिरायुर्भ्यामुत्तरस्य स्तोमसकारस्य षो भवति से । ज्योतिष्टोमः । आयुष्टोमः । से किम् ? ज्योतिः स्तोमस्य दाहकम् ।

**स्तुत्सोमो चाग्नेः ॥ ५ । ४ । ६५ ॥** अग्नेरुत्तरेषां स्तुत्सोमस्तोमानां सस्य षो भवति से । अग्निष्टुत् । अग्नीषोमौ । अग्निष्टोमः । गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययादिह न । अग्निगुणसोमगुणो, अग्निसोमौ मनुष्यौ ।

**मातृपितृभ्यां स्वसुः ॥ ५ । ४ । ६६ ॥** मातृपितृभ्यां परस्य स्वसृसस्य षो भवति से । मातृष्वसा । पितृष्वसा । वाक्ये न । मातुः स्वसा ।

**वाऽनुपि ॥ ५ । ४ । ६७ ॥** अनुपि मातृपितृभ्यामुत्तरस्य सस्य षो वा भवति से । मातुष्ष्वसा, मातुः स्वसा ।

**गिप्रादुभ्यां यच्यस्तेः ॥ ५ । ४ । ६८ ॥** गेरिणःप्रादुःशब्दाच्चोत्तरस्यास्तेः सस्य षो भवति यकारादावजादौ च

त्ये परत । अभिष्यात् । प्रादु पन्ति । यचीति किम् ? अनुस्व ।

**निर्दुःसुवेः सुपिस्तूतिसमा ॥ ५ । ४ । ६६ ॥**
निर्दु सुविभ्य परेषामेषा सस्य षो भवति । निष्पुप्त । दुः ष्टुति. । सुषम । दु षम । सम सर्वादिपूक्त । सूतिरिति सूयते क्त्यन्तस्य ग्रहण समसाहचर्यात् । सुपीति विकृत निर्देशादिह न । विस्वप्न ।

**विकुशमीपरेः स्थलम् ॥ ५ । ४ । ७० ॥** विकु शमीपरिभ्य परस्य स्थलस्य सस्य षो भवति । विष्ठलम् । कुष्ठलम् । शमिष्ठलमिति सञ्ज्ञायाम् । क्वचित् खौ चेति प्र । परिष्ठलम् ।

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गु मञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्य स्थ ॥ ५ । ४ । ७१ ॥** अम्बादिभ्य उत्तरस्य स्थासस्य षो भवति । अम्बाष्ठ । सञ्ज्ञाया तु क्वचित्खाविति प्रे अम्बष्ठ । आम्बष्ठ । गोष्ठभूमिष्ठौ । सव्यष्ठ सारथि । अपष्ठद्विष्ठत्रिष्ठकुष्ठेकुष्ठशङ्कुष्ठाङ्गुष्ठमञ्जिष्ठपुञ्जिष्ठपरमेष्ठबर्हिष्ठदिविष्ठाग्निष्ठा । अकारान्तनिर्देशाल्लेह, गोस्थिति । सव्येष्ठा सारथि , परमेष्ठिरिति तु सुषामादिषु द्रष्टव्यौ ।

**सुषामादिषु च ॥ ५ ॥ ४ ॥ ७२ ॥** सुषामादिषु सस्य षो भवति । सुषामा । निष्षामा । दुष्षामा । सुषेव । निष्षेव । दुष्षेव । निष्षन्धि । दुष्षन्धि । अयमनादेशसकार । सुष्ठु । दुष्ठु । अत्र नाद्यन्ते इति प्रतिषेध प्राप्त । गौरियक्थ । प्र

तिष्णिका । एति सज्ञायामगकारात् (ग )। नोपेविका । इन्द्रनिषेवणम् । हरिषेण । साधुषेण । एतीति किम् ? हरिसन्धि । सज्ञायामिति किम् ? पृथुसेन । अगकारादिति किम् ? विष्व [१]क्सेन । इण्कोरित्येव । सर्वसेन । नक्षत्राद्वा (ग ) । एति सज्ञायामेव । रोहिणीषेण , रोहिणीसेन । अगकारादित्येव, शतभिषक्सेन । अविा हि तलक्षण षत्वमिह द्रष्टव्यम् ।

**प्रादुस्त्यऽम्डिस्ति** ॥ ५ । ४ । ७३ ॥ प्रादुत्तरस्यामिड सकारस्य षो भवति तकारादौ स्तति परे । सर्पिष्टमम् । सर्पिष्ट्वम् । चतुष्टयम् । प्रादिति किम् ? गीस्तरा । स्ततीति किम् ? सर्पिस्तत्र । अमिड इति किम् ? भिन्द्युस्तराम् ।

**निसस्तपतावनासेवने** ॥ ५ । ४ । ७४ ॥ निस सस्य तपतौ परत षो भवत्यनासेवनेऽर्थे । मुहुर्मुहु क्रियाया सेवनमासेवनम् । निष्टप्त सुवर्णम् । निष्टप्ता अरातय । सक्रृत्तप्ता इत्यर्थ ।

**निष्णातनदीष्णातप्रतिष्णाताभिनिष्टानकपिष्ठलप्रष्ठाविष्टरविष्टारगाविष्ठिरयुधिष्ठिरा** ॥ ५ । ४ । ७५ ॥ एते शब्दा निपात्यन्ते । निनदीभ्या स्नातस्य कौशले । निष्णात काव्यकरणे । नदीष्णात नदीस्नाने कुशल इत्यर्थ । अन्यत्र नदीस्नात । नदीष्ण इति सुषामादिषु द्रष्टव्य । प्रतिष्णात

---

( १ ) समद्भूष्ट्या पार्श्वस्याविद्धत्वाद्धकारो लभ्यते । एवमन्यत्रापि बोध्यम् ।

सूत्रं चेत्, प्रतिस्नातमन्यत् । अभिनिष्टानो वर्णश्चेत्, अभिनिस्तानोऽन्यः । कपिष्ठलो गोत्रं चेत् कपिस्थलोऽन्यत्र । प्रष्ठः प्रतिष्ठितश्चेदन्यः प्रस्थः । वेः परस्य वृक्षासनयोः षत्वम् । विष्टरमासनम् । विस्तर इत्यन्यत्र । वेः स्तारस्य छन्दोनाम्नि षत्वम् । विस्तारोऽन्यत्र । गवियुधिपूर्वस्य स्थिरस्य संज्ञायां षत्वम् । गविष्ठिरयुधिष्ठिरौ । गविस्थिरयुधिस्थिरावन्यत्र ।

**सात्** ॥ ५ । ४ । ७७ ॥ सादित्येतस्य च षो न भवति। मधुसात् ।

आमिषम् । इषुः । उषा । उष्णीषः । ऋषिः । ओषधिः । औषधम् । कषायः । काषायः । कलुषम् । कल्मषम् । कल्माषः । गण्डूषः । घोषः । घोषणा । तुषः । तोषः । तृषा । द्वेषः । दोषः । निकषः । निमेषः । पुरुषः । पूरुषः । पुष्या । प्रदोषः । पीयूषम् । पेषणम् । पोषणम् । पोषः । पौषः । वेषः । विषम् । वृषी । भाषा । भिषक् । भूषणम् । भूषा । महिषः । महिषी । मूषिकः । मेषः । भीषणम् । मृषा । शेषः । शोषणम् । श्रौषट् । वौषट् । वषट् । योषा । योषित् । अम्बरीषः । अलम्बुषः । परिषेषः । इत्यादिशब्देषु स्वाभाविकं षत्वम् ।

इति षत्वप्रकरणम् ।



**पूरो णः समाने** ॥ ५ । ४ । ८५ ॥ पदस्येत्यनुवर्तमानं समान इत्यनेन सम्बद्धच ईषा विपरिणम्यते । षकाररेफाभ्यामुत्तरस्य नस्य णकारादेशो भवति समाने पदे । मुष्णाति । विस्तीर्णम् । समाने इति किम् ? मुनिर्नयति। धिन्विकृण्व्योरित्यत्र

णत्वनिर्देशात् क्षुभ्नादिषु तृप्नशब्दस्य णत्वप्रतिषेधाच्च ऋकारादपि परस्य णत्वं भवतीति ज्ञायते । तिसृणाम् ।

**अट्कुप्वाङ्नुम्व्यवायेऽपि** ॥ ५ । ४ । ८६ ॥ अट् कु पु आङित्येतैरेकेनानेकेन वा व्यवायेऽव्यवायेपि षकाररेफाभ्यामुत्तरस्य नस्य णो भवति । वर्षेण । रेफेण । निष्केण । पुष्पेण । आङ्-पर्याणद्धम् । अड् ग्रहणेनैव सिद्धे आङ्ग्रहणं पदव्यवायेऽपीत्यस्य बाधनार्थम् । अनुस्वारस्यायोगवाहत्वादड्ग्रहणेन ग्रहणादनुस्वारव्यवायेपि णत्वम् । बृंहणम् ।

**षात्पदान्तात्** ॥ ५ । ४ । ११४ ॥ पदान्तात्षकारादुत्तरस्य नस्य णो न भवति । निष्पानम् । सार्पिष्पानम् । षादिति किम् ? निर्णयः । पदान्तादिति किम् ? कुष्णाति । पदे अन्तः पदान्त इतीप्सत्वादिह न । सुसर्पिष्केण ।

**अन्तस्य** ॥ ५ । ४ । ११५ ॥ पदस्येत्यनुवर्तमानमिह विशेषणीयम् । पदान्तस्य नस्य णो न भवति । सर्वान् । पुरुषान् ।

**पदव्यवायेऽपि** ॥ ५ । ४ । ११६ ॥ पदेन व्यवायेऽपि नस्य णो न भवति । चतुरङ्गयोगेन । सर्वभावेन ।

**संज्ञा खुः** ॥ १ । १ । २६ ॥ संज्ञावाच्योऽर्थः खुसंज्ञो भवति ।

**पूर्वपदात् खावगः** ॥ ५ । ४ । ८७ ॥ षकाररेफवतेऽगकारान्तात्पूर्वपदादुत्तरस्य नस्य णो भवति खुविषये । श्रोणन्दी । न्याघ्रीणसः । खाविति किम् ? शुष्कनासिकः । अग

इति किम् ? ऋगयनम् । पूर्वपदात्खावेवेति नियमार्थमिदम् । विपरीतनियमे तु वाह्याद्वाहनमित्याद्यारम्भोऽनर्थकः स्यात् ।

**वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** ॥ ५ । ४ । ८८ ॥ एभ्यः परं वन विनम्यते खुविषये । पुरगावणमित्यादि वक्ष्यतेत्र गिरिवने इति खौ दीत्वम् । सिद्धे सत्यारम्भो नियमाय, एभ्य एव वनं विनम्यते, नान्येभ्यः । मनोहरवनम् । वैपरीत्ये तु पुरगादिनियमः स्यात्। वन त्वनियतम्, इति खौ पूर्वेणैव सिद्धत्वादुत्तरसूत्रेऽखावपीत्यपिशब्दोऽनर्थकः स्यात् । दीत्वोच्चारणेन यत्रैव दीत्व तत्रैव स्यात् ।

**प्रान्तर्निःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽखावपि** ॥ ५ । ४ । ८९ ॥ एभ्यो वन विनम्यतेऽखावपि । प्रवणम् । अन्तर्वणम् ।

**विभाषौषधिवनस्पतिभ्यः**[1] ॥ ५ । ४ । ९० ॥ औषधिवनस्पतिशब्देभ्यः परं वनं विभाषया विनम्यते । औषधिभ्यः-दूर्वावण, दूर्वावनम् । वनस्पतिभ्यः-करीरवण, करीरवनम् । व्यवस्थितविभाषया द्व्यक्षरत्र्यक्षरेभ्य एव विकल्पः । इरिकादिभ्यश्च न । भद्रदारुवनम् । इरिकावनम् । खौ पुरगादिभ्य

(१) वनस्पतिशब्देनात्र वृक्षसामान्यं गृह्यते । अन्यथा शिरीषवनमित्यत्र शिरीषाणामदूरभवो ग्रामस्तस्य वनमिति वरणादेरित्युपि 'युक्तवदुपि लिङ्गसङ्ख्ये' इत्यनेन लिङ्गसंख्ययोरतिदेशेऽपि न वनस्पतित्वमस्तीति णत्वं न स्यात् ।

एवेति नियमादस्त्वाविय विभाषा । बहुत्वनिर्देशः पर्यायार्थः । इह वनस्पतिग्रहणे वृक्षाणामपि ग्रहणम् ।

**अतोऽह्नः** ॥ ५ । ४ । ६१ ॥ अकारान्तात्पूर्वपदादुत्तरस्याह्नो नस्य णो भवति । पूर्वाह्णः । अत किम् ? निरह्नः । पराह्नः । सुविनिर्धित्वादह्न इत्यत्र तास्थाने वा । अह्न इत्यकारान्तनिर्देशान्नेह, दीर्घाह्नी ।

**वाह्याद्वाहनम्** ॥ ५ । ४ । ६२ ॥ वोढव्यं वाह्यम् । उह्यतेऽनेनेति वाहनम् । वाह्याद्वाहनं विनम्यते । क्षुद्रवाहणम् । कर्माणि तासः । वाह्यादिति किम् ? सुरवाहनम् । सुरस्वामिकमित्यर्थः ।

**पानं देशे** ॥ ५ । ४ । ६३ ॥ पूर्वपदस्थान्निमित्तात्परं पानं विनम्यते देशे गम्ये । कषायपाणा गान्धारयः । क्षारपाणा अन्ध्राः । सुरापाणा प्राच्याः । तात्स्थ्यात्ताच्छब्द्यमिति मनुष्याभिधाने देशाभिधानम् ।

**वा भावकरणे** ॥ ५ । ४ । ६४ ॥ पूर्वपदस्थान्निमित्तादुत्तरः पानशब्दो वा विनम्यते भावे करणे च । क्षीरपाणं क्षीरपानं वा । पीयतेऽनेनेति पानः । करणे युट् । वारिपाणो वारिपानो वा कंसः । वेति योगविभागाद्गिरिनद्यादिषु वा णत्वम् । गिरिणदी, गिरिनदी ।

**मृदन्तनुम्विभक्त्याम्** ॥ ५ । ४ । ६५ ॥ मृत् सञ्ज्ञा वक्ष्यते । मृदन्ते नुमि विभक्त्या च यो नकारस्तस्य पूर्वपदस्थान्निमित्ताद्वा णत्वं भवति । मृदन्ते, माषवापिणौ, माष-

मायिनौ। नुमि, माषवापाणि, माषवापानि। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति नुमो मृदन्तग्रहणेनाग्रहणम्। विभक्त्याम्। माषवापेण। वेति व्यवस्थितविभाषानुवर्त्तनादिह न। आचार्ययूना।

**एकाजुत्तौ णः॥ ५।४।९६॥** एकाचि धौ पूर्वपदस्थान्निमित्तात् परस्य मृदन्तनुम्विभक्तीनकारस्य णो भवति नित्यम्। वृत्रहणौ। क्षीरपाणि। क्षीरपेण।

**कुमति॥ ५।४।९७॥** कवर्गवति च धौ मृदन्तनुम्विभक्तीनस्य णो भवति। करयुगिणौ। करयुगाणि। करयुगेण।

**गेरसेऽपि विकृते॥ ५।४।९८॥** गेरुत्तरस्य धोर्विकारस्याऽसेपि णो भवति। परिणमति। परिणायकः। अवयवविकारे च समुदायस्य विकारः। तेन नस्य विकारे धोर्विकारः। तेन विकृतिं प्रति क्रियायोगित्वात्प्रादीनां गित्वम्। गेरिति किम्? प्रनायको ग्रामः।

**नशेः शः॥ ५।४।९९॥** नशेः शकारान्तस्यैव णो भवति। प्रणश्यति। श इति किम्? प्रनष्ट।

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु॥ ५।४।१००॥** गिस्थान्निमित्तान्नेर्नस्य णो भवति गदादिषु परेषु। प्रणिगदति। प्रणिनदति। इत्यादि। अड्व्यवाये

इति मण्डूकप्लुत्यानुवर्त्तते। प्रण्यगदत्। तिपा निर्देशा यङ्लुगन्तनिवृत्त्यर्थः।

**चाऽषान्तेऽकखादौ** ॥ ५। ४। १०१ ॥ अषकारान्तेऽककारखकारादौ धौ परतो गिस्थान्निमित्तादुत्तरस्य नेर्वा णो भवति। प्रणिपचति, प्रनिपचति। अषान्त इति किम्? प्रनिपेष्टा। अन्तग्रहणमुपदेशार्थम्। तेन प्रनिपेक्ष्यति। अकखादाविति किम्? प्रनिकरोति। प्रनिखादति। अत्राप्यकखोरिति सिद्धे आदिग्रहणमुपदेशार्थम्। तेन, प्रनिचकार।

**हिम्योर्नुनो** ॥ ५। ४। १०२ ॥ हि मा इत्येतयोर्नुनोर्णो भवति गिस्थान्निमित्तात्। प्रहिणोति। प्रमीणाति। एवौत्वयो क्नयोरेकदेशविकृतस्यानन्यत्वाण्णत्वम्। प्रमीणीत।

**आनि** ॥ ५। ४। १०३ ॥ प्रादिभ्य परस्यानीत्यस्य णो भवति। प्रवपाणि। अथवत एव ग्रहणादिह न। प्रवृद्धा वपा येषा तानि प्रवपानि मासानि।

**णोऽनिते** ॥ ५। ४। १०४ ॥ गे परस्यानितेर्नस्य णो भवति। प्राणिति। अड्व्यवायेऽपि। पर्याणित्। पुनर्णग्रहण पदान्तेऽपि णत्वार्थम्। हे प्राण्।

**सचस्योभौ** ॥ ५। ४। १०५ ॥ गे परस्य सचस्यानितेरुभौ नकारौ विनम्येते। प्राणिणिषति। प्राणिणत्।

---

(१) तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाल्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥

**हन्तेरघः** ॥ ५ । ४ । १०६ ॥ गेः परस्य घादेश-वर्जितस्य हन्तेर्नस्य णो भवति । प्रहण्यते । परिहणनम् । अन्तर्हणनम् । उत्तरत्र व्यवस्थितविभाषावलोकनाद्देशविषये न । अन्तर्हननो देशः । अघ इति किम् ? संज्ञायां पूर्वपदात्खाविति, असंज्ञात्वे त्वेकाज्व्याविति प्राप्तं णत्वं यथा न स्यात् । वृत्रघ्नः ।

**वा म्वोः** ॥ ५ । ४ । १०७ ॥ मकारवकारयोः परतो हन्तेर्नस्य वा णो भवति । प्रहण्मः, प्रहन्मः । प्रहण्वः, प्रहन्वः ।

**कृत्यचः** ॥ ५ । ४ । १०८ ॥ गेरुत्तरस्याचः परस्य कृत्स्थस्य नस्य णो भवति । प्रयाणम् । प्रवहणम् । अच इति किम् ? प्रभुग्नः । निर्विण्ण[1] इत्यस्यासिद्धिस्तु व्यवस्थितविभाषया

**णेर्वा** ॥ ५ । ४ । १०९ ॥ गेः परस्य ण्यन्ताद्विहितस्य कृत्स्थस्याच उत्तरस्य नस्य वा णो भवति । प्रयापणं, प्रयापनम् ।

**हलश्चेजुङः** ॥ ५ । ४ । ११० ॥ इजुङः सर्वस्य हलन्तत्वात्पुनर्हल्ग्रहणमादिविशेषणम् । गेर्निमित्ताद् हलादेरिजुङो धोः परस्य कृत्स्थस्य नस्य वा णो भवति । प्रकोपणं, प्रकोपनम् ।

**सनुम इजादेः** ॥ ५ । ४ । १११ ॥ गेः परस्येजादेरेव सनुमो हलन्ताद्धोर्विहितस्य कृतो नस्य णो भवति । प्रेङ्खणम् । इजादेरिति किम् ? प्रमङ्गनम् ।

क्षुभ्नादिषु ॥ ५ । ४ । ११२ ॥ अविहितलक्षणो णत्वप्रतिषेधोऽत्र गणे द्रष्टव्यः । क्षुभ्नाति । सविकरणनिर्देशादेव, क्षोभणम् । एकदेशविकारे [illegible] स्यादेव । क्षुभ्नन्ति । एवं हरिनन्दी । 'पूर्वपदात्खौ' इति प्राप्तं णत्वमनेन प्रतिषिद्धम् । आचार्यादणत्वं च । आचार्यानी । इरिकादीनि वनोत्तरपदानि (ग.) । इत्यादि ।

टङ्कणं कङ्कणं कोणः कणिका किक्वणं कणः ।
किङ्किणी काकिणी काणः कुणपः किणपक्वणौ ॥ १ ॥
कल्याणं मत्कुणो घोणी कुणिर्गोणी गणः कणा ।
अणुर्वाणी पणो गौणं गणिका लवणं घुणः ॥ २ ॥
लावण्यं चणकं घोणा विपणिः स्थाणुरापणम् ।
स्थूणा पण्यं फणा पाणिः कफोणिः पणवः फणः ॥ ३ ॥
निकाणो निक्वणः क्वाणो नैपुण्यं शुमणिः फणी ॥
वाणिज्यसुल्वणं वाणो चाणः शोणो वणिक् तथा ॥ ४ ॥
वीणा शाणो मणिर्भाणः पणाया पुण्यशोणिते ॥
एते स्वाभाविकणत्वयुक्ताः शब्दाः प्रकीर्तिताः ॥ ५ ॥

इति विनामप्रक्रिया ।

---

## अथ सुबन्तप्रक्रिया ।

तच्च सुबन्तं पुंस्त्रीनपुंसकलिङ्गालिङ्गभेदाच्चतुर्धा । पुंस्त्रीनपुंसकलिङ्गानि प्रत्येकं द्विधा, अजन्तहलन्तभेदात् । तत्राजन्तमकाराद्यनुक्रमाद्यावत्पुलिङ्गमभिधीयते ।

अघु मृत् ॥ १ । १ । ५ ॥ घुवर्जितमर्थवच्छब्दरूपं मृत्संज्ञं भवति । धोरर्थवत एव पर्युदासादर्थवत्त्वमत्र लभ्यते ।

कृद्धृत्साः ॥ १ । १ । ६ ॥ कृदन्तं हृदन्तं ससञ्ज्ञकं च मृत्संज्ञं भवति । नायं विधिः, सिद्धे सत्यारम्भस्य नियमार्थत्वात् । तेन स्यान्तेषु कृद्धृदन्तस्यैव मृत्सञ्ज्ञा, नान्यस्य । सग्रहणमपि अर्थ-

त्सप्रधानाना चेत्तर्हि ससञ्ज्ञकस्यैव मृत्सञ्ज्ञेति नियमार्थम् । तेन न वाक्यस्य ।

त्य ॥ २ । १ । १ ॥ अधिकारेण संज्ञेयमा कपः ।

परः॥ २ । १ । २ ॥ नियमार्थेयं परिभाषा, पर एव त्यो भवतीति ।

ङ्याम्मृदः ॥ ३ । १ । १ ॥ यदित ऊर्ध्वमनुक्रमिष्याम आ कपन्तद् ङ्यन्तादाबन्तान्मृद्रूपाच्च पर भवति। मृद्ग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणात्सिद्धे ङ्याब्ग्रहण, परमपि हृस्य बाधित्वा स्त्रीत्यो यथा स्यात् । अथ ङ्कृपरूपेति प्रादेशवचनात्सिद्धमेव तद्विति चेत्तर्हि लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् ।

स्वौजसमौट्छस्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङ-सोसाम्ङ्योस्सुप् ॥ ३ । १ । २ ॥ ङ्यन्तादाबन्तान्मृद्रूपाच्च परा स्वादयो भवन्ति ।

इप् । टा भ्या भिसिति मा । ङे भ्या भ्यसिति अप् । ङसि भ्या भ्यसिति का । ङस् ओस् आमिति ता । ङि ओस् सुबिति ईप् । वीरशब्दात् साधनत्वे विवक्षिते एकत्वाद्यर्थे चादीनां स्यादयः । इत्येकत्वार्थे सौ कृते सुप्तिङन्तमिति पदसंज्ञायां ससजुषोरिति सस्य रिः । विरामे विसर्जनीय इति विसर्जनीयः । वीरः । द्वित्वविवक्षायामौ । एच्यैपि प्राप्ते,—

सुधि पूर्वस्वम् ॥ ४ । ३ । ८९ ॥ अकोऽचि सुधि पूर्वस्वो द्वयोरेको दीर्घो भवति । इति दीर्घत्वे प्राप्ते,—

नेच्यात् । ४ । ३ । ९२ ॥ अवर्णान्तादिचि सुधि पूर्वस्वो दीर्घो न भवति । इत्यैप् । वीरौ । अथ प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् । ततोऽनेकार्थाभिधानेऽनेकशब्दत्वे प्रसक्तमत एकशेषः । तत्रोच्यते,—

स्वाभाविकत्वादभिधानस्यैकशेषानारम्भः ॥ १ । १ । १०० ॥ शब्दः स्वभावत एकशेषमनपेक्ष्यैवैकत्वद्वित्वबहुत्वेषु वर्तत इत्येकशेषानारम्भः । एकत्वादीनां प्रकृत्युपात्तानामभिव्यक्तये विभक्त्युपादानम् । यथा एकः, द्वौ, बहवः । नतु नौरिव नावः, नतु नम् । कार्यार्थोऽप्रयोगीदिति जस्यत्संज्ञा ।

एप्यतोऽपदे ॥ ४ । ३ । ८४ ॥ अकारस्य परस्य अतःऽपदे एपि परतः । इति प्राप्ते परत्वाद्-नच्छ चाच सुधि पूर्वस्वमिति दीः । वीराः । सुरयन्ति, सुरयन, सुरयथ-नीत्यादिक्रियासम्बन्धः सर्वत्र ।

सम्बोधने धोऽध्यम् ॥ १ । ४ । ५० ॥ सम्बोधनमभिमुखीकरणम्, तत्र या वा तस्या वाऽयमिति संज्ञा भवति ।

एक कि ॥ १ । ४ । ५६ ॥ बोध्यसज्ञाया वाया एकवचनं किसज्ञ भवति ।

प्रात् ॥ ४ । ३ । ५८ ॥ प्रान्तात्परस्य केरवयवस्यानच ख भवति । हे वीर । हे वीरौ । हे वीरा । कर्मसाधनादिविवक्षाया क्रमेणेवादय ।

पूर्वोऽमि ॥ ४ । ३ । ९४ ॥ अकोऽमि परतो द्वयोरेक पूर्वरूपो भवति । वीरम् । अचीति वर्त्तनान्न मकारस्य पूर्वरूप । सुटीत्येव । अचिनवम् । वीरौ ।

नश्च पुंसि ॥ ४ । ३ । ९१ ॥ शसि परत पूर्वस्वो दीर्भवति नश्चान्तादेश पुसि गम्यमाने । वीरान् । 'अन्तस्य' इति न णत्वम् । अनुक्ते कर्तरि करणे च भा ।

यस्ये तदादि गुः ॥ १ । २ । १०१ ॥ यस्य धोर्मृदो वा त्यो यस्त्यस्मिन् परतस्तदादि शब्दरूप गुसज्ञ भवति । केवलाया प्रकृतेर्व्यपदेशिवद्भावात्तदादित्वम् । यदिति सज्ञिनिर्देशार्थम् । तास किम् [२] यथा देवदत्त इ[३] पश्येत्यत्रादेरैब् न स्यात् । यत्त्य इति वया सिद्धे ईब्निर्देशाद् यस्य त्य सम्भवति तस्यान्य-

१ तदादिवचन यत्रानेकस्त्य सम्भवति तदादिगुसज्ञा यथा स्यात । तेन कुण्डानात्यश सनुमकस्य दाव सिद्धम । गुरिति पुसा निर्देशा मपदसज्ञासमावेशार्थ । तेन व भ्रव्य ति गुरुसज्ञाश्रय आदरेप । मसज्ञाश्रय कद्रारोऽस्वयम्भुव स्त्याकार । नपुंसकत्वे हि गुसज्ञा ह्यागपन्य होत्रमित्यत्र म यकाशा सता पदमजया बाध्येत ।

२ तेन पुत्रमात्मस्य गुत्वानिषधान्न्यविशत इत्यत्र रुगेरडागमो न ।

३ अस्याप यमि । अस्तस्य स्थानिवद्भावादस्य व्यवधानमिति चेन्न, अनादिष्टादच पूर्वस्यैव स्थानिवद्भावात् ।

स्त्रिनपि शब्दे गुसंज्ञा यथा न स्यात् । तथा च स्त्रियै इदं स्त्र्यर्थमित्यत्रेयादेशो न ।

**गोः** ॥ ४ । ४ । १ ॥ इत्यधिकृत्य,—

**स्येनान्ङस्टाङसेः** ॥ ५ । १ । १० ॥ अकारान्ताद्गोः परेषां ङस्टाङसीनां स्य इन आदित्येते आदेशा भवन्ति । आदेप् । वीरेण ।

**सुपि** ॥ ५ । २ । ९७ ॥ अकारान्तस्य गोर्यमादौ सुपि दीर्भवति । अन्तेऽलः । वीराभ्याम् ।

**भिसोऽत ऐस्** ॥ ५ । १ । ८ ॥ अकारान्ताद्गोरुत्तरस्य भिस ऐस् भवति । अङित्त्वात्सर्वादेशः । वीरैः । ऐस्ग्रहणं किम् ? अतिजरसैः ।

**ङेर्यः** ॥ ५ । १ । ११ ॥ अकारान्ताद्गोरुत्तरस्य ङेर्य इत्ययमादेशो भवति ।

**स्थानीवादेशोनल्विधौ** ॥ १ । १ । ५६ ॥ आदेशः स्थानीव भवत्यनलाश्रयेषु कार्येषु । इति यादेशस्य सुप्त्वात् सुपीति दी । वीराय । वीराभ्याम् । भ्यसि कृते ।

**बहौ झल्येत्** ॥ ५ । २ । ९८ ॥ झलादौ बहुवच्ने सुपि परतो ऽकारान्तस्य गोरेकारादेशो भवति । वीरेषु इत्यत्रास्य चरितार्थत्वात , वीराभ्यामित्यत्र च सुपीत्यस्य चरितार्थत्वादिहोभयस्य समानरूपेण प्राप्ते,—

**स्पर्द्धे परम्** ॥ १ । २ । ८९ ॥ द्वयो प्रसङ्गयोरन्यार्थयोरेकस्मिन्युगपदुपनिपाते सघर्ष स्पर्द्धस्तत्रेष्ट प्रवर्त्तते । इत्येत्वम् ।

वीरेभ्य । ङसेरात् । वीरात् । वीराभ्याम् । वीरेभ्यः । ङसः स्यः । वीरस्य ।

**ओसि** ॥ ५ । २ । ९ ॥ ओसि परतोऽकारान्तस्य गोरेकारादेशो भवति । वीरयो ।

**प्रेल्म्वाप्चतुरो नुट्** ॥ ५ । १ । ३६ ॥ प्रइल्मुसंज्ञकेभ्य आवन्ताच्चतुःशब्दाच्चामो नुडागमो भवति ।

**नाम्यतिसृचतसृ** ॥ ४ । ४ । ३ ॥ नामि परतोऽजन्तस्य गोर्दीर्भवति, न तिसृचतस्रो । वीराणाम् । वीरे । वीरयोः । वीरेषु । एव देवादयोपि । एवं सर्व । सर्वौ । पुरस्तादत्र विशेष ।

**सर्वादिः सर्वनाम** ॥ १ । १ । ३५ ॥ सर्वादयः शब्दाः प्रत्येकं सर्वनामसंज्ञा भवन्ति ।

**जसः शी** ॥ ५ । १ । १४ ॥ अकारान्तात्सर्वनाम्नो गोः परस्य जस शी इत्ययमादेशो भवति । शित्सर्वस्येति सर्वादेशः । सर्वे ।

**सर्वनाम्नः स्मै** ॥ ५ । १ । १२ ॥ अकारान्तात्सर्वनाम्नो गोरुत्तरस्य ङे स्मै इत्ययमादेशो भवति । सर्वस्मै ।

**ङसिङ्योः स्मात्स्मिनौ** ॥ ५ । १ । १३ ॥ अकारान्ता-

---

१ सर्व, विश्व, उभ, उभय डतर, डतम ( एतौ त्यौ तदन्तास्तदन्ता ग्राह्याः ), इतर, अन्य, अन्यतर, त्व, नेम, सम ( सर्ववाची ), सिम, पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम स्वमज्ञातिधनाख्यायाम, अन्तर बहिर्योगोपसंव्यानयोः ( उपसंव्यान परिधानीयम् ), त्यद, तद, यद, एतद्, अदस्, इदम्, एक, द्वि, युष्मद्, अस्मद् , भवत्, एत सर्वादय ।

त्सर्वनाम्नो गोरुत्तरयोर्ङसिङ्योः स्मात् स्मिन्नित्येतावादेशौ भवत । सर्वस्मात् ।

**आम्यात्सर्वनाम्नः सुट् ॥ ५ । १ । ३४ ॥** अवर्णान्तात्सर्वनाम्नो गोरुत्तरस्यामः सुड् भवति । बहौ अल्येदित्येत्वम् । इण्कोरिति ष । सर्वेषाम् । सर्वस्मिन् । शेष वीरवत् । एवमदन्ता विश्वादयोपि । सर्वनामेत्यन्वर्थसंज्ञाकरणान्न सज्ञोपसर्जनाना सज्ञा । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय ।

**न वे ॥ १ । १ । ३७ ॥** वसे चिकीर्षिते सर्वादीनि सर्वनामसज्ञानि न भवन्ति । त्वक पिताम्य, अहक पिताम्य त्वत्कपितृको मत्कपितृक । अन्यथात्र वाक्यवद् । यदि सर्वनामसज्ञास्तेनाकच् प्रवर्त्तेत तदा सेप्यकच्च श्रूयेत, त्वकत्पितृको मकत्पितृक इति । बाधिकारे पुनर्वग्रहण बसगर्भे द्वन्द्वेपि नित्यप्रतिषेधार्थम् । वस्त्रान्तरगृहान्तरा ।

**भासे ॥ १ । १ । ३८ ॥** पूर्वपरावरेत्यादिक्लृते भासे सर्वादीनि सर्वनामसज्ञानि न भवन्ति । सवत्सरपूर्वाय । स इति वर्तमाने पुनः सग्रहण भासार्थे वाक्येपि तत्सज्ञाप्रतिषेधार्थम् । मासेन पूर्वाय । पूर्वपरावरेत्यादिक्लृते भासे इति किम् ? त्वयका कृतम् ।

**द्वन्द्वे ॥ १ । १ । ३९ ॥** द्वन्द्वे से सर्वादीनि सर्वनामसज्ञानि न भवन्ति । कतरकतमाय ।

**वा जसि ॥ १ । १ । ४० ॥** द्वन्द्वे मे सर्वादीनि सर्वनामसज्ञानि वा भवन्ति जसाधारे शीत्वे कर्तव्ये । कतरकतमे, कत-

रकतमाः । शीभाव एवानेन विभाष्यते, न तु जसि परतोऽगादिस्त्यः, तस्य पूर्वेणैव नित्यं प्रतिषेधात् । ततस्तत्र क एव, वर्णाश्रमेतरकाः ।

**प्रथमचरमतयाल्पार्धकतिपयनेमाः ॥ १ । १ । ४१ ॥** एते जसि वा सर्वनामसंज्ञका भवन्ति । प्रथमे, प्रथमाः । तय इति त्यग्रहणेन वचनात्तदन्तविधिः । द्वितये, द्वितयाः । एकदेशविकृतस्यानन्यत्वादिहापि, द्वये, द्वयाः । शेषं वीरवत् । उभयशब्दे तु स्पर्धे परमिति पूर्वनिर्णयेन नित्यैव संज्ञा । उभये । नेमे, नेमाः । अत्र तूच्चारणसामर्थ्याद्विकल्पः । शेषं सर्ववत् । प्राप्ताप्राप्तविभाषेयम् । अत्रापि कार्यं प्रत्येव विकल्पः । तेन प्रथमका इत्येव ।

**पूर्वादयो नव ॥ १ । १ । ४२ ॥** पूर्वादयो नव सर्वादौ व्यवस्थिता जसि वा सर्वनामसंज्ञा भवन्ति । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (ग)। स्वमज्ञातिधनाख्यायाम् (ग)। अन्तरं बहिर्योगोपसंव्यानयोः (ग)। इत्यर्थे सर्वादौ व्यवस्था । पूर्वे, पूर्वाः । नेह, दक्षिणा इमे गाथकाः, कुशला इत्यर्थः । नात्र दिग्देशकालकृतोवधिनियमो व्यवस्था प्रतीयते । तथा उत्तराः कुरवः । संज्ञैषा । स्वे, स्वा वा शिष्याः । नेह, स्वा ज्ञानयोर्था वा । अन्तरेऽन्तरा वा गृहाः । बाह्या इत्यर्थः । उपसंव्याने, अन्तरेऽन्तरा वा शाटकाः । नेह, अयमनयोरन्तरे स्थितः । अपुरीति वक्तव्यम् । अन्तरायाः पुर आगता, बाह्याया इत्यर्थः ।

**ङिङस्योरतः ॥ १ । १ । ४३ ॥** पूर्वादीन्यकारान्तानि नव ङिङस्योर्वा सर्वनामसञ्ज्ञानि भवन्ति । पूर्वस्मिन्, पूर्वे । पूर्वस्मात्, पूर्वात् । ङिङस्याश्रय कार्यमेव विभाष्यते । अक् तु नित्यमेव । अत किम् ? पूर्वस्याम् ।

**तीयस्य ङिति ॥ १ । १ । ४४ ॥** तीयत्यान्तस्य सर्वनामसञ्ज्ञा वा भवति ङिति । द्वितीयस्मै, द्वितीयाय । लाक्षणिकत्वान्नेह, मुखतीयाय । कार्यविकल्पोऽक् तु न । तेन द्वितीयकाय इत्येव । जरामतिक्रान्तोऽतिजरः ।

**जराया वाऽसङ् ॥ ५ । १ । १६० ॥** जराशब्दस्यासङादेशो वा भवत्यजादौ विभक्त्याम् । ङित्त्वादन्त्यस्य । 'पदग्वधिकारे तस्य तदन्तस्य च' इति जरान्तस्याप्यसङ् । एकदेशविकृतस्यानन्यत्वात्प्रान्तस्यापि सिद्धम् । अतिजरसौ । अतिजरसः । अतिजरसम् । टादाविनादीन्बाधित्वा परत्वादसङ् । अतिजरसा । भिस ऐसि कृते 'सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्य' इति नासङ् । अनित्येय परिभाषेति केषाचिन्मते तु अतिजरसैः । पक्षे हलादौ च वीरवत् । चतुर्व्हेह सु भवश्चतुरह्न । विगतमहर्व्यह्न । स यमह सायाह ।

**सख्यानिसायादेरह्नस्याहन्वा ङौ ॥ ४ । ३ । २१५ ॥** सख्याविसायपूर्वस्याह्नस्याहन्नादेशो वा भवति ङौ ।

**सुडऽनपः ॥ १ । १ । ३२ ॥** सुडिति स्वौजसमौटा ग्रहणम् । नबिति नपुसकलिङ्गसञ्ज्ञा । सुड् धसञ्ज्ञो भवत्यनपि ।

**स्वादावऽधे ॥ १ । २ । १०५ ॥** धवर्जिते स्वादौ परत

पूर्वं पदसंज्ञं भवति ।

यचि भः ॥ १ । २ । १०६ ॥ घवर्जिते यकारादावजादौ च स्वादौ पूर्वं भसंज्ञं भवति । शसादावच्यनवकाशाद्भसंज्ञैव ।

भस्य ॥ ४ । ४ ११६ ॥ आ पादपरिसमाप्तेरधिकारोयम् ।

अनोऽखमऽम्वस्फात् ॥ ४ । ४ । १२० ॥ अन्नन्तस्य भस्य गोरनोऽस्य खं भवति, यदि स वकारमकारान्तात्स्फात्परो न स्यात् । इति नित्यमखे प्राप्ते,–

वा ङिङ्योः ॥ ४ । ४ । १२२ ॥ अन्नन्तस्य भस्य गोरखं वा भवति ङिङ्योः । चतुरह्नि, चतुरहनि, चतुरह्ने । व्यह्नि, व्यहनि, व्यह्ने । सायाह्नि, सायाहनि, सायाह्ने । एवं द्व्यह्नादयः । इत्यकारान्तप्रक्रिया । कीलालपाः ।

द्यो जसि च ॥ ४ । ३ । ९३ ॥ वन्ताज्जसीचि च द्वयोरेकः पूर्वस्वदीर्घ भवति । कीलालपौ । जसि 'सुटि पूर्वस्वम्' इति प्राप्तं निषिध्यते । तत 'स्वेऽको दीः' इति दीत्वम् । कीलालपाः । कीलालपाम् । शसि,–

आतो धोः ॥ ४ । ४ । १२५ ॥ आकारान्तस्य धोर्भस्य खं भवति । कीलालपः । कीलालपा । इत्यादि । एवं क्षीरपादयः धोः किम् ? हाहान् । हाहा । हाहै । हाहा । हाहौ । हाहाम् । हाहे । हाहासु । इत्यादन्ताः । नेमि । सुटि पूर्वस्वम् । नेमी ।

जसि ॥ ५ । २ । १०४ ॥ प्रान्तस्य गोरेब्भवति जसि । नेमय ।

मस्येप् ॥ ५ । २ । १०३ ॥ प्रान्तस्य गोरेब्भवति कौ ।

फेरेङः ॥ ४ । ३ । ५७ ॥ एडन्तादुत्तरस्य केः खं भवति। हे नेमे । हे नेमी । हे नेमयः । नेमिम् । नेमीन् ।

स्त्र्यऽसखि ॥ १ । २ । ९६ ॥ य्वोः प्र सुसंज्ञौ भवति सखिशब्दमन्तरा ।

आङो नाऽस्त्रियाम् ॥ ५ । २ । ११३ ॥ आङिति टासंज्ञा । सोरुत्तरस्याङो ना भवत्यस्त्रियाम् । नेमिना। अस्त्रियां किम् ? बुद्धया ।

सोर्ङिति ॥ ५ । २ । १०६ ॥ सुसंज्ञस्य गोरेब्भवति ङिति सुपि । नेमये ।

ङसिङसोः ॥ ४ । ३ । ९७ ॥ एङ उत्तरयोर्ङसिङसोरति परे द्वयोरेक पूर्वो भवति । नेमेः । नेमीनाम् ।

औदच्च सोः ॥ ५ । २ । ११२ ॥ असुसंज्ञकादित उतश्चोत्तरस्य ङेरौकारादेशो भवति, सुश्चेत्तस्याकारादेशश्च । प्रधानशिष्टमिदुद्भ्यामौत्त्वमन्वाचयशिष्ट तु सोरत्त्वम् । तेन सुसंज्ञाऽभावे केवलमौत्वम् । तपरकरणमुच्चारणसुखार्थम् । नेमौ। नेमिषु। अन्यत्राजादौ यण्, हलादावविशेष । एव गिरिकव्यादयः।

अनङ् सौ ॥ ५ । १ । ७० ॥ सख्युर्गोरनङादेशो भवत्यकौ सौ । ङित्त्वादन्त्यस्य ।

धेऽक्कौ ॥ ४ । ४ । ६ ॥ किवर्जिते धे परतो नकारान्तस्य गोरुङो दीर्भवति ।

हल्ङ्यापो द्यः सुसिप्त्यनच्च ॥ ४ । ३ । ५६ ॥ हलन्तान्ङ्यापोर्या दीस्तदन्ताच्च परेषामनचां सुसिप्तीनां खं भवति ।

रफान्तखेन सिद्धे हल्ग्रहण ' नख मृदन्तस्य ' इति नखार्थम्। अन्यथा रफान्तखस्यासिद्धत्वान्नख न स्यात् । ख किम् ? अति ऋद्व ।

नखं मृदन्तस्या भौ ॥ ५ । ३ । ३० ॥ पदस्य योवयवो मृदन्तःतस्य नस्य खं भवति, न तु कौ । सखा । मृद्ग्रहण किम् ? अयमन् । पदस्येति किम् ? राजानौ ।

सख्युरकौ ॥ ५ । १ । ६९ ॥ सखिशब्दात्परोऽकिविषयो धो णिद्भवति ।

ञ्णित्यचः ॥ ५ । २ । ३ ॥ अजन्तस्य गोरैब्भवति ञिति णिति च परे । सखायौ । सखाय । हे सखे । सखायम् । सखायौ । सखीन् । सख्या । सख्ये ।

ख्यत्यादतः ॥ ४ । ३ । ९९ ॥ खिखीतितीशब्देभ्य परयोर्ङसिङसोरत उद्भवति । सख्यु । कृतयणादेश इष्टार्थ । ततो नेह, अतिसखे । परम सखा यस्यासौ परमसखा । तस्मात् परमसखे । स्वसखीति पर्युदासनजा तत्सदृशस्य ग्रहणात्सुसज्ञात्र। अनङ्णित्त्वयोर्गंधिकारित्वात्तदन्तेपि प्रवृत्तिः, परमसखा । सखी मतिक्रान्तोतिसखिरित्यत्र तु लाक्षणिकत्वान्नानङ्णित्त्वे । अतिसखि । अति सखी । सुसज्ञा तु स्यादेव । अतिसखिना । अतिसख्ये । एव परमसखीन् । परमसखिना । " औदच्च सो " इति डेरौत् । सख्यौ । शेष नेमिवत् ।

पतिः से ॥ १ । २ । ९७ ॥ पतिशब्द से एव सुसज्ञो भवति । जिनपतिना । सर्वं नेमिवत् । से एवेति किम् ? पत्या ।

पत्ये । पत्यु । पत्यौ । पतिरेव से इति विपरीतनियमस्तु न, " द्वन्द्वे सु " इत्य यानर्थक्यप्रसङ्गात् ।

**कति॰ संख्या** ॥ १ । १ । ॥ संख्यायतेनयेत्य वर्थविज्ञानात्सिद्धेपि पुनर्ग्रहण नियमाय, कतिरेव सख्यासंज्ञो भवतीति ।

**ष्णान्तेल्** ॥ १ । १ । ३४ ॥ षकारनकारान्ता सख्या कतिशब्दश्चेल्सज्ञौ भवतः ।

**उबुजुस्** ॥ १ । १ । ६२ ॥ उप्,उच्,उस्—सज्ञाभिर्भावितस्य नाशस्यैता पृथक्सज्ञा भवन्ति ।

**उविलः** ॥ ५ । १ । १९ ॥ इत्सज्ञकादुत्तरयोर्जस्शसोरुब् भवति ।

**त्यखे त्याश्रयम्** ॥ १ । १ । ६३ ॥ त्यस्य खे कृतेपि तदाश्रित कार्यं भवति । सुम्भिङ्किन्यङ्णिखानि प्राय मयोजयन्ति । इति जस खेपि तदाश्रये एपि प्राप्ते,—

**नोमता गोः** ॥ १ । १ । ६४ ॥ उमता शब्देन नाशिते त्ये गोस्तदाश्रित कार्यं न भवति। कति २। शेप नेमिवत् । त्रिशब्दो बहुवचन । त्रय । त्रीन् । त्रिभि । त्रिभ्य २।

**त्रेस्त्रयः** ॥ ५ । १ । ३५ ॥ त्रीत्यस्य त्रयादेशो भवत्यामि परे । त्रयाणाम् । परमत्रयाणाम् । त्रिपु । द्विर्नित्य द्विवचन ।

**त्यदादेरः** ॥ ५ । १ । १६१ ॥ त्यदादीनामकारादेशो भवति विभक्त्याम् । अत्त्वविधिं प्रति द्विपर्यन्तास्त्यदादय । द्वौ २। द्वाभ्याम् ३। द्वयो २। सज्ञोपसर्जनीभूताना नात्व, सर्वनामान्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । अतिद्वि । अनयो-

नमिवत् । प्राधान्ये तु परमद्रौ । लक्ष्मीमतिक्रान्तोतिलक्ष्मी । अतिलक्ष्म्यो २। अतिलक्ष्म्य ।

म्या स्त्र्याख्यो मुः ॥ १ । २ । ९१ ॥ स्त्रियमाचक्षाते स्त्र्याख्यौ यावीकारोवारौ तदन्त शब्दरूप मुसञ्ज्ञं भवति । आख्याग्रहणं स्त्रीत्वे प्राग्वोत्येपि मुसञ्ज्ञार्थम् ।

मोऽम्बार्थम्वोः ॥ ५ । २ । १०२ ॥ अम्बार्थवाचकाना मुसञ्ज्ञस्य च म्रो भवति कौ परत । हे अतिलक्ष्मि । अतिलक्ष्मीम् । अतिलक्ष्मीन् । अतिलक्ष्म्या ।

अण् मोः ॥ ५ । २ । १०७ ॥ मुसञ्ज्ञकाद्दो परस्य ङितोऽडागमो भवति ।

अटश्च ॥ ४ । ३ । ७८ ॥ अटोचि परतो द्वयोरैऽ ऐऽभवति । एनपवादोयम् । अतिलक्ष्म्यै । अतिलक्ष्म्या २। मुत्वान्नुट् । अतिलक्ष्मीणाम् ।

ङेराम्न्याम्नीभ्यः ॥ ५ । २ । ११० ॥ मुसञ्ज्ञादानन्तानीशब्दाच्च परस्य ङेरामादेशो भवति । परत्वात्पूर्वमट् । तत सकृद्बाधितस्य बाधितत्वान्न नुट् । अतिलक्ष्म्याम् । शेषं सुगमम् । अतितन्त्र्यादयोप्येवम् । बहुश्रेयसीशब्दे तु हल्ड्याप इति मुगेपो विशेष । कुमारीवाचरन्ती कुमारी । आचारेत्र क्विप एस् । 'हल्ड्याप' इति सुलम् ।

श्नुभ्रुवां य्वोरियुवौ ॥ ४ । ४ । ७१ ॥ श्नुभ्रुवा गृणामिवर्णोवर्णयोरियुवादेशौ भवतोऽचि । इति प्राप्ते,

र्यागिवाक्स्वादृटोऽन्सुधियः ॥ ४ । ४ । ७७ ॥ वक्ष्यते

वात्, 'कर्मण्यणि' त्यादि। गिवाक्चपूर्वादुड पर येवर्ग-य यण भव त्यचि, सुधीशब्द वर्जयित्वा । कुमार्यौ २। कुमार्य २। हे कुमारि। कुमार्यम् । कुमार्यो । कुमार्यै। कुमार्यो २। कुमाया २। मुत्वान्नुट्, कुमारीणाम् । कुमार्याम्। गिपूर्वादुड — उन्नयतीत्युनी । उन्न्यौ २। उन्न्य २। उन्न्यम् । उन्न्याम् । एव परिणी । प्रकृष्ट ध्यायतीति प्रधी । प्रध्याम् । प्रध्यि । वाक्पूर्वादुड से नान्यौ । सेनान्याम् २। गिवाक्चपूर्वादुड इति किम् ? यव क्रियौ । नेह, सुधियो । सुधियम्। आमि, सुधियाम् । सुधियि । सह खेन वर्तते इति सख । तमिच्छति सखीयति । तत क्विप्यत खम् । तत ,—

**खलि क्योः खम ॥ ४ । ३ । ५५ ॥** धोरधोर्वा वकारय कारयो ख भवति चलि परे ।

**परेऽचः पूर्वविधौ ॥ १ । १ । ५७ ॥** परनिमित्तोऽजादेश स्थानीव भवति पूर्वविधौ कर्तव्ये । अल्विध्यर्थमिदम् । इत्यखस्य स्थानिवद्भावेन यखेऽप्राप्ते,

**न पदान्तद्विवरेयखस्वानुस्वारदीचर्विधौ ॥ १ । १ । ५८ ॥** पदान्तादिविधिष्वजादेश स्थानीव न भवति । इति यखम् । सखी । सख्यौ २। सख्य २। सख्यम्। सख्युः२। आमि, सख्याम् । सख्यि । लून पून वेच्छतीति लूनी । पूनी । लून्यम् । यणादेशान्नत्वस्यासिद्धत्वेन तीरूपत्वाच ङसिङसोरत उत् । लून्यु । पून्यु । लून्यि । पून्यि । उदन्ता गुरुवायुभान्वा दयो नेमिवत् । हूह । हूहो । हूह्व । हूहम् । हूहून् । हूहा ।

हृहे । हृहः २। हृहाम् । हृहि । अतिचमूः अतिलक्ष्मीवत् । खलं पुनातीति क्विपि, खलपूः ।

**सुप्योः ॥ ४ । ४ । ७८ ॥** गिवाक्चपूर्वादुङः परस्योवर्णस्य यण् भवत्यजादौ सुपि । खलप्वम् । खलप्वः । खलप्वि । एवं सकृल्लूः । गिवागिति किम् ? भुवौ । परमलुवौ । कटप्रुवौ ।

**दन्कारापुनर्वर्षाभ्यो भुवः ॥ ४ । ४ । ७९ ॥** एभ्य एवोत्तरस्य भुवो यण् भवत्यचि सुपि । दन्भ्वौ । दन्भ्वः । इत्यादि । एवकारान्नेह, मित्रभुवौ । क्रोष्टृक्रोष्टुशब्दावेकार्थौ । तत्र धे परतः स्त्रियां च क्रोष्टृशब्दस्यैव प्रयोगः ।

**ऋतो ङिधे ॥ ५ । २ । १०५ ॥** ऋकारान्तस्य गोरेब्भवति ङौ धे च परतः । इति प्राप्तेऽनवकाशात्,–

**ऋदुशनस्पुरुदंशोनेहसाम् ॥ ५ । १ । ७१ ॥** ऋकारान्तानामुशनसादीनां चानङादेशो भवत्यकौ सौ । इत्यनङ् ।

**स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृत्रपाम् ॥ ४ । ४ । ८ ॥** एषामुङो दीर्भवत्यकौ धे । क्रोष्टा । क्रोष्टारौ२। क्रोष्टारः। कौ शस्यामि हलादौ च क्रोष्टुशब्दस्यैव प्रयोगः । हे क्रोष्टो । क्रोष्टारम् । क्रोष्टून् । भादिष्वजादिषु चोभयोः । क्रोष्ट्रा, क्रोष्टुना । क्रोष्टुभ्याम् । क्रोष्टुभिः । क्रोष्ट्रे, क्रोष्टवे ।

---

(१) पाणिनिना अविधानार्थं सूत्राणि प्रणिहितानि । अत्र तु लोके यत्र यत्रानयोर्वैः प्रयोगो दृश्यते तत्र तस्य स प्रयोगो ज्ञातव्यः । 'परञ्जो' इत्यादौ [illegible] वेदम् ।

ऋत उत् ॥ ४ । ३ । ९८ ॥ ऋतो ङसिङसोरचि परे द्वयोरेक उद्भवति । रन्त ।

रात्सः ॥ ५ । ३ । ४२ ॥ स्फान्तस्य पदस्य स्फे यो रेफस्तस्मात्परस्य सस्यैव खं भवति । क्रोष्टु, क्रोष्टौ २। क्रोष्ट्रो', क्रोष्टोः२। क्रोष्टूनाम् । क्रोष्टरि, क्रोष्टौ । क्रोष्टुषु । कर्ता । कर्तारौ। कौ 'ऋतो ङिधे' इत्येपि, हे कर्त ।इत्यादि । एवमुद्गातृधातृनप्त्रादय । व्युत्पत्तिपक्षे तृग्रहणेन सिद्धे पुनर्नप्त्रादिग्रहण ' त्रन्तानामुणादिनिष्पन्नाना दीर्घश्चेत्तर्हि नप्त्रादीनामेव' इति नियमार्थम् । तेनेह न, पितरौ । पितर । इत्यादि । भ्रात्रादयोप्येवम् । नेतृशब्दस्य तूणादित्वाभावात् नेतारौ । नेतार । ना । नरौ । नर ।

नुर्वा ॥ ४ । ४ । ४ ॥ नृशब्दस्य वा दीर्भवति नामि परे। नृणाम्, नृणाम् । शेष पितृवत् । ऋकारलकारलृकारान्ता अप्रसिद्धाः । परमे । परमयौ२। परमय । परमयम् । परमय । परमयाम् । इत्यादि ।

गोर्णित् ॥ ५ । १ । ६७ ॥ गोशब्दाद्विहित ध णिद्वद्भवति । तत ऐप् । गौ । गावौ । गाव । गोरैविति सिद्धे णिदिति प्रतिपत्तिगौरव किम् ? क्वचिदन्यत्राप्यतिदेशो यथा स्यात् । तेन, सुद्यौः ।

ओतः ॥ ४ । ४ । ७५ ॥ ओत आकारादेशो भवत्यमृशसो परत । गाम् । गा । गवा । गोभ्याम् । इत्यादि ।

रायो हलि ॥ ५ । १ । १४४ ॥ रैशब्दस्याकारादेशो भवति हलादौ सुपि । रा. । रायौ । रायः । राभ्याम् । इत्यादि । ग्लौ । ग्लावौ । ग्लाव । ग्लावम् । इत्यादि ।

इत्यजन्ताः पुल्लिङ्गाः ।

## अथाजन्ताः स्त्रीलिङ्गाः ।

तेष्वकारान्तस्याप्रसिद्धिः । दयाशब्दात्सोः "हल्ङ्याब्" इति खम् । दया ।

औङ आपः ॥ ५ । १ । १५ ॥ आवन्तात्प्रोः परस्यौङः शी इत्ययमादेशो भवति । औङिति वेपोर्द्विवचनस्य सञ्ज्ञा । दये २। दयाः ।

कौ ॥ ५ । २ । १०१ ॥ आप एत्वं भवति कौ परे । "केरेङः" इति सुखम् । हे दये २। हे दयाः । दयाम् । दये ।

शसि ॥ ४ । ३ । ९० ॥ शसि परतः पूर्वस्वो दीर्भवति । दयाः ।

आङि चापः ॥ ५ । २ । १०० ॥ आवन्तस्य गोरेत्वं भवत्याङ्योसि च परतः । दयया । दयाभ्याम् ।

याडापः ॥ ५ । २ । १०८ ॥ आबन्तादुत्तरस्य ङितो याडागमो भवति । एच्यैप् । दयायै । "स्वेको दी" । दयायाः २। दययो २। "प्रेल्ख्यावि"ति नुट् । दयानाम् । "ङेराम् न्याम्नीभ्यः" इति ङेराम् । दयायाम् । दयासु । एवं ताराहारावालामालाप्रभृतयः । "प्रोऽम्बार्थभ्यो" । हे अम्ब । हे अक्क । हे अल्ल । यङो वेत्यतो मण्डूकप्लुत्या यद्वार्थस्य वेत्यस्यानुवृत्तेर्बहुचोऽम्बार्थस्य प्रो न । हे अम्बाडे । हे अम्बाले । हे अम्बिके । तलन्तस्य डिचोरुभयम् । देवते, देवतायाम् । हे देवत, हे देवते वा । केचिद्दृसे मातुरदन्तत्वं पुत्रश्लाघायामाहुः । हे गार्गीमात ।

सर्वनाम्नः स्याट् प्रश्च ॥ ५ । २ । १०९ ॥ आवन्ता-

त्सर्वनाम्नः परस्य ङितः स्याडागमो भवति प्रश्चापः । सर्वस्यै । सर्वस्या.२। "आम्यात् सर्वनाम्नः सुट्" । सर्वासाम् । सर्वस्याम् । शेषं दयावत् । एवं विश्वादयोपि ।

**वा दिक्सवे** ॥ १ । १ । ३६ ॥ दिगुपदिष्टे बसंज्ञके से स्र्वादीनि सर्वनामसंज्ञानि वा भवन्ति । उत्तरपूर्वस्यै, उत्तरपूर्वायै। दिशोन्तराले इति प्रतिपदोक्तस्य ग्रहणादिह न, योत्तरा सा पूर्वा दिगस्याः सोत्तरपूर्वा । तस्यै उत्तरपूर्वायै, इत्येव । "तीयस्य ङिति" इत्याद्युक्तो विशेषः पुंसि सोत्रापि नेयः । जरा । परत्वादन्तरङ्गत्वाच्च शीभावात् प्रागेवासङ् । जरसौ२। जरसः४। जरसम्। जरसा । जरसे । जरसो.२। आमि नुट परत्वादसङ् । जरसाम् । जरसि । पक्षे हलादौ च दयावत् । सिद्धिः । सिद्धी२। सिद्धयः। सिद्धिम् । "शसि" । सिद्धीः । न स्त्रीत्वानादेशः । सिद्ध्या ।

**ङिति मश्च**[1] ॥ १ । २ । ९५ ॥ य्वोर्य प्र स्त्र्याख्य इयुवोश्च स्थानिनौ यौ य्वौ तेषा ङिति वा मुसज्ञा भवति । "स्वसखि" इत्यतः परत्वादनवकाशाच्च पूर्वं मुसज्ञा । पक्षे सुसज्ञा । "अण्मोः" । सिद्ध्यै । "सोर्ङिति" । सिद्धये । सिद्ध्याः, सिद्धे.२। सिद्धीनाम् ।

**इदुद्भ्याम्** ॥ ५ । २ । १११ ॥ मुसंज्ञकाभ्यामिकारोकाराभ्या परस्य ङेराम् भवति । सिद्ध्याम्। सुपक्षे "औदच सो"। सिद्धौ । शेषं नेमिवत् । एव मतिरतिप्रभृतय ।

**त्रिचतुरोः स्त्रियां तिसृचतसृ** ॥ ५ । १ । १५८ ॥

---

(१) तत्तच्छब्दानुवादेभिद्दिनत्व प्रतिपदोक्तलम् ।

स्त्रियां वर्तमानयोस्त्रिचतुरोस्तिसृचतसृ इत्यादेशौ भवतो विभक्त्यां परतः ।[1]

रोऽच्युः ॥ ५ । १ । १५९ ॥ तिसृचतस्रोः ऋकारस्य रेफादेशो भवत्यचि । "स्पर्द्धे परमि"ति परशब्दस्येष्टार्थवाचित्वा- 'इतो ङिथे' इत्यस्यापवादोयम् । "शसि, ऋत उदि"ति च पूर्व- विधेः परत्वान्मध्येपवादत्वाच्च बाधकः ।

उगिदृन्नान्ङी ॥ ३ । १ । ६ ॥ उगिदन्तादृकारान्तान्न- कारान्ताच्च स्त्रियां वर्तमानान्मृदो ङीप्यो भवति । इति ङीप्यः प्राप्तः,—

नेल्स्वस्रादेः ॥ ३ । १ । ८ ॥ इल्संज्ञकेभ्यः स्वस्रादि- भ्यश्च मृद्भ्यः स्त्रियां यदुक्तं तन्न भवति । इति न । तिस्रः२। तिसृभिः । अतिस्रिति प्रतिषेधान्न दीः । तिसृणाम् । तिसृषु । स्त्रियामिति त्रिचतुरोर्विशेषणत्वाद्यदा त्रिचतुरौ स्त्रियां वर्तेते समु- दायश्च पुंसि नपि वा तदा तिसृचतसृभावस्तदन्तविधिना स्यात्। समुदायस्य स्त्रीत्वेपि त्रिचतुरोः पुन्नपुंसकत्वे तु न स्यात् । प्रिया- स्तिस्रो यस्य स (अनड्) प्रियतिसा । प्रियतिस्रौ२। प्रियतिस्रः२। प्रियतिस्रम् । प्रियतिसृ कुलम् । 'नपः स्वमोरुप्'ति वक्ष्यमाणेन स्वमोरुप् । 'नोमता गोरि'त्यस्यानित्यत्वपक्षे 'त्यले त्याश्रयमि' ति तिस्रादेशः । 'नाम्यतिसृचतसृ' इति ज्ञापकान्नुम्नुटावादेशात्प्राग्

(१) स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ १ ॥

( २ ) नुमनुमितयोः नुम्भवन्त्यो ज्ञापकाविति भावः ।

न्न स्तः । प्रियतिसृणी२। प्रियतिसृणि२। भादिष्वजादिपूक्तपुंस्कस्य वा पुंवद्भावो वक्ष्यते । प्रियतिस्रा, प्रियतिसृणा । ङौ प्रियतिस्रि, प्रियतिसृणि । प्रियास्तिस्रोणि वा यस्याः सा प्रियत्रिः सिद्धिवत् । द्वे२। द्वाभ्याम्३। द्वयोः२। अङ्यन्तत्वान्न सुखम् । लक्ष्मीः । 'शसि' लक्ष्मीः । लक्ष्म्यै । लक्ष्म्याः२। लक्ष्मीणाम् । लक्ष्म्याम् । लक्ष्मीषु । एवं तरीतन्त्रीप्रभृतयः । ङ्यन्तत्वात्सुखम् । सखी । शेषं लक्ष्मीवत् । एवं गौरीराज्ञीभवतीभवन्तीपचन्तीप्राचीप्रतीच्यादयः । स्त्री ।

**स्त्रियाः** ॥ ४ । ४ । ७३ ॥ स्त्रिया इयादेशो भवत्यजादौ सुपि । स्त्रियौ । स्त्रियः ।

**स्त्री** ॥ १ । २ । ९२ ॥ स्त्रीशब्दश्च मुसंज्ञो भवति । 'आमीयुवोः' 'वा' इत्यप्राप्तायां 'ङिति प्रश्ने'ति ङिति विकल्पे प्राप्ते, सामान्येन पुरस्तादपवादोऽयम् । तेन माद्देशनुडडागमाः सिद्धाः। हे स्त्रि ।

**वाम्शसोः** ॥ ४ । ४ । ७४ ॥ अम्शसोः परतः स्त्रिया इयादेशो वा भवति । स्त्रियम्, स्त्रीम् । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः२। स्त्रियोः२। परत्वान्नुटि, स्त्रीणाम् । स्त्रियाम् । स्त्रियमतिक्रान्तोऽतिस्त्रि । अत्र 'गोस्त्रियोरि'ति प्रम्यास्लविधित्वेन स्थानिवत्त्वाभावान्न 'स्त्री' ति मुसंज्ञा, तेन नेमिवत् । स्त्रिया वि-

(१) अवी, तन्त्री, तरी, लक्ष्मी, धी, ह्री, श्रीणामुणादिषु ॥ सप्तस्त्रीलिङ्गशब्दानां सुप न स्यात् कदाचन ॥ १ ॥

(२) 'सख्युरकावि'त्यत्र सख्युरिति पुल्लिङ्गस्य निर्देशादनङ्णिद्भावो भवि विभक्त्या लिङ्गविशिष्टाऽग्रहणमिति स्त्रीलेऽनङ्णिद्भावो न स्त ।

शेषिते तु सिद्धिवत् । नपा विशेषिते तु शुचिवद्वक्ष्यते । श्री । अस्य 'य्वौ स्त्र्याख्यावि'ति मुसञ्ज्ञाया प्राप्तायाम्,–

आमीयुवोः ॥ १ । २ । ९३ ॥, वा ॥ १ । २ । ९४ ॥ इयुवो स्थानिनौ स्त्र्याख्यौ य्वौ आम्येव वा मुसञ्ज्ञौ भवत । तेन नान्यत्र । हे श्री । विजाद्यन्ता न धुत्व विजहतीति धुत्वादियङ् । श्रियम् । श्रिय । परत्वा 'न्ङिति प्रथ्ये'ति वा मुसञ्ज्ञा । श्रियै, श्रिये । श्रिया, श्रिय २ । आमि वा मु । श्रीणाम्, श्रियाम् । श्रियाम्, श्रियि । श्रीषु । एव सुधी । अतिश्रीरतिस्त्रिवत् । इयुवो स्थानिनो प्रतिषेधात्प्रधीशब्दस्य नित्य मु । प्रधी । हे प्रधि । अमि शसि च परत्वाद्यण् । प्रध्यम् । प्रध्य । प्रधीणाम् । इत्यादि । आख्याग्रहणा-त्पदान्तरगम्ये स्त्रीत्वे न मुसञ्ज्ञा । ग्रामणी स्त्री । हे ग्रामणी स्त्रि । स्त्रिया क्रोष्टृशब्दस्यैव प्रयोगा 'दुगिदृन्नि'ति ङी । क्रोष्ट्री सखी-वत् । धेनु सिद्धिवत् । वधू । शेष सखीवत् । खलपूशब्दस्योत्स-र्गिकपुवाचकतया पदान्तरमन्तरा स्त्रियामप्रवृत्ते पुवत् । खलपू । खलप्वौ । खलप्वम् । खलप्व । खलप्वे । 'सुप्योरि'ति यण् । पुनर्भूव-र्षाभ्वौ प्रधीवत् । सुभ्रू श्रीवत् । स्वस्रादयः प्राय कर्तृवत् । स्वसृ । एकारान्तादय पुवत् ।

इत्यजन्ताः स्त्रीलिङ्गाः ।

---

## अथाजन्ता नपुंसकलिङ्गाः ।

तत्रादौ ज्ञानशब्द । तत स्वादय ।

नप स्वमो ॥ ५ । १ । २० ॥ नप उत्तरयो स्वमो-रुब्भवति । इति प्राप्तमपवाद,–

**अतोऽम्** ॥ ५ । १ । २१ ॥ अकारान्तान्नपः परयोः स्त्र-मोरम् भवति । तत " पूर्वोमि " । ज्ञानम् २। मादेशे क्रियमाणे सुपीति दीर्घ स्यादतिजरस च न स्यात् । " प्रात् "। हे ज्ञान ।

**नपः** ॥ ५ । १ । १६ ॥ नपो गोरुत्तरस्यौङः शी भवति । " नेच्यात् " । ज्ञाने २।

**जस्शसोः शिः** ॥ ५ । १ । १७ ॥ नपः परयोर्जस्शसोः शिर्भवति ।

**शि धम्** ॥ १ । १ । ३१ ॥ नपि शि धसंज्ञं भवति । " सुडनप " इति निषेधे सति पुनर्विधिः ।

**नपोऽज्झलः** ॥ ५ । १ । ५१ ॥ झलन्तस्याजन्तस्य च नपो नुम् भवति । " परोचो मित् " । " धेऽकौ " । ज्ञानानि२। भादौ वीरवत् ।

**डतरादेः पञ्चकस्य दुक्** ॥ ५ । १ । २२ ॥ डतरादेः पञ्चकस्य दुगागमो भवति स्वमोः परत. । कतरत् २। हे कतरत् । कतरे२। कतराणि२। शेष पुवत् । एवं कतमत् । अन्यत् । अन्यतरत् । ' अनित्यमागमशासनमि'त्येकतरस्य न । डतरेण सिद्धे पुनरन्यतरग्रहणान्नान्यतमस्य डतमान्तत्वाद् दुक् सर्वनामसंज्ञा च ।

अतिजरशब्दात्सोरमादेशे सन्निपातलक्षणेन नासङ् । अतिजरम् । केषाञ्चित्तु मतेन सन्निपातलक्षणस्यानित्यत्वादसङ् । अतिजरसम् । अतिजरसी । परत्वान्नुम पूर्वमसङ्, ततो हलन्तत्वान्नुम् ।

**सन्तस्फमहतोः** ॥ ४ । ४ । ७ ॥ सकारान्तस्य स्फस्य

महतश्च यो नकारस्तस्योडो दीर्घो भवति । अतिजरांसि । अमि तु परत्वादमादेशं बाधित्वा पूर्वमसङ् । ततः सन्निपातविधिरनिमित्तं तद्विघातस्येत्यमो नोप् । अतिजरसम् । शेषं पुंवत् ।

हश्च ॥ १ । ४ । ९४ ॥ वक्ष्यते हसंज्ञा । हसंज्ञः सो नप्संज्ञो भवति ।

हात् ॥ १ । ४ । १५१ ॥ हसादुत्तरस्य सुप उब् भवति । अधिस्त्रि सर्वत्र ।

नातोऽम् त्वङ्कायाः ॥ १ । ४ । १५२ ॥ अकारान्ताद्धसादुत्तरस्य सुप उब् न भवति, किन्तु का वर्जयित्वाऽमादेशः। सर्वत्र कां विना उपकुम्भम् । काया उपकुम्भात् ।

ईङ्भयोर्विभाषा ॥ १ । ४ । १५३ ॥ ईङ्भाविभक्त्योर्वाऽमादेशो भवति । उपकुम्भम्, उपकुम्भेन वा । उपकुम्भम्, उपकुम्भे वा । व्यवस्थितविभाषया ऋद्धिनदीससंख्यावयवेभ्यो नित्यममादेशः । सुमद्रम् । उन्मत्तगङ्गम् । द्विकौशलम् ।

मो नपि ॥ १ । १ । १ । ७ ॥ मृदिति वर्तमानमर्थात्तान्तं सम्पद्यते । नपि वर्तमानस्य मृदोन्त्यस्याचः मादेशो भवति । कीलालप ज्ञानवत् । वारि ।

सुपीकोऽचि ॥ ५ । १ । ५२ ॥ अजादौ सुपि परे इगन्तस्य नपो नुम् भवति । वारिणी । वारीणि । कौ हे वारि । 'नोमता गोरि' त्यस्यानित्यत्वज्ञापनात् हे वारे । ज्ञापकं त्वनानुग्रहणमेव । " आङो नाऽस्त्रियाम् " । वारिणा । पूर्वविप्रतिषेधेनैपो बाधनान्नुम् । वारिणे । वारिणः२। वारिणोः २।

**सक्थ्यस्थिदध्यक्ष्णामनङ्** ॥ ५ । १ । ५४ ॥ एषां नपामनङादेशो भवति अजादौ भादौ । नुमः परत्वादनङ् । "अनोऽसमि "त्यखम् । सक्थ्ना । सक्थ्ने । "वा ङिश्योः" । सक्थनि, सक्थ्नि । एवमस्थिदध्यक्षीणि । गोः प्राधान्यात्तदन्तस्यापि, प्रियसक्थ्ना । नप इति गृह्यमाणं प्रकृतेर्विशेषणम् । तेन प्रियदध्ना पुरुषेण । दधिर्नाम कश्चित्तेन दधिना पुरुषेण ।

**भादौ वोक्तपुंस्कं पुंवत्** ॥ ५ । १ । ५३ ॥ भादावजादौ सुपि,तुल्ये प्रवृत्तिनिमित्ते उक्तपुंस्कमिगन्तं नब्वा पुंवद्भवति। शुचये, शुचिने । पुंवत्पक्षे "भो नपी"ति प्रादेशो न । अग्रण्या, अग्रणिना । अग्रण्ये, अग्रणिने । आमि पुंवत्पक्षे अग्रण्याम्, नपि अग्रणीनाम् । ङौ अग्रण्याम्, अग्रणिनि । इत्यादि । एवं निया, निना । निये, निने । नियां, नीनाम् । नियां, निनि । शेषं शुचिवत् । इक एव, कीलालपेन । अचीत्येव, ग्रामणिभ्याम् । भादावुक्तपुंस्काद्वेति सिद्धे पुंवद्ग्रहणसामर्थ्यादप्रकृतस्य प्रादेशस्यापि विकल्पः । भिन्नप्रवृत्तिनिमित्तस्य तु न । तेन पीलुर्वृक्षस्तस्माकृतस्य हृत उपि पीलु फलम् । तस्मै पीलुने इत्येव ।

जतुशब्दो वारिवत् । एवं तुम्बुर्वादयः । मृदुनः शुचिवत् । खलप्वे, खलपुने । शेषमप्यग्रणीवत् । लुवा, लुना । शेषं नीवत् ।

---

(१) अर्थान्नुमन्दरयोः प्रतिषेधार्थमिदम् ।

(२) उक्तः पुमान् यस्मिन् अर्थे तत् उक्तपुंस्कं, तदस्यास्तीति हन्-त्ययोर बोध्यः॥

(३) परत्वान्नुमा एवादय इयादयश्च बाध्यन्ते ।

(४) नपि तु फलस्याप्यजातिर्वृक्षविशेषप्रवृत्तं तद्धिते बोध्यम् । एवं च पुंसि पीलुशब्दस्य वृक्षस्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तम् ।

कर्तृ२। कर्तृणी२। कर्तृणि२। हे कर्तः। कर्त्रा, कर्तृणा। एवं विधातृहर्त्रादयः। एचः प्रे कर्तव्ये "स्थाने-तरत्तमः" इति परिभाषासूत्रेणैकारौकारौ भवतः। अतिरि। अतिरिणी। अतिरीणि। एकदेशविकृतस्यानन्यत्वात्मे कृतेपि "रायो हलि" प्रवर्तते। अतिराभ्याम्। आमि नुट्। अतिरीणाम्। प्रियगु। प्रियगवे, प्रियगुने। शेषमूह्यम्।

## इत्यजन्ता नपः।

---

## अथ हलन्ताः पुल्लिङ्गाः।

तत्रादौ हकारान्तो दामलिह्शब्दः।

**हो ढः ॥ ५ । ३ । ४८ ॥** हकारान्तस्य हस्य ढकारादेशो भवति झलि परतः पदान्ते च। "हलङ्याबि"ति सुखं, जश्त्व-चर्त्वे च। दामलिट्-ड्। हे दामलिट्। दामलिहौ२। दामलिहः४। दामलिहा। दामलिड्भ्याम्। दामलिड्भिः। दामलिड्भ्यः२। दामलिहाम्। दामलिहि। दामलिट्सु। दामलिट्त्सु।

**दादेर्धोर्घः ॥ ५ । ३ । ४९ ॥** धुपाठे दकारादेर्धोर्हस्य घो भवति झलि पदान्ते च। इति घत्वे कृते,–

**एकाचो बशो भष् झषः स्ध्वोः ॥ ५ । ३ । ५४ ॥** एकाचो झषन्तस्य धोरवयवो बश् तस्य यथासंख्यं भष्भावो भवति झलि सकारे ध्वशब्दे च परतः पदान्ते च। गोधुक्-ग्। गोदुहौ२। गोधुग्भ्याम् ३। गोधुक्षु। एवं दुहादयः। एकाजिति

(१) स्पर्धेऽजिकारेणानयत्वं ध्वस्त्। यत्तु न निर्दिष्टो भूमित्यापरिद्वयापसे।

किम्? दामलिहमिच्छति दामलिह्यति, ततः क्विपि दामलिट्। स्ध्वोरिति किम्? वोढा।

**वा द्रुहमुहष्णुहष्णिहाम्** ॥ ५। ३। ५० ॥ एषां हस्य घो वा भवति झलि पदान्ते च। ध्रुक्-ग्, ध्रुट्-ड्। ध्रुग्भ्यां, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु। ण्यधिकारित्वान्मित्रद्रुहादयोऽप्येवम्।

**चतुरनडुहोर्वा** ॥ ५। १। ७२ ॥ गुसंज्ञकस्य चतुरोनडुहश्चोकारस्य वा इत्ययमादेशो भवति धे परतः।

**सावनडुहः** ॥ ५। १। ६० ॥ अस्य नुम् भवति सौ परे। "हल्ङ्याबि"ति सुखे "स्फान्तस्ये"ति हखम्। तस्यासिद्धत्वान्नखं न। अनड्वान्।

**वः कौ** ॥ ५। १। ७३ ॥ चतुरनडुहोरुतो व इत्ययमादेशो भवति कौ परतः। हे अनड्वन्। अनड्वाहौ। अनड्वाहः। अनड्वाहम्। शसि अनडुहः।

**वसुस्रंसुध्वंस्वनडुहां दः** ॥ ५। ३। ७९ ॥ एषां दकारोन्तादेशो भवति पदान्ते। ससजुषोरित्यतः सकारान्तत्वमनुवर्त्य वस्वन्तं विशेष्यते, सौ व्यभिचारात्। तेनेह न, विद्वान्। अनडुद्भ्याम्। अनडुत्सु।

**दिवं औत्** ॥ ५। १। ६१ ॥ दिवो वस्यौकारादेशो भवति सौ परत। इति परत्वादौत्वे पुनर्न सुखं, स्थानिवद्भावस्याल्विधौ प्रतिषेधात्। द्युौः। दुर्दिवौ। दुर्दिवः।

(१) भ्रश्रूरित्यत्र त्वन्तरङ्गत्वादूट्।

**दिव उत्** ॥ ४ । ३ । १०८ ॥ दिवित्येतस्य पदस्योकारादेशो भवति । दुर्भ्याम् । दुर्षु । पदस्येति किम् ? दुर्दिवे । सुद्वा । सुद्वारौ । सुद्वार्भ्याम् । इत्यादि । चत्वारः । " चतुरनडुहोर्वा " धे एव । नेह, चतुरः । चतुर्भिः । चतुर्भ्यः २। " प्रेस्न्याप्चतुरो नुट् " । चतुर्णाम् । सुपः षत्वम् । "अचो रहाद्वि"ति द्वित्वे प्राप्ते " शरोचि द्वित्वं न " । चतुर्षु । ग्वधिकारित्वात् प्रियचत्वा. । हे प्रियचत्व. । प्रियचत्वारौ२। प्रियचत्वारः । प्रियचत्वारम् । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययान्न नुट् । प्रियचतुराम् । मुख्ये तु परमचतुर्णाम् । लान्ता ञान्ताश्चाप्रसिद्धा ।

**मो नः** ॥ ५ । ३ । ८३ ॥ मान्तस्य धोर्मकारस्य नकारादेशो भवति झलि पदान्ते च । प्रताम्यतीति प्रतान् । असिद्धत्वान्नस्य ख न । प्रतामौ । प्रतामः । प्रतान्भ्याम् । प्रतान्सु ।

**किमः कः** ॥ ५ । १ । १६२ ॥ किमः कादेशो भवति विभक्त्याम् । कः । कौ । के । सर्ववत् । ननु त्यदादित्वादत्वे ततोकारस्यानुवर्तनात् ' अन्त्यबाधेऽन्त्यसदेशस्य ' इति इकारस्यात्वे च ' किम ' इत्येव सिद्धे गौरवकरणं किम् ? कुत्सार्थे साकोपि यथा स्यात् ।

**इदमो मः** ॥ ५ । १ । १६६ ॥ इदमो मान्तादेशो भवति सौ परतः । अत्वबाधनार्थमिदं वचनम् ।

**पुंसीदोय्** ॥ ५ । १ । १६९ ॥ इदम इद्रूपस्यायादेशो भवति सौ परतः पुंसि । अयम् । परमायम् ।

द. ॥ ५ । १ । १६७ ॥ इदमो दस्य मादेशो भवति विभक्त्याम् । अत्त्व पररूपं च । इमौ२। इमे । इमम् । इमान् ।

अनाप्यकः ॥ ५ । १ । १७० ॥ अककारस्येदम इद्रूपस्यान् इत्ययमादेशो भवत्यापि विभक्त्याम् । आबिति टादिरासुपः पकारेण प्रत्याहार । अनेन ।

हलि खम् ॥ ५ । १ । १७१ ॥ हलाद्यावापि परतोऽककारस्येदम इद्रूपस्य ख भवति । नानर्थकेऽन्त्येऽलो विधि । आभ्याम् ३।

इदमदसोः सकोः ॥ ५ । १ । ९ ॥ कत्यसहितयोरिदमदसोरेव भिस ऐस् भवति । नेह । " यहो भल्येत् " । एभि । सकोरिति किम्? इमकैः । त्यदादेर., ततो नित्यत्वान्डे स्मै । ततो " हलि खम् " । अस्मै । एभ्य २। अस्मात् । अस्य । अनयो. २। एषाम् । अस्मिन् । एषु । अक इत्येव, अयकम् । इमकम् । इमकेन । इमकाभ्याम् । इत्यादि ।

भादाविदमोन्वादेशेऽश् ॥ ४ । ३ । ११८ ॥ अन्वादेशे इदमोऽशादेशो भवति भादौ विभक्त्याम् । शित्करणात् साकोऽपि सर्वादेश । क्रियागुणद्रव्यै पूर्वं गृहीतस्य क्रियागुणद्रव्यान्तरेण सम्बन्धे पुनरपि कथनमन्वादेश । यथा इमकाभ्यां व्याकरणमधीतम् । अथाभ्या छन्दोधीयते ।

टौसिप्स्येनदेतदश्च ॥ ४ । ३ । ११९ ॥ अन्वादेशे एतद इदमश्च एनदादेशो भवति टा ओस् इप् इत्येतेपु परेषु । त्यदादेर । एनम् । एनौ । एनान् । एनेन । एनयो । एषाम् । अस्मिन् ।

एषु । साकोप्येवम् । सुगण् । सुगणौ । सुगण । सुगण्सु । सुगण्ट्सु । परत्वा'द्धेकावि'त्युडो दीस्ततो नखम् । राजा । हे राजन् । राजानौ । राजान । राजानम् । शसादावच्यनोऽखम् । पूर्वत्रासिद्धे न स्थानिवदिति श्चुत्वम् । राज्ञ । राज्ञा ।

नखं सुब्विधिं तुकं कृति ॥ ५ । ३ । २८ ॥ सुप स्थाने विधिं सुपि च विधिं, कृति विहित च तुक प्रति नखमसिद्धं भवति । इति नखस्यासिद्धत्वादात्वमेत्वमैस्त्वं च न स्यात् । राजभ्याम् । राजभि । राज्ञे । राजभ्य । राज्ञ २। राज्ञो २। राज्ञाम् । "वा ङिड्यो" । राजनि, राज्ञि । राजसु । सुब्विधाविति किम्? राजाश्वी । अभ्यस्फात् किम्? जैनधर्मणा । तत्वदृश्वना । दीव्यतीति दिवा । दिवानौ । दिवान । शसादावखे,–

हल्यभकुर्छुरः ॥ ५ । ३ । ७६ ॥ रेफवकारान्तस्य धोरुङ इको दीर्भवति भसंज्ञ कुर्छुरौ च वर्जयित्वा । दीव्न । दीव्ना । दीत्वे कर्तव्ये अख न स्थानिवत्, न पदान्तेति प्रतिषेधात् । भसंज्ञकत्वान्नेह, धुर वहति धुर्य ।

इन्हन्पूषार्यम्णाम् ॥ ४ । ४ । ९॥, शौ ॥४।४।१० ॥ शावेव इन्नादीनामुडो दीर्भवति नान्यत्र ।

सौ ॥ ४ । ४ । ११ ॥ इन्नादीनामुडो दीर्भवत्यको सौ च परे । पूषा । हे पूषन् । 'प्रो नो ण' इति णत्वे पूषणौ२। पूषण । पूषणम् । पूष्ण । पूष्णा । पूषभ्याम् । इत्यादि । वृत्रहा । हे वृत्रहन् । 'हन्तेर्घ' इति णत्वम् । वृत्रहणौ। वृत्रहण । शसि अनोऽखे,–

(१) भो [illegible] दस्यादि प्रायस्य दहास्य नियम [illegible] पूष्या इति भाव

हो हन्तेर्ञ्णिन्नेषु ॥ ५ । २ । ५९ ॥ हन्तेर्हकारस्य कुत्वं भवति ञिति णिति ये नकारे भनि आमन्त्रणे च परतः। इति स्थानप्रयत्नाभ्यामन्तरतमो हस्य घः। वृत्रघ्नः । वृत्रघ्ना । अव इति योगविभागादारम्भसामर्थ्यात् संज्ञायां'पूर्वपदादि'ति प्राप्तमसंज्ञायां 'स्वेकाज्ध्यौ ण' इति च प्राप्तं णत्वं प्रतिषिध्यते। वृत्रहभ्याम्। वृत्रघ्ने । वृत्रघ्नाम्। वृत्रहाणि, वृत्रघ्नि । वृत्रहसु । दण्डी । दण्डिनौ। इत्यादि । एवं हस्तिन्दन्तिन्वाग्मिन्प्रभृतयः । युवा । युवानौ। युवानः ।

इग् यणो जिः ॥ १ । १ । ४५ ॥यणः स्थाने भूतो भावी वा इग् जिसंज्ञो भवति । संज्ञिनो भावित्वात् संज्ञापि भाविनी । यथास्य सूत्रस्य शाटकं वयेति ।

श्वयुवमघोनोऽहृति ॥ ४ । ४ । ११९ ॥ भसंज्ञकानामन्नन्तानामेषां जिर्भवति, न तु हृति । अन्त्यविकारेऽन्त्यसदेशस्येति यस्य जिर्न भवति। स्थानिकृतान्तर्याद्धस्योकारः ।

जेः ॥ ४ । ३ । ९५ ॥ जेराचि परतो द्वयोरेक: पूर्वो भवति। यूनः। यूना । अमत्वान्न जिः। युवभ्याम्। इत्यादि । ग्वन्तत्वात्सदन्तस्यापि। परमयूना। श्वा। श्वानौ। श्वान ।शुन·। श्वभ्याम्। मघवा। मघवानौ । मघवान. ।मघोन.। मघोना। मघवभ्याम् ।

पथिमथ्यृभुक्षामात् ॥ ५ । १ । ६२ ॥ पथिन् मथिन् ऋभुक्षिन् इत्येतेषामन्त्यस्याकारादेशो भवति सौ परे। सूत्रे आ आदिति प्रश्लेपनिर्देशान्नानुनासिको विधिः ।

एर्धे ॥ ५ । १ । ६३ ॥ पथ्यादीनामवयवस्य इकारस्याकारादेशो भवति धे परतः।

**थो न्थः ॥ ५ । १ । ६४ ॥** पथिमथोस्थकारस्य न्थादेशो भवति धे परत । पन्थाः । पन्थानौ पन्थान । पन्थानम् ।

**भस्य टेः खम् ॥ ५ । १ । ६५ ॥** भसञ्ज्ञकानां पथ्यादीनां टेः खं भवति । पथ. पथा । भस्येति किम्[१] पथिभ्याम् । एवं मन्थाः । ऋभुक्षा । "ष्णान्तेलू" । 'उबिलः' । पञ्च२ । पञ्चभिः । पञ्चभ्य.२ ।

**नोङः ॥ ४ । ४ । ५ ॥** दीर्भवति नामि परे । इति दीस्ततो नखम् । पञ्चानाम् । पञ्चसु । प्रधाने कार्यसंप्रत्ययादिह नोङुदौ । प्रियपञ्चान. । प्रियपञ्चाम् । प्राधान्ये तु तदन्तेऽपि परमपञ्च । एव सप्तन् नवन् दशन् ।

**विभक्त्यामाष्टनः ॥ ५ । १ । १४३ ॥** अष्टन आकारोन्तादेशो भवति विभक्त्याम् ।

**अष्टाभ्य औश् ॥ ५ । १ । १८ ॥** आत्वपक्षेऽष्टन परयोर्जस्शसोरौश् भवति । अष्टभ्य इति सिद्धे कृतात्वस्योच्चारणं ज्ञापक 'यत्रैवात्व तत्रैवौश्' इति । तेनात्वविकल्प' सिद्ध । अष्टौ २ । अष्टाभि' । अष्टाभ्य' । आम्यात्वे कृतेऽपि 'ष्णान्तेलि'-त्यत्रान्तग्रहणस्योपदेशार्थत्वादिल्सञ्ज्ञा, ततो नुट् । शतानीत्यादावुपदेशे नन्तत्वाभावा 'दुबिल' इति न प्रवर्तते । अष्टानाम् । अष्टासु । आत्वाभावे पञ्चवत् । प्राधान्ये तु तदन्तादपि, परमाष्टौ । अप्राधान्ये तु । प्रियाष्ट्नः 'उबिल' इत्यस्या-

(१) अनवकाशात्पथिमथाति पूर्वमात्, तत सुख न, हलन्तत्वाभावात् ।

(२) पूर्वस्माद्विधि पूर्वविधिरिति व्याख्यानात् 'परेच पूर्वविधो' इति ष्टुत्वे कर्तव्ये अलस्य स्थानिवद्भाव. ।

पवाद औश् इत्संज्ञकादेव भवति, अनित्संज्ञकात्तूत्सर्गस्ये वापवादस्याप्यप्रवृत्ते, प्रियपञ्चान इत्यादिवत्। ओशानुमीयमानमात्वमप्यत्र औशभावे न भवति।हलादौ तु स्यादेवात्वविकल्प, तत्र सामान्येनाष्टन्शब्दस्य ग्रहणात्। प्रियाष्टनः। प्रियाष्टाभ्याम्। प्रियाष्टभ्याम्। प्रियाष्टनाम्। सर्वत्र राजवद्धलादौ तु पक्षे आत्व स्यात्। धर्मभुद्, धर्मभुत्। धर्मबुधौ। धर्मबुध। धर्मभुद्भ्याम्।

**चोः कुः ॥ ५ । ३ । ४७ ॥** चवर्गस्य कवर्गादेशो भवति झलि पदान्ते च। भिषक्। भिषजौ। भिषग्भ्याम्। इत्यादि।

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चः ॥ २। २। ५७ ॥** ऋत्विग्दधृक्स्रग्दिगुष्णिक्शब्दा क्यन्ता निपात्यन्ते, अञ्चुयुजिक्रुञ्चिभ्यस्तु क्विविधीयते। निपातनै सह निर्देशाद्विशेषो लभ्यते, युजे क्रुञ्चेश्च केवलात् क्वि क्रुञ्चेर्नस्य तु 'हलुड' खं नेति च। कार्यार्थत्वात् के सर्वनिवृत्ति।

**कृदमिङ् ॥ २ । १ । ८० ॥** अत्र धोरधिकारे मिङ्वर्जितास्त्या कृत्संज्ञा भवन्ति। कृत्त्वान्मृत्सञ्ज्ञाया स्वादयः।

**युजेरसे ॥ ५ । १ । ५० ॥** योगार्थस्य युजेरसे नुम् भवति घे परे। असे इति प्रतिषेधो गोरधिकारे तदन्तविधिज्ञापक।

**क्त्यस्य कुः ॥ ५ । ३ । ७५ ॥** क्त्यो यस्मात्तस्य कवर्गोन्तादेशो भवति पदान्ते। सुखे स्फान्तखे च कृते नस्य कुत्वेन ङ। युङ्।युञ्जौ।युञ्ज। युञ्जम्।युज। युजा। युग्भ्याम्। इत्यादि। से तु

(१) घुस्त्व स्त्वत्र न भवति असस्य स्थानवद्भावात। पूर्वत्र सिद्धीये न स्थानिवदिति लिङ न सयेगादिलोपलक्षणत्वस्य प्रतिषेधात।

नुम् क्विश्च न । सुयुक् । भिषग्वत् । इकारनिर्देशान्न समाध्यर्थस्य युजो नुम् । युक् समाधिः । बसनिर्देशादसत्यपि कौ क्विविधाने-नोपलक्षितस्य क्विबन्तस्यापि स्यात्कुत्वम् । सहसद्दक् ।

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥५।३।५३॥** व्रश्चादीनां छकारशकारयोश्च षो भवति झलि परतः पदान्ते च। षस्य 'झला जशि'ति डत्वम्,—

**स्फादेः स्कोन्ते च ॥ ५ । ३ । ४६ ॥** पदस्यावयवो यः स्फस्तदाद्यो सकारककारयोः खं भवति झलि पदान्ते च । इति सखे जस्य षत्वे डत्वे च, भृट् । सस्य शस्ततो जश्त्वेन जः । भृज्जौ। भृज्जः। भृड्भ्याम् । रज्जुसृट् ।रज्जुसृजौ । कर्मपरिमृट् । कर्मपरिमृजौ । देवेट् । देवेजौ । इह सृजियज्यो 'क्वित्यस्ये'ति कुत्वमपवाद्य षत्व-मनवकाशात् । तेन विश्वसृडादौ न कुत्वम् । ऋत्विक्स्रग्शब्दयो-स्तु निपातनात् कुत्वम् । एव धानाभृट्, तीर्थसृट्, सुराट्, धर्मभ्राट् प्रभृतयः । एवं परिव्राट्।

**विश्वस्य वसुराटोः॥ ४ । ३ । २१९ ॥** विश्वस्य दीर्घो भवति वसु राटित्येतयो परत । विश्वावसु । राडिति विकृतनिर्देश पदा-न्तोपलक्षणार्थ ।विश्वाराट्। विश्वराजौ । विश्वाराड्भ्याम्।'चोः कुः' इति कुत्वम् । शत्वम्र्येवेति नियमात् ष्फान्तत्वं न । ऊर्क्। ऊर्जौ । ऊर्ग्भ्याम् । द्विपाद् । द्विपादौ ।

**पादः पत् ॥ ४ । ४ । ११७ ॥** पादन्तस्य गोर्भस्यावयव-

(१) अयो~ स्वित्र पक्षे दराम् । केचन्नैन-द्व्याख्यातागेरेश 'परिव्राट्' इति सूत्रयन्ति ।

स्य पाच्छब्दस्य पदादेशो भवति । द्विपदः । द्विपदा । द्विपाद्भ्याम् ।
परत्वात्त्यदाद्यत्वे सुखं न,—

**तोः सः सावनन्त्ये ॥ ५ । १ । १६४ ॥** त्यदादीनामनन्त्ये वर्तमानस्य तवर्गस्य सकारादेशो भवति सौ परे । स्यः । त्यौ ।
त्ये । सः । तौ । ते । एषः । एतौ । एते । अनेषं इत्यत्र नस्य न
सत्वं, 'नलोऽनि'ति नस्य त्यदादिग्रहणेनाग्रहणात् । तदन्तस्यापि
सः, परमसः । द्विपर्यन्तास्त्यदादय इति नेह, त्वम् । सर्वाद्यन्तर्गणत्वाद्गौणत्वे संज्ञायां चात्यसत्वे न । अतित्यत् । ग्रश्वेति पः ।
जश्त्वेन ड । निमित्ताभावे नैमित्तिकस्य तुकोऽप्यभावः । तत्त्वप्राट् ।
तत्त्वप्राच्छौ । जश्त्वचर्त्वे । सूत्रप्रत्-द् । सूत्रप्रथौ । इत्यादि । एवमग्निमथादयः । "चो कु." । सुवाक् । सुवाचौ । एवं पयोमुग्महुमेक्प्रभृतयः । ग्रश्वेति पं । 'स्फादेरि'ति सखम् । जश्त्वेन डः । 'ग्रहिज्ये'ति जित्वं वक्ष्यते । मूलवृट् । मूलवृश्चौ । मूलवृश्च ।'ऋत्विगा'-
दिना क्विनेखाभावश्च निपात्यते । 'क्वित्यस्ये'ति कु. । क्रुङ् ।
क्रुञ्चौ । क्रुङ्भ्याम् । सुवुपपदादश्चेः क्वौ,—

**हलुङः क्विंत्यनिदितः ॥ ४ । ४ । २२ ॥** अनिदितो
हलन्तस्य गोरुङो नकारस्य खं भवति क्ङिति परत. ।

**उगिदचां घेऽधोः ॥ ५ । १ । ४९ ॥** उगितां गूनां नष्टन-

---

(१) अनन्त इत्यग्रहणे स इति न सिध्येत त्यदाद्यत्वस्येदमादिषु सावकाशत्वाद-
त्वं बाधित्वा परत्वादस्य सत्वेऽत्वमोऽश्योरिति वक्ष्यमाणेन दात्वात् आननस्मिन्ग्रहणे-
ऽनर्थकस्यापि ग्रहणात् । तत एव स्त्रीत्वे च टाम्न स्य द ।

(२) एतद एतदादेशे तुच्चारणसामर्थ्यान्न सत्वम् । एनत् ।

कारस्याञ्चतेश्च घे परे नुम् भवत्यधोः। क्तियस्य कुत्वेन नस्य ङः। प्राङ्। प्राञ्चौ।

अचः ॥ ४ । ४ । १२३ ॥ अच इति नष्टनकारोऽञ्चतिर्गृह्यते, तद्गतस्य भस्याकारस्य खं भवति।

चि ॥ ४ । ३ । २२३ ॥ च् इति नष्टनकाराकारोऽञ्चतिर्गृह्यते, तस्मिन् परतः पूर्वपदस्य दीर्घो भवति। प्राचः। प्राग्भ्याम्। प्राक्षु। एवं कर्त्रङ्प्रत्यङ्ङादयः।'अच' इति सूत्रेणान्तरङ्गमपि यणादेशं बाधित्वा अञ्चतेरस्य खं, 'चि' इति वचनसामर्थ्यात्।

ईदुदः ॥ ४ । ४ । १२४ ॥ उदः परस्य नष्टनकारस्याञ्चतेर्भस्याकारस्य ईकारादेशो भवति। अखापवादोऽयम्। उदीचः। उदीचा। उदग्भ्याम्। शेषं पूर्ववत्।

विश्वग्देवयोश्च टेरद्र्यञ्चौ क्वौ ॥ ४ । ३ । १९८ ॥ विश्वग्देवयोः सर्वनाम्नश्च टेरद्र्यादेशो भवति क्वयन्तेऽञ्चतौ परे। विश्वमञ्चतीति विश्वक्। तमञ्चतीति 'ऋत्विगा'दिना क्वौ टेरद्र्यादेशः। नखे 'उगिदचामि'ति नुमः 'क्तियस्ये'ति ङः। विश्वद्र्यङ्। विश्वद्र्यञ्चौ। विश्वद्रीचः। विश्वद्र्यग्भ्याम्। इत्यादि। एवं देवद्र्यङ्, तद्र्यङ्, यद्र्यङ्, कद्र्यङ्-प्रभृतय। क्वावेव केवलस्याञ्चतेरुपलभ्यत्वेऽपि क्विग्रहणं ज्ञापकम्, 'अन्यत्र धुग्रहणे तदादिसमुदायस्य ग्रहणमि'ति। फलमयस्कृति। अदसोऽद्र्यादेशे,–

दादुर्दो मोऽदसोऽसेः ॥ ५ । ३ । ८८ ॥ असकारस्यादसो दात्परस्य वर्णमात्रस्योवर्णादेशो भवति दकारस्य च मः। क्वचिद्राश्य-

(१) इत्यत्र सारम्।

भानोऽपि स्व गृह्णाति । तत "स्थानेन्तरतम." इति प्रम्य व्यञ्जनस्य च मादेशो यश्च दी । ये सकारप्रतिषेध स्वीकृत, 'अन्त्यबाधेऽन्त्यसदेशस्ये'ति वचनं च नाश्रित तेषामदसोऽद्या देशमन्तरेणोत्वमत्वे । अमुद्यङ् । केचित्पृथग्भूत मुत्वमिच्छन्ति । अमुमुयङ् । अन्त्यसदेशस्याश्रयणे तु, अदमुयङ् । अकारीभूत सिर्यस्मिन् स असिस्तस्यासमुत्वमिति व्याख्याने तु त्यदाद्यत्ववि षये एवास्य प्रवृत्तेर्नेह, अदद्र्यङ् । अमुद्रीच । यणादेश प्रति मुत्वस्यासिद्धत्वान्न यण् । अदमुईच । अमुमुईच । अमुमुईचा । अदद्रीच । अदद्र्यग्भ्याम् । इत्यादि ।

**समः समि ॥ ४ । ३ । १९९ ॥** सम समीत्ययमादेशो भवति कचन्तेऽञ्चतौ परे । सम्यङ् । समीच । सम्यग्भ्याम् ।

**तिरसास्तिर्यखे ॥ ४ । ३ । २०० ॥** तिरसस्तिर्यादेशो भवत्यनष्टाकारे कचन्तेऽञ्चतौ परे । तिर्यङ् । अखे इति किम् ? । तिरश्च । तिर्यग्भ्याम् । कचन्ते इति किम् ? तिरोञ्चनम् ।

**सहस्य सध्रिः ॥ ४ । ३ । २०१ ॥** सहस्य सध्रिरादेशो भवति कचन्तेऽञ्चतौ । सध्र्यङ । सध्रीचः । सध्र्यग्भ्याम् ।

**नाञ्चेः पूजे ॥ ४ । ४ । २८ ॥** अञ्चतेर्नस्य ख न भवति पूजेर्थे । अनष्टनकारत्वान्नुम्न । नखाभावादख न । घेऽविशेष । प्राञ्च । प्राङ्भ्याम् । प्राङ्क्षु, प्राङ्षु । एव कत्र्रङादय । मरुत् । मरुतौ । मरुद्भ्याम् । इत्यादि ।

**अत्वसोऽधोः ॥ ४ । ४ । १२ ॥** अत्वन्तस्य ध्ववयवव-र्जितस्यासन्तस्य चोडो दीर्भवत्यकौ सौ । अस साहचर्यादतोर-

नर्थकस्यापि ग्रहणम् । परोप्युगिदचां नुम्, दीत्वे कृते स्यादुङो दीत्ववचनसामर्थ्यात् । गोमान् । हे गोमन् । गोमन्तौ । गोमतः । गोमद्भ्याम् । आनन्तर्यादधोरिति प्रतिषेधोऽसन्तस्यैव । तेन गोमन्तमिच्छति गोमत्यति, ततः क्विपि 'उगिदचामि'ति नुमि गोमान्, अधोरिति पर्युदासेन भूतपूर्वस्याप्यधोर्ग्रहणात् । उगिदचामित्यञ्चतिग्रहणं धोश्चेदुगित्कार्यं तर्हि पठितस्यैवेति नियमार्थम् । तेनेह नुम्न, पर्णध्वत् । उखास्रत् । भातेर्डवतुः । भवान् ।

**भवद्भगवदघवतो वा रिः कावस्यौः ॥ ५ । ४ ।३ ॥** भवद्भगवदघवतां स्थाने वा रिर्भवति कौ परेऽवस्य चौकारः । 'नानर्थकेऽन्तेलः' इति सर्वस्यावस्यौः । हे भोः, हे भवन् । भगवान् । हे भगोः, हे भगवन् । अघवान् । हे अघोः, हे अघवन् । शेषं गोमद्वत् । विभक्तिविषये लिङ्गविशिष्टस्य ग्रहणं नेष्यते । तेन हे भवति इत्येव । शत्रन्तस्य तु अत्वन्तत्वाभावान्न दीः । भवन् । " सन्तस्फमहत " इति धे दीः । उगित्त्वान्नुम् । महान् । महान्तौ२। महान्तः । महान्तम् । महतः । महता । महद्भ्याम् ।

**थः ॥ ४ । ३ । ४ ॥** द्वे इति वर्तते तयोर्द्विरुक्तयोः समुदितयोस्थसंज्ञा भवति ।

**न थात् ॥ ५ । १ । ५६ ॥** थादुत्तरस्य शतुर्नुम्न भवति । जुह्वत् । जुह्वतौ । जुह्वतः । एवं ददत्, दधत् ।

**जक्षित्यादयः ॥४ । ३ । ५ ॥** जक्षित्यादयः पञ्च थसंज्ञा भवन्ति । जक्षत् । जाग्रत् । चकासत् । दरिद्रत् । शासत् । 'ग्रश्चे'ति

---

(१) अत्रेदमधोर्ग्रहणं मानम् । न चाऽधोर्ग्रहणाभावे धोरिति नुम् स्यादिति इत्याशङ्क्य समाधाने उगिदचामित्यादिना ।

ष । विट्, विड् । विशौ । विश । विड्भ्याम् । एव परिभट् । परिभ्रशौ । स्पृशो दृशश्च क्रिर्भ्यते । 'क्तियस्ये'त्यस्यासिद्धत्वाद् व्रश्चेति पन्तस्य जश्त्वेन ड । पुनः क्तियस्येति कुत्वेन ग । मन्त्रस्पृक् ग् । मन्त्रस्पृशौ । पूर्ववद् 'दृग्दृशद्दक्षवतामि'ति निर्देशादपि च कुत्वम् । तादृक्, तादृग् । तादृशौ । एव दलस्पृक्, त्यादृक्, यादृक्प्रभृतय । ऋत्विगादिना घृषे घित्यो द्वित्वं च निपात्यते । पूर्वनज्जश्त्वेन डः । तस्य कुत्वेन ग । धृष्णोतीति दधृक् ग् । दधृषौ । द्विष क्विविधानान्न कुत्वम् । विद्विट् । विद्विषौ । एव वैरिपिष् । रत्नमुष्, गुरुचरणश्लिष्प्रभृतय । "उबिल" । षट्र । षड्भि । षड्भ्य । 'पदस्य टोरि'ति नियमाट्टुत्वम् । यरो डे त्ये नित्य ड उक्त । षण्णाम् । षट्सु । प्रधाने कार्यसम्प्रत्ययान्नेह, प्रियषष । प्रियषषाम् । प्रधाने तु तदन्तेऽपि । परमषट् । परमषण्णाम् । पिपठिष्शब्दे रित्व प्रति षत्वस्यासिद्धत्वात् 'ससजुषो रि' । तत ,–

**इफो दी वोरुङः ॥ ५ । ३ । ८५ ॥** रेफवान्तस्य धो पदस्योङ इफो दीर्भवति । पिपठी । "त्यादेशयो " । पिपठिषौ । पिपठीर्भ्याम् । सुपि 'वा शरी'ति वा स । सपक्षे "नुम्शर्व्यवायेऽपि"इति ष, पूर्वस्य ष्टुत्वेन ष । पिपठीष्षु । विसर्जनीयपक्षेऽयोगवाहानामाश्र यस्थानित्वात् ष । पिपठी षु । धोरिति किम् ? साभ्रु । 'रात्सस्ये'ति सखे दीत्वे च रेफस्य विसर्जनीय । तितीः । तितीर्षौ । तितीर्भ्याम् । 'रेरेव सुपी'ति नियमान्न विसर्जनीय । तितीर्षु । स्कोरिति कखे षस्य जश्त्वेन ड । काष्ठतट् । काष्ठतक्षौ । काष्ठ-

तड्भ्याम् । एवं धर्मरडादेय । पचूघो सन्नन्तात् कि ।"चो कु"। "स्फान्तस्य खम्"। जस्त्वचर्त्वे । पिपग्-क् । पिपक्षौ । पिपग्भ्याम् । पिपक्षु ।

षढोः कः सि ॥ ५ । ३ । ५८ ॥ षकारढकारयो ककारादेशो भवति सकारे परे । इति षस्य कत्वे प्राप्ते अस्यामिद्धत्वात् "स्फान्तस्य खम्"। षस्य जस्त्वेन ड । विविट्-ड् । विविक्षौ२। विविड्भ्याम् । " अत्वसोऽधो " । सुपया । सुपयसौ । सुपयोभ्याम् । अधो किम् ? ध्वपदमस्यतीति ध्वपद । ध्वपदसौ । एव सुष्ठु वसते इति सुव । क्वन्तत्वाद्धुत्वम् । ' इको दी वोरि'ति दी । सुपी । सुपिसौ । सुपीर्भ्याम् । सुष्ठु पेसतीति सुपी । 'ऋदुशनस्पुरुदंश' इत्यनङ् । उशना । केचित्तु "ऋदुशने'त्यत्र 'नख मृदन्तस्ये'त्यत्र चाकाविति नञमीपदर्थे व्याख्याय क्वचित्कावपि अनडादेश नस च वा वर्णयन्ति । तेषा मतेऽनडादेशे नन्त, नखे अदन्त, अनडभावे सन्त चेति कावुशनसस्त्रैरूप्यम् । हे उशनन्, हे उशन, हे उशन । उशनसौ । उशनोभ्याम् । एवमको

(१) तक्षिराशिभ्यां व्यस्ताभ्यां क्विपि तु परत्र न णिलोपस्य स्थानिवद्भावात् । न च पूर्वत्रासिद्धे न स्थानिवदिति वाच्य तस्यापवादे स्कोःसंयोगाद्योरिति प्रतिषेधात्, तस्मात्सामान्येनैव । तत्र धमरागित्यादयो बोध्या ।

(२) सतोऽकारस्य स्थानिवत्त्वेन स्कोःसंयोगाद्योरित्यस्याप्रवृत्ते ।

(३) णिलुपि मस्जतात् क्विपि भ्रस्जति ज्ञेयं च ।

(४) तथा च यो ईवन् कश्चिदित्यर्थे इति तदाभ्यात. । स च स्वप्नानुरोधादुत्तरसूत्रमन्दे

पुरुदंशोऽनेहसौ । को तु हे पुरुदंश इत्येव । पुनातेर्मुक्सुकौ 'मश्चे'ति पुम्स्,—

पुम्सोऽसुङ् ॥ ५ । १ । ६६ ॥ पुंसोऽसुडादेशो भवति घे परतः । "डित्" । 'उगिदचामि'ति नुम् । 'सन्तस्फे'ति दीः । पुमान् । हे पुमन् । 'नश्चापदान्ते'ति नुमोऽनुस्वारः । पुमांसौ । पुमांसः । पुंसः । स्फान्तसस्य खे, पुंभ्याम् । वा पदस्य । पुम्भ्याम् । पुंसु । वेत्तेः शतरि कृते, —

विदेः शतुर्वसुः ॥ ५ । १ । ५५ ॥ विदेः परस्य शतुर्वसुरादेशो भवति । नुम् । दीः । सलम् । विद्वान् । हे विद्वन् । विद्वांसौ ।

वसोर्जिः ॥ ४ । ४ । ११८ ॥ वस्वन्तस्य भस्य जिर्भवति । निर्दिश्यमानस्यादेशा भवन्तीति विदेर्वस्य न जिः । पूर्वस्वरूपम् । 'त्यादेशयोरि'ति सः पः । विदुषः । विदुषा । भस्येति किम् ? विद्वद्भ्याम् । 'वसुस्रंस्वि'ति दः । धोः प्रतिषेधान्न नुम् । उखास्रत् । पर्णध्वत् ।

असौ ॥ ५ । १ । १६५ ॥ अदसोऽसाविति निपात्यते सौ । सस्यौत्वं सौ, सुखं, तोः स इति दस्य सत्वं च । असौ । हे असौ । अकि असकौ । त्यदाद्यत्वे " एप्यतोऽपदे " इति पररूपे एच्येपि च कृते मत्व भवति, प्रकृतित्यकार्यस्यान्तरङ्गत्वात् । अमू । जस शीत्वे एपि च कृते 'दादुर्दो म' इति प्राप्तं परत्वादनवकाशाच्चापवाद,—

बहावीरेतः ॥ ५ । ३ । ८९ ॥ बहावर्थे वर्तमानस्यादसो वात्परस्येत ईकारादेशो भवति दस्य च मः । अमी । "पूर्वोमि"।

ततो मुत्वम् । अमुम् । अमू । "नश्च पुसी" ति नत्वे दीत्वे च मूत्वम् । अमून् । अदस् टा इत्यत्र त्यदाद्यत्वे मुत्वे च कृते सुसंज्ञां प्रति मुत्वस्यासिद्धत्वात् सुसंज्ञाभावादाडो नेत्यस्याभावो,—

**न मु टाविधौ ॥ ५ । ३ । २९ ॥** टास्थाने टा इत्येतस्मिंश्च परतो विधौ कर्तव्ये मुभावो नासिद्धः । इति टास्थाने विधौ कर्तव्ये मुभावस्य सिद्धत्वान्नाभाव, तत्र च कृते मुभावस्य सिद्धत्वात् 'सुपी'ति दीत्व न । अमुना । सुपीति दीत्वे मूत्वम् । अमूभ्याम्[१] । " इदमदसो. सक्रो " इति भिस ऐस् न । अमीभिः । अमुष्मै । अमीभ्य.[२] । अमुष्मात् । अमुष्य । अमुयो.[२] । अमीषाम् । अमुष्मिन् । अमीषु ।

इति हलन्ताः पुल्लिङ्गाः ।

---

## अथ हलन्ताः स्त्रीलिङ्गाः ।

**नहो धः ॥ ५ । ३ । ५१ ॥** नहो हस्य धो भवति झलि परत पदान्ते च । जश्त्वचर्त्वे । उपानत्-द् । उपानहौ । उपानद्भ्याम् । उपानत्सु । उत्स्निह्यतीति ऋत्विगादिना क्विप्यंतस्य खं परतं च सस्य निपात्यते। 'क्वित्यस्ये'ति हस्य कुत्वेन घः । जश्त्वचर्त्वे । उष्णिक्-ग् । उष्णिहौ । उष्णिग्भ्याम् । उष्णिक्षु । एवं द्रुहादयोनुक्ताः पुंवत् । द्यौः । दिवौ । द्युभ्याम् । द्वा । द्वारौ । " इको दी र्वोरुड " । गीः । गिरौ । गिर. । गीर्भ्याम् । एव

(१) प्रकृतित्वकार्यत्वादन्तरङ्गमपि टास्थाने इनादेश बाधित्वा 'न मु टाविधा'वि ति वचनसामर्थ्यात्पूर्वं मुत्व भवति ।

(२) अत एव नद्यमित्यादीनां सिद्धि. । प्रक्रियालाघवाद्विधाने तु नैतत् सिद्ध्येत् ।

पुर्धुरादय । “ त्रिचतुरोरि”ति चतस्रादेश । चतस्र । चतस्र । चतसृणाम् । किम कादेशस्ततष्टाप् । का । के । का । सर्वावत् । विशेष्यनिघ्नानि विशेषणानीति, प्रशान् इत्यादयोऽपि पूर्ववदनापि नेया ।

यः सौ ॥ ५ । १ । १६८ ॥ पारिशेष्यात् स्त्रियां वर्तमानस्येदमो दस्य यकारादेशो भवति सौ । “इदमो म । इयम् । त्यदाद्यत्वे टाप् । “द” इति म । इमे२। इमा २। इमाम् । “अनाप्यक” । अनया । “हलि लुम्” । आभ्याम्३। आभि । अस्यै । आभ्य २। अस्या २। अनयो २। आसाम् । अस्याम् । आसु । अन्वादेशे, एनाम् । एने । एना । एनया । एनयो । सृजे ऋत्विगादिना किरमागमश्च निपात्यते । स्रक् । स्रजौ । स्रज । स्रग्भ्याम् । त्यदाद्यत्वे टाप् । ‘तो स’ । स्या । त्ये । त्या । सर्वावत् । एव तदादय । “ चो कु ” । वाक् । वाचौ । अप्शब्दो बहुत्वे वर्तते । जसि ‘स्वसृनप्त्रि ति दी । आप । शसि अप ।

भ्यपः ॥ ५ । २ । १५० ॥ अपो गोस्तकारादेशो भवति भादौ त्ये परत । अद्भि । अद्भ्य । अपाम् । अप्सु । ‘ऋत्विगा’दिना कि कुत्वं च । दिक् । दिशौ । दिग्भ्याम् । दिक्षु । पूर्ववत् शस्य ष , ड , ग । दृग् । दृशौ । जश्त्वेन ड । त्विट् । त्विषौ । त्विड्भ्याम् । सह जुषते इत्यत्र “ससजुषो रि” । ‘इको दीरि’ति दी । सजू । सजुषौ । सजूर्भ्याम् । सजू षु, सजूष्षु । आशी । आशिषौ । पिपठीर्वत् । असौ । त्यदाद्यत्वे टाप् । “ औङ आप ” । ततो मुत्वम् । अमू२। अमू २। अमूम् । “आ-

ङि चाप."। ततो मुत्वम्। अमुया। अमूभ्याम्। अमूभिः। अमुष्यै। अमूभ्यः२। अमुष्याः२। अमुयोः२। मूत्वे कृते षत्वम्। अमूषाम्। अमुष्याम्। अमूषु।

इति हलन्ताः स्त्रीलिङ्गाः।

## अथ हलन्ता नपः।

"नपः स्वमोः"। "नोमता गोरि"ति त्याश्रयनिषेधाद्वादिकार्यं न। दत्वम्। स्वनडुत्-द्२। स्वनडुही२। "शि धम्" इति शेर्धसंज्ञायां, "चतुरनडुहोर्वा"। "नपोज्झलः' इति नुम्। स्वनड्वांहि२। शेषं पुंवत्।

"दिव उत्"। सुद्यु। सुदिवी। अज्झलन्तत्वाभावान्नुम्न। सुदिवि। वाः। वारी वारि। बहुगीः। बहुगिरी। बहुगिरि। चत्वारि। किम्। "किमः कः"। के। कानि। इत्यादि। इदम्। इमे। इमानि। इप्यन्वादेशे 'नोमते'ति प्रतिषेधे प्राप्ते दकारान्तत्वोच्चारणं नपि प्रयोजयति। एनत्। एने। एनानि। शेषं पुंवत्। "नखं मृदन्तस्य"। चर्म। चर्मणी। चर्माणि। नखं मृदन्तस्याकावित्यत्र नम्मीपदर्थं व्याख्याय नपि कौ वा नखं केचिदिच्छन्ति। हे चर्मन्, हे चर्म। अहन्नित्यस्यापवादो "रोऽसुपि"। अहर्याति। "वा ङिश्योः"। अह्नी, अहनी२। अहानि२। अहः।

अहन् ॥५।२।७७॥ अहन्नित्यस्य पदस्य रिर्भवति। अहोभ्याम्। अहोभिः। पदाधिकारित्वादहन्तस्यापि रित्वरत्वे। दीर्घाहाः कालः। रित्वरत्वयोरसिद्धत्वेन प्राप्तं नखं न भवति नरा-

मकृत्वा विकृतनिर्देशात् । सुत्वस्य त्याश्रयत्वेन असुपीति निषेधान्न रः किन्तु रि । तस्यासिद्धत्वा"द्धकावि"ति दी । कावपि त्याश्रयत्वे रि· । हे दीर्घहोत्र । दीर्घोहार्णो । दीर्घोहोभ्याम् । इन्हन्निति दीः । असंख्यपूषाणि । चतुर्विंशतिवृत्रहाणि कल्पक्षेत्राणि । सुपथि । हे सुपथिन्, हे सुपथि । भत्वादिखे सुपथी । "एर्धे" । सुपन्थानि । सुसुत् । सुजुधी । सुबुन्धि । ऊर्क् । ऊर्जी । ऊर्न्जि । एव बहूर्क् । "चो कु" । असृक् । असृजी । असृञ्जि । त्यत् । त्ये । त्यानि । सुवित् । सुविदी । सुविन्दि । द्विपात् । द्विपदी । द्विपान्दि । द्विपदा । द्विपाद्भ्याम् । एतत् । एते । एतानि । इप्यन्वादेशे, एनत् । एने । एनानि । शेषं पुवत् । शब्दप्राट् । शब्दप्राच्छी । शब्दप्राञ्छि । देवमञ्चतीति देवद्र्यक् । देवद्रीची । देवद्र्यञ्चि । देवद्र्यग्भ्याम् । देवद्र्यक्षु । पूजायां नखं न । देवद्र्यङ् । देवद्र्यञ्ची । देवद्र्यञ्चि । देवद्र्यङ्भ्याम् । देवद्र्यङ्क्षु । तिर्यक् । तिरश्ची । तिर्यञ्चि । तिर्यक्षु । तिर्यङ् । तिर्यञ्ची । तिर्यञ्चि । तिर्यङ्क्षु । एवमुदगादयः । शकृत् । शकृती । शकृन्ति । एव जगत् । ददत् । ददती ।

**वा नपः ॥ ५ । १ । ५७ ॥** वक्ष्यते थसञ्ज्ञा द्विरुक्तस्य । धातुस्तरस्य नपुंसकस्य शतुरवयवस्य नुम् वा भवति धे । ददन्ति, ददति । जाग्रन्ति, जाग्रति । एव जक्षदादय । "नपोऽझल" इत्यस्य नुमो विकल्प, उगिल्लक्षणस्य तु सकृद्गते परनिर्णये बाधितस्य बाधितत्वादेव । तुदत् ।

**शीम्योरात् ॥ ५ । १ । ५८ ॥** अवर्णान्तादृतो परस्य शतुरवयवस्य नुम्वा भवति शीम्यो परत । तुदन्ती, तुदती । तुदन्ति । यात् । यान्ती, याती । यान्ति । दीव्यत् ।

**स्यशपः ॥ ५ । १ । ५९ ॥** स्यशब्भ्यामुत्तरस्य शतुर्नित्यं नुम् भवति शीश्चो परतः । दीव्यन्ती । एवं पचत् । पचन्ती । पचन्ति । 'दृग्दशे'ति निर्देशात् क्विन्नन्तस्येति कुः । सदृक् । सदृशी । सदृंशि । धनुः । धनुषी । 'सन्तम्के'ति दी । धनूंषि । धनुर्भ्याम् । एवं चक्षुरादयः । एवं सुपि । सुपिषी । सुपींषि । पयः । पयसी । पयांसि । एवं तेजस्, एनस्, अनस्प्रभृतयः । 'वसुस्रंस्वि'ति दत्वम् । विद्वद् । विदुषी । विद्वांसि । एवं पेचिवस्प्रभृतयः । अर्चिः । अर्चिषी । अर्चींषि । एवं सर्पिस्, हविस्प्रभृतयः । सुपुम् । सुपुंसी । सुपुमांसि । अदः । अमू । अमूनि । शेषं पुंवत् ।

इति हलन्ता नपः ।

---

### अथालिङ्गाः ।

**ङेसुद्योरम् ॥ ५ । १ । २४ ॥** युष्मदस्मद्भ्यामुत्तरस्य ङे इत्येतस्य सुदश्चामादेशो भवति ।

**मांवधेः ॥ ५ । १ । १५० ॥** युष्मदस्मदोर्मांवधेः संघातस्यादेशा भवन्ति । अधिकारोऽयम् ।

---

(१) स्वप् । स्वपी । परं नित्यं च नुमं बाधित्वा स्वधुनाङ्गिति दी, प्रतिपदोक्तत्वात् । स्वाम्पि । निरवकाशत्वं प्रतिपदोक्तत्वम् इति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि । निरवयवरूपप्रतिपदोक्तत्वस्य बाधकताप्रयोजकत्वे प्रकृते तदभावेपि प्रतिपदविधित्वेन दीर्घोपस्थितिरन्यथा पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीत्वे ततो नुमि स्वाम्पी-त्यन्येत्याहुः ।

(२) सुवर्गे स्वेत्यादीनां कथंचिन्नित्यत्वेपि सुवर्गाभ्यामित्यादीनामसिद्धिः स्या-दतो मास्त्विति सूत्रमुपन्यस्तमिति दिक् ।

**त्वाहौ सौ** ॥ ५ । १ । १५३ ॥ युष्मदस्मदोर्मावधेस्त्व अह इत्येतावादेशौ भवत सौ ।

**खमादेशे** ॥ ५ । १ । १४९ ॥ आदेशविभक्त्यां परतो युष्मदस्मदोः खं भवति । "अन्तेऽल." । "एप्यतोऽपदे" । "पूर्वोऽमि" । त्वम् । अहम् । त्वधिकारित्वात्तदन्तयोरपि । अतित्वम् । अत्यहम् ।

**युवावौ द्वौ** ॥ ५ । १ । १५१ ॥ द्वित्वे वर्तमानयोर्युष्मदस्मदोर्मावधेर्युव आव इत्येतावादेशौ भवतः ।

**आवि** ॥ ५ । १ । १४७ ॥ युष्मदस्मदोरन्त्यस्य आत्वं भवत्यौकारे परे । "य., खमादेशे" इत्यनयोरपवादोयम् । युवाम्२। आवाम्२। मावधे किम् ? युवकाम् । आवकाम् ।

**यूयवयौ जसि** ॥ ५ । १ । १५२ ॥ युष्मदस्मदोर्मावधेर्यूयवयादेशौ भवतो जसि परत । "खमादेशे" । यूयम्[१] । वयम् । अतिक्रान्तास्त्वा युवां युष्मान्वा अतियूयम् । एवमतिवयम् ।

**त्वमावेके** ॥ ५ । १ । १५६ ॥ एक इत्यन्वर्थसंज्ञानिर्देशः, तेन एकत्वे वर्तमानयोर्युष्मदस्मदोर्मावधेस्त्वमादेशौ भवत ।

**इपि** ॥ ५ । १ । १४६ ॥ इपि च परतो युष्मदस्मदोरात्वं भवति । त्वाम् । माम् ।

**शसो नः** ॥ ५ । १ । २८ ॥ युष्मदस्मद्भ्यां परस्य शसो

---

(१)ननु यूयमित्यत्राम स्थानिवद्भावेन जस्त्वमादाय इयादेश स्यादिति चेन्न मकारान्तर प्रश्लिष्याथवा जस शीत्यत्र सान्तस्य जस इति व्याख्यानेनेष्टसिद्धे । तच्च स्थानिवद्भावेन तु न लभ्यमस्त्विषित्वादिति दिक् ।

नकारादेशो भवति । "परस्यादे" । स्फान्तसस्य खम् । "इपि" इत्यात्वम् । युष्मान् । अस्मान् । 'नश्च पुसी'ति नत्व न, अलिङ्गत्वाद्युष्मदस्मदो ।

यः ॥ ५ । १ । १४८ ॥ पारिशेष्यादनादेशविभक्त्या परतो युष्मदस्मदोर्यकारादेशो भवति । आत्व ख चास्यापवादौ । अयमुत्सर्ग । त्वया । मया ।

युष्मदस्मदोः ॥ ५ । १ । १४५ ॥ युष्मदस्मदोरात्वं भवति हलादौ विभक्त्या परत. । युवाभ्याम्३। आवाभ्याम्३। युष्माभि । अस्माभि ।

तुभ्यमह्यौ ङयि ॥ ५ । १ । १५४ ॥ युष्मदस्मदोर्मावधेस्तुभ्यमह्यादेशौ भवतो ङयि । ङेरम् । "खमादेशे" । तुभ्यम्। मह्यम् । अतितुभ्यम् । अतिमह्यम् ।

भ्यसोऽभ्यम् ॥ ५ । १ । २६ ॥ युष्मदस्मद्भ्या परस्य भ्यसोऽभ्यमादेशो भवति । "खमादेशे"।युष्मभ्यम् । अस्मभ्यम् ।

ङसेः ॥ ५ । १ । २८ ॥ युष्मदस्मद्भ्या परस्य ङसेरदादेशो भवति । " खमावेके" । त्वत् । मत् ।

अत्कायाः ॥ ५ । १ । २७ ॥ युष्मदस्मद्भ्यामुत्तरस्य काया भ्यसोऽदादेशो भवति । "खमादेशे"। युष्मत् । अस्मत् ।

तवममौ ङसि ॥ ५ । १ । १५५ ॥ युष्मदस्मदोर्मावधेस्तवममादेशौ भवतो ङसि ।

युष्मदस्मदो ङसोऽश् ॥ ५ । १ । २३ ॥ युष्मदस्मद्भ्यामुत्तरस्य ङसोऽश् भवति । "शित्सर्वस्य" । "खमादेशे" । तव । मम । अतितव । अतिमम । युवयो २। आवयो २।

**साम आकम्** ॥५।१।२९। युष्मदस्मद्भ्यामुत्तरस्य साम आकं भवति । भाविनं सुटं भूतवदुपादाय साम इति निर्देश आकमि सुड्निवृत्त्यर्थः। युष्माकम्। अस्माकम्।(१)। त्वयि। मयि। युष्मासु। अस्मासु। सेपि यदा युष्मदस्मदी एकत्वे वर्तेते समुदायस्त्वेकत्वे द्वित्वे बहुत्वे वा स्यात्तदा त्वमौ स्त, परन्तु "यूयवयौ जसि, त्वाहौ सौ, तुभ्यमह्यौ ङयि, तवममौ ङसि" इत्यादेशान्तरेण त्वमादेशौ बाध्येते, परशब्दस्येष्टार्थत्वात् । यथा त्वा मां वा अतिक्रान्त इति विग्रहः । ओङि अमि च । अतित्वाम्३। अतिमाम्३। अतित्वान्। अतिमान् । अतित्वया । अतिमया । भाऽप्काना द्वित्वे, अतित्वाभ्याम्३। अतिमाभ्याम्३ । अतित्वाभि । अतिमाभि । ङसिभ्यसो । अतित्वत्२। अतिमत्२। अतित्वयो २। अतिमयो २। अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु । सुजस्ङेङस्सु तु, अतित्वम् । अत्यहम् । अतियूयम् । अतिवयम् । अतितुभ्यम् । अतिमह्यम् । अतितव । अतिमम । इत्येव सर्वत्र । यदा युष्मदस्मदी द्वित्वे समुदायस्तु एकत्वे द्वित्वे बहुत्वे वा वर्तेते तदा परत्वात्सुजस्ङेङस्स्वादेशान्विहाय सर्वत्र युवावौ भवत । युवामावा वा अतिक्रान्त इति विग्रहे ओङि अमि च, अतियुवाम्३। अत्यावाम्३। अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम्३। अत्यावाभ्याम्३। अतियुवाभि । अत्यावाभि । अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसो , अतियुवत्२ ।

(१) यूयवयादीना तत्तद्विभक्तिप्रतिबन्धेनोपदेशाच्च ।

अत्यावत्२। अतियुवयोः२। अत्यावयो २। अतियुवाकम्। अत्यावाकम्। अतियुवयि। अत्यावयि। अतियुवासु। अत्यावासु। सुजस्ङेङस्सु प्राग्वदेव। यदा युष्मदस्मदी बहुत्वे समुदायस्त्वेकत्वाद्वित्वबहुत्वेषु वर्तते तदा युवावौ त्वमौ च न। सुजस्ङेङस्सु तु प्राग्वत्। युष्मानस्मान्वातिक्रान्त इति विग्रहे, अतियुष्माम्३। अत्यस्माम्३। अतियुष्मान्। अत्यस्मान्। अतियुष्मया। अत्यस्मया। अतियुष्माभ्याम्३। अत्यस्माभ्याम्३। अतियुष्माभिः। अत्यस्माभि। अतियुष्मभ्यम्। अत्यस्मभ्यम्। ङसिभ्यसोः, अतियुष्मत्। अत्यस्मत्। अतियुष्मयों २। अत्यस्मयो २। अतियुष्माकम्। अत्यस्माकम्। अतियुष्मयि। अत्यस्मयि।

पदस्य ॥ ५। ३। १४ ॥ आ शास्त्रपरिसमाप्तेरधिकारोऽयम्।

पदादपादादौ ॥ ५। ३। १५ ॥ इत्यप्यधिकृत्य,—

युष्मदस्मदोऽविभ्रास्थस्य वाम्नावौ ॥ ५। ३। १६ ॥ सर्वत्रैवमनुवर्तते। पदात्परयोरपादादौ वर्तमानयोर्युष्मदस्मदोरप्रथमाद्विविभक्तिस्थयोः सर्वस्य पदस्य वाम्नावित्येतावादेशौ भवतः।

बहौ वस्नसौ ॥ ५। ३। १७ ॥ पूर्वोक्तविशिष्टयोर्बहुन्तयोर्युष्मदस्मदोर्वस्नसम् इत्यादेशौ भवतः।

एकस्य ते मे ॥ ५। ३। १८ ॥ अथैकान्तयोर्युष्मदस्मदोस्ते मे इत्यादेशौ भवतः।

त्वामाविप ॥ ५। ३। १९ ॥ इबेकान्तयोर्युष्मदस्मदो

**सपूर्वाया वाचाः ॥ ५ । ३ । २३ ॥** विद्यमानपूर्वाद्वाक्यात्परयोरनयोरेतेऽन्वादेशेपि वा भवन्ति । अनन्वादेशे तु सामान्येन सिद्धम् । अथो आचार्येण ज्ञानं ते दीयते, तुभ्यं दीयते इति वा ।

**बोध्यमसद्वत् ॥ ५ । ३ । २४ ॥** बोध्यान्तं पदमसद्भवति । तेन बोध्यान्तात्पदात्परयोर्युष्मदस्मदोः प्राप्त आदेशो निवृत्त्यते । देवदत्त, तुभ्यं दीयते ।

**नैकार्थे बोध्ये सामान्यवचनम् ॥ ५ । ३ । २५ ॥** एकार्थे (विशेषणवचने) बोध्यान्ते परतः सामान्यवचनं बोध्यान्तं नासद्भवति । एकोऽर्थो विकारलक्षणो यस्य तदिदमेकार्थम् । विशेषणवचनमित्यर्थः, सामान्यवचनमिति निर्देशात् । श्रेणिक क्षत्रिय, ते धर्मो वर्द्धताम् । एकार्थ इति किम्? क्षत्रिय ब्राह्मण, युवाभ्यां धर्मो दीयते । सामान्यवचनमिति किम्? क्षत्रिय श्रेणिक, धनवान् मे त्वं देहि । पूर्वस्य सत्त्वे सपूर्वाया इति प्रसज्येत ।

**वा विशेषवचने बहौ ॥ ५ । ३ २६ ॥** विशेषणवचने बह्वन्ते बोध्ये परतः सामान्यवचनं वाऽसद्भवति । देवाः शरण्या वो दीयते, देवाः शरण्या युष्मभ्यं दीयते । नैकार्थे बोध्ये इत्यस्याय विकल्पः । इत्यलिङ्गेषु युष्मदस्मदौ ।

---

अथ झिसंज्ञकानि ।

**असंख्यं झिः ॥ १ । १ । ७४ ॥** एकत्वादिका संख्या यस्य न विद्यते तदसंख्यं झिसंज्ञं भवति । एकत्वादिनिबन्धना विभक्त्युत्पत्तिरसंख्यादप्राप्ता "सुपो झेरि"ति वचनाद्भवति ।

---

(१) वक्ष्यमाण सद्भावनिवृत्त्यर्थम् । तेन कार्यं प्रत्येवासदित्यर्थः ।

सुपो ञेः ॥ १ । ४ । १२० ॥ ञिसञ्ज्ञकादुत्तरस्य सुप उञ् भवति । स्वर्, अन्तर्, प्रातर्, सनुतर्, पुनर्, उरु, साय, नक्तम्, अस्तम्, वस्तोर्, दिवा, दोषा, ह्यस्, श्वस्, क, श, विहायसा, रोदसी, ओं भूर्भुव स्व, स्वस्ति, समया, निकषा, अन्तरा, बहिर्, सम्प्रति, अद्धा, सत्यम्, इद्धा, मुधा, वृथा, मृषा, मिथ्या, मिथो, मिथस्, मिथुनम्, अनिशम्, मुहु, अभीक्ष्णम्, मक्षु, झटिति, उच्चैस्, नीचैस्, अवश्यम्, सामि, सानि, विष्वक्, अन्वक्, अनुषक्, साजक्, द्राक्, स्त्राक्, ऋजक्, पृथक्, धिक्, ज्योक्, मनाक्, शनै, ईषत्, जोषम्, तूष्णीम्, कामम्, निकामम्, प्रकामम्, आरात्, अर, वर, पर, चिर, तिरस्, नमस्, स्वय, भूय, प्राय, प्रवाहुकम्, आर्यहलम्, कलम्, वल, वत् (ग), अति, इव, सुष्ठु, दुष्ठु, वृत्, ऋते, सपदि, साक्षात्, सनात्, सना, आशु, सहसा, युगपत्, उपांशु, पुरा, पुरस्तात्, पुरत, पुर इत्येवमकारा। निसञ्ज्ञाश्च सर्वे,– च, वा, ह, अह, एव, नूनम्, एव, शश्वत्, सूपत्, कूपत्, कुवित्, नेत्, चेत्, चण, कच्चित्, यत्र, नह, हन्त, माकिर्, नकिर्, माङ्, न, नञ्, नहि, वात्, त्वाक्, ननुच, त्वै, तु, वै, रै, श्रौषट्, वषट्, वौषट्, स्वाहा, स्वधा, तुम्, तथा हि, खलु, किल, अथ, अथर्, स्म, अस्मि, अ इ उ ऋ लृ ए ऐ ओ औ, उञ्, सुञ्, आदह, आतङ्क, वेला-याम्, मात्रायाम्, यावत्, यथा, तथा, किम्, यत्, तत्, यदि, हे, है, पाट्, प्याट्, उताहो, आहो, अहो, अथो, मानो, ननु,

नाना, मन्ये, असि, ब्रूहि, हिनु, इति, वत, हन्त, आ, आशम्, हिरुक्, शुभम्, सुकम्, शुकम्, तुकम्, नहिकम्, ऋतम्, नो, हि, जातु, कथम्, कुत्र, अयि, आदक्, आव, हा, भो, श्वित्, वाह्यम्, संवत्, दिष्ट्या, पशु, अद्य, सह, ताजक्, काचित्, अङ्ग, पुत्र, अये, अरे, अवे, वट्, वेट्, वाद्, स्वित्, किमु, इस्, कु । गिविभक्ती-स्वरप्रतिरूपकाश्च (ग.) । क्रमेण ते—अवदत्तम्, शुभंयुः । तिङ्—भवति । स्वरप्रतिरूपकाः प्रागुक्ताः । हृतश्च तसादयः (ग.)। सात् इत्यादयश्च्व्यर्थाः, कृतश्च मुमाम्तुमादयः क्त्वा प्यादेशश्च । हसश्चेति केचित्पठन्ति तत्तु चिन्त्यम्, उपाग्निकमित्यकोऽसंभवात्, उपकुम्भं मन्यते इत्यमो दर्शनात्, उपकुम्भीकृत्येतीत्वविधानाच्च । सामान्यविषया झिसंज्ञा विशेषविषया निसंज्ञाः । असंख्य-ग्रहणाद्यत्रासंख्यत्वं प्रतीयते तत्रैव झिसंज्ञा, उपसर्जने तु मा भूत्। अत्युच्चैः । अत्युच्चैसौ । अत्युच्चैसः । इति झिसंज्ञकानि ।

इत्यलिङ्गाः ।

---

## अथ स्त्रीत्यप्रकरणम् ।

**स्त्रियाम्** ॥ ३ । १ । ३ ॥ अधिकारोऽयम् । यदित ऊर्ध्व-मनुक्रमिष्यामस्तत् स्त्रियां वर्तमानान्मृदः स्वार्थे भवति । यदि स्त्रियामभिधेयायामिति स्याद् द्विबहू न स्याताम्, एकत्वात्स्त्रीत्वस्य । शब्दजनितप्रत्ययवर्गा स्त्रीत्वादय इहाभिप्रेता न वस्तुवर्गाः, अव्याप्तेः । शब्दो हि अभावादिरूपोपि श्रोत्रपथ गतो लिङ्गसं-ख्यावन्तं स्वप्रत्ययं जनयति ।

अजाद्यतष्टाप् ॥ ३ । १ । ४ ॥ अजादिभ्योऽकारान्तेभ्यश्च मृद्भ्य स्त्रिया वर्त्तमानेभ्यष्टाब् भवति। बाधकबाधनार्थमनकारान्तार्थं चाजादिग्रहणम्। अजा। एडका। अश्वा। चटका। मूषिका। जातेरयोऽ इत्यस्यापवाद। पूर्वापहाणा। अपरापहाणा। निपातनाण्णत्वम्। टिल्लक्षणस्यापवाद। सभस्त्राजिनशणपिण्डेभ्य फलाट्टाप्। सफला। भस्त्रफला। अजिनफला। शणफला। पिण्डफला। सत्प्राक्काण्डप्रान्तशतैकेभ्य पुष्पाट्टाप्। सत्पुष्पा। प्राक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा। पाककर्णपर्णेत्यस्यापवाद। शूद्राचामहत्पूर्वाज्जातिश्चेत्। शूद्रा जाति। अमहत्पूर्वादिति किम्? महाशूद्री आभीरजाति। महत्पूर्वस्य प्रतिषेधात्तदन्तविधिर्ज्ञायते। तेन, धीवरमतिक्रान्ता अतिधीवरीत्यादि सिद्धम्। क्रुञ्चा। उष्णिहा। देवविशा। हलन्ताट्टाप्। ज्येष्ठा। कनिष्ठा। मध्यमा। पुयोगलक्षणस्यापवाद। कोकिला जाति। मूलान्ताच्च टाप्। अमूला। पकाराद्यन्त। शार्कराक्ष्या। पौतिमाष्या। अत, खट्वा। देवदत्ता। तपरकरण किम्? क्षीरपा स्त्री।

आवट्यात् ॥ ३ । १ । ५ ॥ आवट्यशब्दाट्टाब् भवति स्त्रियाम्। अवटस्यापत्य स्त्री आवट्या। यञ इति ङीविधेरपवाद। पुरस्तादपवादन्यायात्र वक्ष्यमाणफटो बाधक। आवट्यायनी।

उगिदन्तान्ङी ॥ ३ । १ । ६ ॥ उक् इत्यस्यैकदेशस्य स्थो, मृद्, वर्णो वा उगित्, तदन्तेभ्य, ऋकारान्तेभ्यो, नकारान्तेभ्यश्च मृद्भ्य स्त्रिया वर्तमानेभ्यो ङी भवति। गोमती। भवती।

पचन्ती । अतिभवती । श्रेयसी । प्राची । प्रतीची । उगिदचामित्यत्र अञ्चतेरुपसङ्ख्यानं नियमार्थमित्युक्तम् । तेन उखास्रत् । ऋदन्तात् । कर्त्री । हर्त्री । नान्तात् । दण्डिनी । क्षत्रिणी ।

**वनोऽहशो रश्च ॥ ३ । १ । ७ ॥** अहशन्ताद्विहितो यो वन् क्वनिप् च तदन्तात्स्त्रिया वर्तमानान्मृदो ङी भवति रश्चान्तादेश । धीवरी । पीवरी । मेरुदृश्वरी । शर्वरी । 'अनीच' इत्यत्रात पूर्वविधेर्नीचोपि ज्ञापनात्, प्रत्ययग्रहणे यस्मात्स तदादेस्तदन्तस्येति वचनाद्वा अतिधीवरी । अहश इति किम् ? सहयुध्वा । 'राज्ञि युधी'ति क्वनिप् । चकारेण 'सन्नियोगशिष्टानामन्यतराभावे उभयोरप्यभाव' इति सूचितम् । तेन रेफादेशाभावे पूर्वेणाप्यत्र ङीत्यो न स्यात् ।

**नेल्स्वस्रादेः ॥ ३ । १ । ८ ॥** इल्सञ्ज्ञकास्त्वस्रादेश्च प्राप्तौ ङीटापौ न भवत । पञ्च । स्वसा ।

**मनो डाप्च ॥ ३ । १ । ९ ॥** ङीति वर्तते नेति च । मन्नन्तान्मृद स्त्रिया वर्त्तमानाड्डाब्भवति ङीप्रतिषेधश्च । महिमा(१) । महिमे, महिमानौ । अनिर्नस्मिन्निति तदन्तविधि । अतिमहिमे, अतिमहिमानौ ।

**अनश्च धात् ॥ ३ । १ । १० ॥** अन्नन्ताद्बसात्स्त्रियां वर्त्तमानाड्डाब्भवति ङीप्रतिषेधश्च । अनुवृत्तो बसस्येहोदाहरणम् । सुपर्वा । सुपर्वे, सुपर्वाणौ ।

**वोङे ॥ ३ । १ । ११ ॥** अन्नन्ताद्बसादुङ खे वर्त्तमाना-

---

(१) अनितादिमन्ग्रहणानि अर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।

ड्डाब्–ङीप्रतिषेधौ वा भवत । बहुराजा२। बहुराज्ञी । बहुराजे, बहुराजानौ, बहुराज्ञ्यौ२। बहुधीवे, बहुधीवानौ, बहुधीवर्यौ२।

**त्यस्थे क्यापीदतोऽसुपोऽयत्तदोः ॥ ५ । २ । ५० ॥** त्यस्थे ककारे परत पूर्वस्याकारस्येकारादेशो भवति, असुप परो य आप् तस्मिन्परतो, न तु यत्तदो । कुत्सिता जटा जटिका । अष्टाह्निका । त्य इति किम् ? शक्नोतीति शक । तका । स्थग्रहण किम् ? कारिका । असति स्थग्रहणे त्ये कीत्युच्यमाने येनालि विधिरिति ककारादावेव स्यात् । स्थग्रहणे तु सर्वत्र स्यात् । अत किम् ? गोका । तपरकरण किम् ? राका । बहुखट्वाका । वाप इत्यमा देशपक्षेऽसुप कप परोयमाप् । असुप किम् ? बहुपरिव्राजका मथुरा । त्यखे त्याश्रयमिति सुबन्तात्परिव्राजकशब्दादयमाप् । अयत्तदोरिति किम् ? यका । सका । यातीति या, स्यतीति सा । आभ्या के कृते क्षिपकादित्वाद्वक्ष्यते निषेध ।

**वातोऽधोर्यकात् ॥ ५ । २ । ५१ ॥** अधोर्यो यकार कका-रश्च ताभ्यामुत्तरस्यात स्थाने योऽकारस्तत्याप्यसुपो वा इद्भवति त्यस्थे के । कुत्सिता इभ्या इभ्यिका,इभ्यका। एव क्षत्रियकाऽऽर्यका-मूषककाचटककादिष्वपि । आत इति किम् ? साङ्काश्ये भवा साङ्काश्यिका । अधोरिति किम् ? सुनयिका । यकादेव । अश्विका । वेति योगविभागादिष्ट सिद्ध्यति । तारका ज्योतिषि । तारिकान्या । आशिषि जीवतादिति जीवका, नन्दतादिति नन्दका । जीविकानन्दिकावन्यत्र । अनजादौ शुखे देवका । देवदत्तिका । वर्णका तन्तुविकारे । वर्णिकान्या । वर्तका शकुनौ प्राचाम् ।

वर्तिकान्या । अष्टका कर्मविशेषे । अष्टिका तुला । सूतका, सूतिका । पुत्रका, पुत्रिका । वृन्दारका, वृन्दारिका । क्षिपकादौ च न । क्षिपका । ध्रुवका । यका । सका । कन्यका । दाक्षिणात्यिका, इहत्यिकेत्यादावित्त्वमेव ।

**भस्त्रैषाऽजाज्ञाद्वास्वानां नञ्सेऽसेऽपि ॥ ५ । २ । ५२ ॥** भस्त्रादीनां नञ्सेऽसेप्यात स्थाने योऽकारस्तस्येद्वा भवति त्यस्थे के। अन्यस्मिन्नपि से क्वचिद्वावार्थमपिशब्दग्रहणम् । भस्त्राशब्दस्योपसर्जनीभूतस्यात्रेत्वम् । अनुक्तपुंस्कस्य स्वाच्चेति वक्ष्यते । बहुभस्त्रिका, बहुभस्त्रका । एषिका, एषका । एषेति विकृतनिर्देशाद्यत्र षत्वं तत्रैव विकल्प । एतिकास्तिष्ठन्तीत्येव । एषाद्वयो से तु नेत्वं, सर्वनाम्नष्टे प्रागकि कृते त्यखे त्याश्रयेणान्तर्वर्तिनीं विभक्तिमाश्रित्यापोऽसुपः परत्वाभावात् । अनेषका । अजिका, अजका । अनजिका, अनजका । ज्ञिका, ज्ञका । अज्ञिका, अज्ञका । द्विके, द्वके । अद्वके इत्येव । ज्ञातौ स्विका, स्वका । धनार्थस्योपसर्जने अस्विका, अस्वका । ज्ञातिधनाख्याया सर्वनामसञ्ज्ञाविरहादक् न स्यात्, किन्तु क एव । ततो भवत्युदाहरणम् । आत्मीयाद्यर्थेऽकि तु तस्य प्राक्टेर्भावादात स्थानिकाकारस्यासम्भवात्सुबन्तादाव्विधानाच्च । आत्मीयार्थे 'त्यस्थे की'ति नित्यमित्त्वम् । स्विका । परमस्विका ।

**अनुक्तपुंस्कादाच ॥ ५ । २ । ५३ ॥** अनुक्तपुंस्काद्विहि-

---

(१) आत इत्यनुवृत्त स्वशब्दस्यैव विशेषणम् । न तु द्वैषयोरसम्भवात् । नाप्यन्येषामव्यभिचारात् ।

तस्यातः स्थाने योऽकारस्तस्येदाच्च वा भवति नञ्सेऽसेपि । खट्विका, खट्वाका, खट्वका । परममल्लिका, परमभस्त्राका, परमभस्त्रका । बसेपि कपि परतो "वाप" इति प्रादेशेऽनुक्तपुंस्काद्विहितस्यातः स्थानेऽकार इत्ययमेव विकल्पः । अविद्यमाना खट्वा यस्याः सा अखट्विका, अखट्वाका, अखट्वका । यदा तु न कप् तदा "स्त्रीगोर्नीच" इति प्रादेशे तत आपि ततश्च के कृते "केण" इति पुनश्च प्रादेशे भाषितपुंस्काद्विहितत्वादातः स्थानिकाकारस्य नित्यमेवेत्वम् । अखट्विका ।

ङी खौ ॥ ३ । १ । १२ ॥ अनन्ताद्बसादुङ्खे ङी भवति खुविषये । अधिराज्ञी नाम ग्रामः । सुराज्ञी । पुनर्ङीग्रहणं नित्यार्थम् । " ऊधसोऽनङ् " इति वक्ष्यमाणेनानङिकृते ' वोङ्खे" इति त्रैरूप्ये प्राप्ते,--

ऊधसः ॥ ३ । १ । १३ ॥ वादिति वर्त्तते । अनन्तादूधःशब्दान्ताद्बसाद् ङी भवति स्त्रियाम् । कुण्डमिवोधो यस्याः सा कुण्डोध्नी । द्व्यूध्नी । निरूध्नी । स्त्रियां किम् ? महोधाः । वादिति किम् ? प्राप्ता ऊधः प्राप्तोधा गौः ।

दामहायनात्संख्यादेः ॥ ३ । १ । १४ ॥ संख्यादेर्बसाद्दामान्ताद्धायनान्ताच्च ङी भवति स्त्रियाम् । द्विदाम्नी । दामान्ताद्वोङ्खे इति त्रैरूप्ये प्राप्ते वचनम् । हायनाद्वयसि स्मृतः । त्रिचतुर्भ्यां हायनस्य णत्वमपि वयसीष्यते । त्रिहायणी । नेह, त्रिहायना शाला । संख्यादेरिति किम् ? उद्दामा वडवा ।

पादो वा ॥ ३ । १ । १५ ॥ पादशब्दान्तान्मृदः स्त्रियां

वर्तमानाद्वा ङी भवति। ङौ सति "पादः पत्" इति वक्ष्यते। द्विपदी, द्विपात्।

टावृचि ॥ ३ । १ । १६ ॥ ऋग्वाचकपादशब्दान्तान्मृदः स्त्रियां वर्तमानाट्टाब्भवति। द्विपदा ऋक्।

अनीचः ॥ ३ । १ । १७ ॥ अधिकारोयम्। यदित ऊर्ध्वमनुक्रमिष्यामस्तन्नीचो न भवति। इदमेवात्र प्रकरणे तदन्तविधिज्ञापकम्। तत एव पूर्वोक्तो विधिर्नीचोपि भवति।

टिड्ढाणञ्ठण्ठञ्करपः ॥ ३ । १ । १८ ॥ ङीति वर्तते। अन्यग् यट्टिदादि तदन्तेभ्य· स्त्रियां ङी भवति। टापोपवादः। टित्, मद्रचरी। आढ्यङ्करणी। ऊरुदघ्नी। ऊरुमात्री। ढ, सौपर्णेयी। अण्, कुम्भकारी। णेप्यणुक्तं भवतीति वक्ष्यते। तत· चुराशीला चौरी। अञ्, औत्सी। ठण्, लाक्षिकी। ठञ्, पारायणिकी। करप्, इत्वरी। अनीच किम्? बहुमद्रचरा। लकाराणां स्थानिवद्भावाट्टित्वे ङित्वं च न भवतीति वक्ष्यते। तेन पचमानेत्यत्र टित्वान्ङी प्राप्ता न स्यात्।

यञः ॥ ३ । १ । १९ ॥ यञन्तान्मृदो ङी भवति स्त्रियाम्।

यस्य ङ्यां च ॥ ४ । ४ । १३४ ॥ भस्येवर्णावर्णयो· खं भवति ङीत्ये ह्रति च परतः। इत्यखे,---

हलो हृतो ङ्याम् ॥ ४ । ४ । १३८ ॥ हल उत्तरस्य हृद्यकारस्योङ· खं भवति ङ्यां परत·। गार्गी। द्वीपे भवा द्वैप्या। अत्र न ङीप्, द्वीपादनुसमुद्रेऽयञित्यनुबन्धप्रश्लेषे यञोऽभावात्।

**फट् ॥ ३ । १ । २० ॥** यञन्तान्मृद फट् भवति स्त्रियाम्।

**आयनेयीनीयियः फढखछघां त्यादीनाम्॥ ५ । १ । २॥** फढखछघ इत्येतेषा त्यादौ वर्तमानाना निरचा आयनेयीनीयिय आदेशा यथासख्य भवन्ति । टित्त्वसामर्थ्यादमृत्त्वेपि ङी। गार्ग्यायणी । वचनसामर्थ्यत्पूर्वोपि विधि स्यात् ।

**लोहितादिशकलान्तात् ॥ ३ । १ । २१ ॥** शकलशब्दपर्यन्तेभ्यो यञन्तेभ्यो लोहितादिभ्य फट् भवति स्त्रियाम् । पुनरारम्भो नित्यार्थ । तेन फडेव स्यान्न तु यत्र इति ङी । लौहित्यायनी । शाकल्यायनी ।

**कौरव्यासुरिमाण्डूकात् ॥ ३ । १ । २२ ॥** एभ्य फट् भवति स्त्रियाम् । कौरव्यायणी । अत्र टाप्प्राप्तौ वचनम् । अ आसुरीति प्रश्लेषनिर्देशादकारोन्तादेश । आसुरायणी । अत्रेतो मनुष्यजातेरिति ङो प्राप्ताया वचनम् । मण्डूकस्यापत्य स्त्री माण्डूकायनी । अत्र ढञ्च मण्डूकादित्याणि ङीप्रसक्तौ वचनम् । तस्येदमित्याणि तु कौरवी ।

**गौरादेः ॥ ३ । १ । २३ ॥** गौरादिभ्यो ङी भवति स्त्रियाम् । गौरी । अत्र वर्णत्वे बहुल ङीप्राप्तौ सञ्ज्ञायामप्राप्तौ च शृङ्गादापि प्राप्ते च वचनम् । योऽङस्तु अयोङ इति प्रतिषेधे प्राप्ते वचनम् । उत्तरत्राप्यूह्य बाध्यम् । गवयी । अनड्वाही । अनडुही। आग्रहायणी । स्वार्थेऽण् णत्व चात्र निपात्यते । रोहिणी, रेवती च नक्षत्रे । पिप्पल्यादयश्च (ग) । नृनरयोरैन्च (ग) । नारी ।

**मत्स्योङ्यो ङ्याम्** ॥ ४ । ४ । १३५ ॥ मत्स्यशब्दस्योङ्यो यस्य ख भवति ङ्याम् । मत्सी । गौरादिराकृतिगण ।

**वयस्यऽनन्त्ये** ॥ ३ । १ । २४ ॥ प्राणिना कालकृता शरीरावस्था वय । अनन्त्ये वयसि वर्तमानाददन्तान्मृदो ङी भवति स्त्रियाम् । कुमारी । वधूटी । चिरण्टी । तरणी । अनन्त्य इति किम्? स्थविरा । कन्याया कनीन चेति निपातनान्न ङी । कन्या । अत किम्? शिशु ।

**रात्** ॥ ३ । १ । २५ ॥ अकारान्तोत्तरपदो र स्त्रिया भाष्यते । रसञ्ज्ञकाददन्तान्मृदो ङी भवति । अन्नन्तस्य रसस्य ख च स्त्रियाम् । अष्टसहस्री । पञ्चतक्षी । पञ्चाजी । अजादिष्वजशब्दो जातिवचनोभिप्रेत । अजादित्वान्नेह, त्रिफला ।

**परिमाणाद्धृदुपि** ॥ ३ । १ । २६ ॥ सर्वतो मान परिमाण, प्रस्थादि । प्रस्थादिपरिमाणान्तादन्ताद्राद्धृदुपि सति ङी भवति। द्व्याढकी । रादिति सिद्धे नियमार्थोयम् । परिमाणादेव हृदुपि, नान्यत । पञ्चभिरश्वै क्रीता पञ्चाश्वा । तुल्यजातीयस्यैव निवृत्ति । समाहारे भवत्येव । पञ्चाश्वी । परिमाणादिति योगविभागादिष्ट परिमाण प्रस्थादि लभ्यते । तेनेह न । द्विवर्षा । द्विशता ।

**न विस्ताचितकम्बल्यात्** ॥ ३ । १ । २७ ॥ विस्ताद्यन्ताद्राद्धृदुपि ङी न भवति । विस्तादीना परिमाणत्वात्पूर्वेण प्राप्तौ वचनम् । द्विविस्ता । द्व्याचिता । द्विकम्बल्या ।

---

(१) ऊर्ध्वमान किलोन्मान परिमाण तु सर्वत । आयामस्तु प्रमाण स्यात् सख्या बाह्या तु सर्वत ॥ १ ॥

**काण्डात् क्षेत्रे** ॥ ३ । १ । २८ ॥ काण्डान्ताद्राद्धृद्धुपि ङी न भवति क्षेत्रेऽभिधेये । द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभक्तिः । प्रमाणे द्वयसडादीनां 'प्रमाणे ध्वसन राच्चे'ति वक्ष्यते उप् । क्षेत्रे एव । द्विकाण्डी रज्जुः ।

**पुरुषात्प्रमाणे वा** ॥ ३ । १ । २९ ॥ प्रमाणे यः पुरुषशब्दस्तदन्ताद्राद्धृद्धुपि वा ङी भवति । द्विपुरुषा, द्विपुरुषी वा खाता । प्रमाण इति किम् ? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा । हृद्धुपीत्येव । समाहारे तु पञ्चपुरुषी ।

**गुणोक्तेरुतोऽखरुस्फोडः** ॥ ३ । १ । ३० ॥ गुणोक्तेरुकारान्तान्मृदः स्त्रियां वा ङी भवति खरुशब्दं स्फोडं च वर्जयित्वा । पट्वी, पटुः । गुणोक्तेरिति किम् ? आखुर्जातिः । खरुः । पाण्डुः ।

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्च क्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥

**बह्वादेः** ॥ ३ । १ । ३१ ॥ बह्वादिभ्यो मृद्भ्यो वा ङी भवति स्त्रियाम् । बह्वी, बहुः । कृदिकारादक्तेः (ग) । भूमिः, भूमी । शक्तिः, शक्ता । यष्टिः यष्टी । केम्तु कृतिः । अक्त्यर्थादित्येके । तेनाकरणिः । क्त्यन्तत्वादप्राप्ते विधानार्थं पद्धतिर्गणे पठ्यते । पद्धती, पद्धतिः । वेति व्यवस्थितविभाषार्थं । तेन खौ वा विभक्ती ।

**पतिवत्न्यन्तर्वत्न्यौ** ॥ ३ । १ । ३२ ॥ एतौ निपात्येते ।

पतिवत्न्यां नुकं वत्वमन्तर्वत्न्यां मतुर्नुकौ ।
जीवत्पत्यां च गर्भिण्यां यथासंख्यं निपात्यते ॥ २ ॥

अन्यत्र पतिमती पृथ्वी । अन्तरस्त्यस्यां शालायाम् ।

**पत्नी** ॥ ३ । १ । ३३ ॥ पतिशब्दस्य स्त्रियां नकारोन्तादेशो निपात्यते पुंयोगे । 'उगिदृन्नादि'ति ङी । देवदत्तस्य पत्नी । तद्वित्तस्य च स्वामिनीत्यर्थः । अन्यत्र पतिरियमस्य ग्रामस्य ।

**सपत्न्यादौ** ॥ ३ । १ । ३४ ॥ सपत्न्यादिषु पत्नीशब्दो नित्यं निपात्यते । समानः पतिरस्याः सपत्नी । समानादिभ्य इति वक्तव्ये सनकारसकारस्य समुदायस्य ग्रहणं समानस्य सभावार्थमीकारापायेपि नकारश्रवणार्थं च । सपत्न्या अयं सापत्नः । एवमेकपत्नी । वीरपत्नी । पुत्रपत्नी ।

**वा से** ॥ ३ । १ । ३५ ॥ से पत्नी वा निपात्यते । बसे पसे चेदं निपातनम् । अनीच इति नात्राभिसम्बध्यतेऽसम्भवात् । दृढपतिः, दृढपत्नी । एवं वृद्धपत्न्यादयः । पुंयोगे तु नित्यमेव । राजपत्नी ।

**वर्णाद्बहुलं तो नस्तु** ॥ ३ । १ । ३६ ॥ वर्णवाचिनोदन्तान्मृदो बहुलं ङी भवति स्त्रियां, ङीपक्षे तस्य च नादेशः । एता, एनी । रोहिता, रोहिणी । हरिता, हरिणी । काली संज्ञायां वर्णे च । कालान्या । एवं पिङ्गली । क्वचिदप्रवृत्तिरेव । श्वेता । असिता । पलिता । कृष्णा । कपिला । क्वचिदुभयथा । शोणी, शोणा । औषधिप्राणिनोर्नीली औषधिर्वडवा गोर्वा । संज्ञायां नीली, नीला । आच्छादने न भवति । नीला सःटी मेघसंहतिर्वा । क्वचिन्नित्यम् । शवली । पिशङ्गी । कल्माषी ।

(१) पक्षे असिक्नी पलिक्नीति च शाकटायनः ।

सारङ्गी । वर्णादिति किम्? कृता । अत इत्येव । सितिः कन्या ।

**कुण्डगोणस्थलभाजनागकुशकामुककवरादमत्रावपनाकृत्रिमाश्राणास्थौल्यायोविकारमैथुनेच्छाकेशवेशेषु ॥ २ । १ । ३७ ॥** कुण्डादिभ्यो यथासंख्यमऽमत्रादिष्वर्थेषु ङी भवति । कुण्डी अमत्रं चेत्, कुण्डान्या । गोणी आवपनं चेत्, गोणा संज्ञा । स्थली अकृत्रिमा चेत्, स्थलान्या । भाजी श्राणा चेत्, भाजान्या । भाजयतेः स्त्रियां युचि प्राप्तेऽत एवाऽकारादेशः । नागी स्थौल्यं चेत्, नागा तन्वी दीर्घा वा । संज्ञायां वा । जातौ तु नित्यं ङी । कुशी अयोविकारश्चेत्, कुशा काष्ठादिमयी तदाकृतिः । कामुकी मैथुनेच्छा चेत्, कामुकान्या । कबरी केशवेशश्चेत्, कबरान्या ।

**पुंयोगात्खोरगोपालकादेः ॥ २ । १ । ३८ ॥** यः खुविषयः शब्दः पुंयोगाद्धेतोः स्त्रियां वर्तते तस्माददन्तान्ङी भवति गोपालकप्रकारान् वर्जयित्वा । उपाध्यायस्य स्त्री उपाध्यायी । गणकी । प्रष्ठी । पुंयोगादिति किम्? देवदत्ता । खोरिति किम्? प्रसूता । पुंयोगादेष शब्दः स्त्रियां वर्तते न तु पुंसि सज्ञाभूतः । अगोपालकादेरिति किम्? गोपालिका । अश्वपालिका । आदिशब्दः प्रकारवाची । तेन सूर्याद्देवतायां ङी न । सूर्यस्य भार्या सूर्या । देवतायां किम्? सूर्यो नाम मनुष्यस्तस्य स्त्र्यर्थे ङ्याम्,

**सूर्यागस्त्ययोश्छे च ॥ ४ । ४ । १३६ ॥** एतयोरुङो

(१) सूर्यागस्त्यशब्दौ केवलौ ङीं च न लभेते इति अण्णन्तौ गृह्येते । सूर्यो देवतास्य सौर्यस्तस्य स्त्री सौरी । आगस्त्यस्य स्त्री आगस्ती । (इति केनचित्परिष्कारपाठो लिखितो महानुभावो)।

यस्य स भवति छे ट्यां च परत । सूरी ।

पूतक्रतोरै च ॥ ३ । १ । ३९ ॥ पुयोगाद्धेतो स्त्रियां वर्तमानात्पूतक्रतुशब्दान्ङी भवति ऐकारोन्तादेशश्च । पूतक्रतायी । पुयोगादेव । पूता क्रतवो यया सा पूतक्रतु ।

वृषाकप्यग्निकुसितकुसिदात् ॥ ३ । १ । ४० ॥ पुयोगाद्धेतो स्त्रियां वर्तमानेभ्य एभ्यो ङी भवत्यैकारोन्तादेशश्च । वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी ।

मनोरौ च ॥ ३ । १ । ४१ ॥ पुयोगाद्धेतो स्त्रियां वर्तमानान्मनुशब्दान्ङी भवत्यैकारश्चौकारश्चान्तादेश क्रमेण । मनो स्त्री मनायी, मनावी । केषाचिन्मते मनुरपि ।

वरुणभवशर्वरुद्रेन्द्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ३ । १ । ४२ ॥ वरुणादिभ्यो मृद्भ्यो ङी भवत्यानुक् च । आधाना षण्णा मातुलाचार्ययोश्च पुयोगादित्येव सिद्धे आनुगर्थं ग्रहणम् । हिमादिचतुर्णां तूभयार्थम् । वरुणानी । भवानी । शर्वाणी । रुद्राणी । इन्द्राणी । मृडानी । हिमारण्ययोर्महत्त्वे । महद्धिम हिमानी । महारण्यमरण्यानी । यवाद्दोषे । सदोषो यवो यवानी । यवनाल्लिप्याम् । यवनाना लिपिर्यवनानी । उपाध्यायमातुलाभ्या वा आनुग्* । उपाध्यायानी, उपाध्यायी । मातुलानी, मातुली । आचार्यादणत्वम्* । आचार्यानी । आर्यक्षत्रियाभ्याम-पुयोगे वेति वक्तव्यम् । आर्याणी । क्षत्रियाणी । पक्षे पुयोगाभावान्न ङी । आर्या । क्षत्रिया । पुयोगे तु आर्यस्य स्त्री आर्यी । क्षत्रियस्य स्त्री क्षत्रियी । आनुगिति द्विमात्रोच्चारणादिदिसग्रह ।

क्रीतात्करणादेः ॥ ३ । १ । ४३ ॥ क्रीतान्तात्करणादेरदन्तान्मृदो ङी भवति स्त्रियाम् । वस्त्रेण क्रीयते स्म सा वस्त्रक्रीती । करणादेरिति किम्? सुक्रीता । कथं तर्हि 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति? साधनं कृतेत्यत्र बहुलग्रहणात्कचित्सुबन्तेन वृत्तेः । सुप्युत्पत्तिश्च बहिरङ्गा अन्तरङ्गे टापि कृते स्यात् । क्रीतान्तादिति किम्? धृत्त्येन क्रीता ।

क्तादल्पे ॥ ३ । १ । ४४ ॥ करणादेः क्तान्तान्मृदोऽल्पेऽर्थे ङी भवति स्त्रियाम् । अभ्रविलिप्ती द्यौः । अल्पान्यस्यामभ्राणीत्यर्थः । अल्प इति किम्? चन्दनानुलिप्ता । अनल्पत्वे वक्ष्यमाणेन बसे विहितस्यापि ङीत्यस्य परिहारः ।

जातेर्बात् ॥ ३ । १ । ४५ ॥ सकृदाख्यातनिर्ग्राह्या जातिः । जातिशब्दपूर्वात् क्तान्ताद्बसान्ङी भवति स्त्रियाम् । स्वाङ्गपूर्वपदस्येहोदाहरणम् । शङ्खौ भिन्नौ यस्याः सा शङ्खभिन्नी । ऊरुभिन्नी । बादिति किम्? सव्यजानुप्रतिष्ठिता । कृतमितप्रतिपन्नजातान्तात्प्रतिषेधो वक्तव्यः । दन्तकृता । स्तनजाता । पाणिगृहीत्यादीनां बादिति योगविभागेन गुर्वनुज्ञाते ङी वक्तव्यः । पाणिगृहीती भार्या । एव पाप्याती । यस्या यथाकथचित्पाणिर्गृहीत सा तु पाणिगृहीता ।

बाऽस्वाङ्गादेः ॥ ३ । १ । ४६ ॥ अस्वाङ्गादेः क्तान्ताद्बसाद्वा ङी भवति स्त्रियाम् । सारङ्गजग्धी, सारङ्गजग्धा । वेति व्यवस्थितविभाषया बसेऽपि वा सञ्ज्ञायाम् । प्रवद्धविलूना—नी ।

स्वाङ्गान्नीचोऽस्फोडः ॥ ३ । १ । ४७ ॥ स्वाङ्गं न्यगऽस्फोड् यचदन्तान्मृदो वा ङी भवति स्त्रियाम् । दीर्घकेशी, दीर्घ-

यस्य खं भवति छे ङ्यां च परतः । सूरी ।

**पूतक्रतोरै च ॥ ३ । १ । ३९ ॥** पुंयोगाद्धेतोः स्त्रियां वर्तमानात्पूतक्रतुशब्दान्ङी भवति ऐकारोन्तादेशश्च । पूतक्रतायी । पुंयोगादेव । पूता क्रतवो यथा सा पूतक्रतुः ।

**वृपाकप्यग्निकुसितकुसिदात् ॥ ३ । १ । ४० ॥** पुंयोगाद्धेतोः स्त्रियां वर्तमानेभ्य एभ्यो ङी भवत्यैकारोन्तादेशश्च । वृपाकपायी । अग्नायी । कुसितायी । कुसिदायी ।

**मनोरौ च ॥ ३ । १ । ४१ ॥** पुयोगाद्धेतोः स्त्रियां वर्तमानान्मनुशब्दान्ङी भवत्यैकारश्चौकारश्चान्तादेशः क्रमेण । मनोः स्त्री मनायी, मनावी । केषांचिन्मते मनुरपि ।

**वरुणभवशर्वरुद्रेन्द्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ३ । १ । ४२ ॥** वरुणादिभ्यो मृद्भ्यो ङी भवत्यानुक् च । आद्यानां षण्णां मातुलाचार्ययोश्च पुंयोगादित्येव सिद्धे आनुगर्थं ग्रहणम् । हिमादिचतुर्णां तूभयार्थम् । वरुणानी । भवानी । शर्वाणी । रुद्राणी । इन्द्राणी । मृडानी । हिमारण्ययोर्महत्त्वे । महद्धिमं हिमानी । महारण्यमरण्यानी । यवाद्दोषे । सदोषो यवो यवानी । यवनाल्लिप्याम् । यवनानां लिपिर्यवनानी । उपाध्यायमातुलाभ्यां वा आनुक्* । उपाध्यायानी, उपाध्यायी । मातुलानी, मातुली । आचार्यादणत्वम्* । आचार्यानी । आर्यक्षत्रियाभ्यामपुंयोगे वेति वक्तव्यम् । आर्याणी । क्षत्रियाणी । पक्षे पुंयोगार्थाभावान्न ङी । आर्या । क्षत्रिया । पुंयोगे तु आर्यस्य स्त्री आर्यी । क्षत्रियस्य स्त्री क्षत्रियी । आनुगिति द्विमात्रोच्चारणादिष्टिसंग्रहः ।

क्रीतात्करणादेः ॥ ३ । १ । ४३ ॥ क्रीतान्तात्करणादेरदन्तान्मृदो ङी भवति स्त्रियाम् । वस्त्रेण क्रीयते स्म सा वस्त्रक्रीती । करणादेरिति किम्? सुक्रीता । कथं तर्हि 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति? साधनं कृतेत्यत्र बहुलग्रहणात्क्वचित्सुबन्तेन वृत्तेः । सुबुत्पत्तिश्च बहिरङ्गा अन्तरङ्गे टापि कृते स्यात् । क्रीतान्तादिति किम्? वृस्त्येन क्रीता ।

क्तादल्पे ॥ ३ । १ । ४४ ॥ करणादेः क्तान्तान्मृदोऽल्पेऽर्थे ङी भवति स्त्रियाम् । अभ्रविलिप्ती द्यौः । अल्पाभ्रेत्यर्थः । अल्प इति किम्? चन्दनानुलिप्ता । अनल्पत्वे वक्ष्यमाणेन वसे विहितस्यापि ङीत्यस्य परिहारः ।

जातेर्वात् ॥ ३ । १ । ४५॥ सकृदाख्यातनिर्ग्राह्या जातिः । जातिशब्दपूर्वात् क्तान्तादृसान्ङी भवति स्त्रियाम् । स्वाङ्गपूर्वपदस्येहोदाहरणम् । शङ्खो भिन्नो यस्याः सा शङ्खभिन्नी । ऊरुभिन्नी । वादिति किम्? सव्यजानुप्रतिष्ठिता । कृतमितप्रतिपन्नजातान्तात्प्रतिषेधो वक्तव्यः । दन्तकृता । स्तनजाता । पाणिगृहीत्यादीनां वादिति योगविभागेन गुर्वनुज्ञाते ङी वक्तव्यः । पाणिगृहीती भार्या । एवं पाण्याती । यस्या यथाकथंचित्पाणिर्गृहीत सा तु पाणिगृहीता ।

वाऽस्वाङ्गादेः ॥ ३ । १ । ४६ ॥ अस्वाङ्गादेः क्तान्तादृसाद्वा ङी भवति स्त्रियाम् । सारङ्गजग्धी, सारङ्गजग्धा । वेति व्यवस्थितविभाषया षसेपि वा संज्ञायाम् । प्रबद्धविलूना—नी ।

स्वाङ्गान्नीचोऽस्फोङः ॥ ३ । १ । ४७ ॥ स्वाङ्गं न्यगऽस्फोङ् यत्तदन्तान्मृदो वा ङी भवति स्त्रियाम् । दीर्घकेशी, दीर्घ-

केशा। स्वाङ्गादिति किम्? बहुयवा। अस्फोड इति किम्? कल्याणगुल्फा। बसाधिकारे पुनर्न्येग्रहणं पार्थम्। अतिकेशी, अतिकेशा। व्यवस्थितविभाषया अङ्गगात्रकण्ठेभ्यो वा प्रतिषेधो वक्तव्यः। मृद्वङ्गी, मृद्वङ्गा। इत्यादि।

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथा युतम्॥ २॥

अद्रवमिति किम्? बहुकफा। मूर्तिमदिति किम्? बहुज्ञाना। प्राणिस्थमिति किम्? श्लक्ष्णमुखा शाला। अविकारजमिति किम्? बहुशोफा। प्राक् प्राणिनि दृष्टं सम्प्रत्यप्राणिस्थमपि स्वाङ्गम्। दीर्घकेशी दीर्घकेशा वा रथ्या। यथा प्राणिनो युतं दृष्टं तथाऽप्राणिनोपि तच्चेद्दृश्येत तदा तदपि स्वाङ्गम्। दीर्घमुखी, दीर्घमुखा वा मूर्तिः। स्वाङ्गसमुदायः स्वाङ्गशब्देन न गृह्यते। तेनेह न, कल्याणपाणिपादा।

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गात्॥ ३। १। ४८॥

नासिकादयो ये न्यन्तास्तदन्तान्मृदो वा ङी भवति स्त्रियाम्। दीर्घनासिकी, दीर्घनासिका। तनूदरी, तनूदरा। बिम्बोष्ठी, बिम्बोष्ठा। समजङ्घी, समजङ्घा। समदन्ती, समदन्ता। चारुकर्णी, चारुकर्णा। तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा। पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते इति न्यायात् नासिकोदरयोर्बह्वच इति प्रतिषेधे प्राप्ते, शेषाणां तु मध्येपवादत्वादस्फोड इति प्रतिषेधे प्राप्ते ग्रहणम्। वक्ष्यमाणः सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव। तेन सजङ्घा। पुच्छाच्चेति वक्तव्यम्। दीर्घपुच्छी, दीर्घ-

पुच्छा । कबरमणिशरविषेभ्यो नित्यमिति वक्तव्यम् । कबर पुच्छमस्याः कबरपुच्छी । इत्यादि । उपमानात्पक्षपुच्छाभ्यां नित्यमिति वक्तव्यम् । उलूकपक्षी शाला । उलूकपुच्छी सेना ।

न क्रोडादिबह्वचः ॥ ३ । १ । ४९ ॥ क्रोडाद्यन्ताद्बह्वचः स्वाङ्गान्ताच्च मृदो ङी न भवति । कल्याणक्रोडा । क्रोडादिराकृतिगणः । महाललाटा ।

सहनञ्विद्यमानात् ॥ ३ । १ । ५० ॥ सह–नञ्–विद्यमानेभ्यो यत्स्वाङ्गं तदन्तान्ङी न भवति । सकेशा । अनासिका । विद्यमानकेशा ।

नखमुखात्खौ ॥ ३ । १ । ५१ ॥ नखमुखान्तान्मृदः खुविषये ङी न भवति । चन्द्रणखा । "पूर्वपदात्खौ" इति णः । कालमुखा । खौ किम्? शूर्पनखी, शूर्पनखा । चन्द्रमुखी, चन्द्रमुखा ।

सख्यशिश्वी ॥ ३ । १ । ५२ ॥ एतौ ङ्यन्तौ निपात्येते । न शिशुरस्या अस्तीत्यशिश्वी ।

जातेरयोङः ॥ ३ । १ । ५३ ॥ जातिवाचिनोऽयकारोङोऽदन्तान्मृदो ङी भवति स्त्रियाम् ।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ ४ ॥

आकृतिर्ग्रहणमस्याः सा ब्राह्मणत्वादिः । संस्थानविशेषाभावात् कथं सङ्ग्रह इति चेदन्यदाह—एकलिङ्गो द्विलिङ्गो वा भावो जातिः । ब्राह्मणत्वादीनां तूपदेशमात्रं जातिव्यवहारनिबन्धनम् । ननु

जात्यभावेपि द्विलिङ्गतास्ति । देवदत्तो, देवदत्ता इति, कथं च त्रिलिङ्गेषु तट्यादिषु जातित्वम् ? अत एव सकृदित्याद्याह । अभिधानप्रत्यययोरनाकस्मिकत्वाचन्निमित्त जातिः । गोत्रं लौकिकमपत्यमात्रं, चरणं चाध्ययनवशात्क्रियाशब्दात्मकं जातिः । नाडायनी । कठी । जातेः किम् ? मुण्डा । अयोङः किम् ? आर्या ।

पाककर्णपर्णपुष्पफलमूलवालद्योः ॥ ३ । १ । ५४ ॥ द्युभूताः पाकादयो यस्य तस्माज्जातिवाचिनो मृदो ङी भवति स्त्रियाम् । क्षणपाकी । मूषककर्णी । पृश्निपर्णी । हिरण्यपुष्पी । पूगफली । शीर्यमूली । अश्ववाली । पूर्वेण सिद्धे नियमार्थमिदं 'स्त्रियामेव ये जातिवाचिनः शब्दास्तेष्वेतेभ्य एव ङी नान्यस्मात्' । तेनेह न, बलाका । मक्षिका । पूगपुष्पिका ।

इतो मनुष्यजातेः ॥ ३ । १ । ५५ ॥ इकारान्तान्मनुष्यजातिवाचिनो मृदो ङी भवति स्त्रियाम् । कुन्ती । अवन्ती । दाक्षी । प्लाक्षी । पुनर्जातिग्रहणं योङोपि यथा स्यात् । औदमेयी । मनुष्यजाते किम् ? तित्तिरिः । इञ उपसंख्यानमजात्यर्थम् । सुतंगमेन निर्वृत्ता नगरी सौतंगमी ।

ऊरुतः ॥ ३ । १ । ५६ ॥ उकारान्तान्मनुष्यजातिवाचिनोऽयोङो मृद ऊर्भवति स्त्रियाम् । कुरूः । इक्ष्वाकूः । द्विमात्रोच्चारणं "शेपाद्दे"ति परस्यापि कपो बाधनार्थम् । ब्रह्मबन्धूर्ब्राह्मणजातिः । मनुष्येत्येव । रुरुः । रज्जुः । हनुः । आखुः । अयोङ एव । अध्वर्युः ।

**पङ्गोः** ॥ ३ । १ । ५७ ॥ पङ्गुशब्दादूर्भवति स्त्रियाम् । पङ्गू । श्वशुरस्योकाराकारयो लमूश्च वक्तव्य । श्वश्रूः ।

**ऊरुद्योरिवे** ॥ ३ । १ । ५८ ॥ ऊरुशब्दो द्युर्यस्य तस्मान्मृद स्त्रियामूर्भवति इवार्थे गम्ये । करभोरू । इव इति किम् ? वृत्तोरु ।

**सहितशफलक्षणवामादेः** ॥ ३ । १ । ५९ ॥ सहितादादेरूरुद्योर्मृद ऊर्भवति स्त्रियाम् । सहितोरू । शफोरू । लक्षणोरू । वामोरू । सहितसहाभ्या चेति वक्तव्यम् । सहितोरू । सहोरू ।

**बाह्वन्तकद्रुकमण्डलुभ्यः खौ** ॥ ३ । १ । ६० ॥ बाह्वन्तात् कद्रुकमण्डलुशब्दाभ्या च स्त्रियामूर्भवति खौ । भद्रबाहूः । कद्रूः । कमण्डलूः । खाविति किम् ? वृत्तबाहु । कद्रु । कमण्डलु ।

**हृतः** ॥ ३ । १ । ६१ ॥ अधिकारोयमा कप ।

**यूनस्ति** ॥ ३ । १ । ६२ ॥ अनीचो युवन्नित्येतस्मात्तिर्भवति स्त्रियाम् । युवति । यून इति योगविभागात् कुत्साद्यर्थे हृत्प्रसङ्गे स्त्रीत्य एव भवति । युवतिका । अनीच इति किम् ? सुयुवा ।

इति स्त्रीत्यप्रकरणं समाप्तम् ।

---

(१) क्वचिज्जैनेन्द्रव्याख्याने "श्वश्रू" इति सञ्ज्ञेव निपातितम् ।

(२) नागमाप्तु सञ्ज्ञा ।

(३) बृहद्वृत्तौ सामर्थ्येष्ट्यादिना ये प्रयोगा साधितास्तेषा कृते बहुश प्रक्रियान्तरे सूत्राण्यप्युपलभ्यन्ते ।

स्त्रीत्यान्ते तद्यथा—

(१) गोर्यूताध्वपरिमाणे अस्य स्थाने गव्यूतिरध्वमाने॥

(२) 'शरोचि द्वित्वं न' अस्य स्थाने "शर" ॥

(३) 'ढश्वार्फिडादीनाम्' इत्य-

धिकमेव तत्र सूत्रम्। अनेन ऋडस्थाने यथासंभवं लो विधीयते।
(४) 'अक्षादूहिन्या' दिस्थाने "अक्षादूहिण्याम्" ॥ "स्वादीरीरे" ॥ "प्रादूहोढोढ्येषैष्ये" ॥ इति सूत्रत्रयम्।
(५) 'ऋणदशा' दिस्थाने "प्रदशार्णकम्बलवसनवत्सतराद्दणे" इति।
(६) "ऋते भासे" ॥ "एचेऽनियोगे" ॥ "वौष्ठौतौ से" ॥ "सीमन्तः केशेषु" ॥ एतान्यपि सूत्राणि वार्तिकस्थानेषु सन्ति।
(७) "वातायनेक्षे" ॥ एतत्सूत्रकार्यं विभाषासामर्थ्याद् बृहद्वृत्तौ साधितम्।
(८) विभाषाबलेन साधितडत्वकार्यार्थं "त्वे" इत्यस्ति सूत्रम्।
(९) नस्य सानुनासिकसविध्यर्थं "रिस्योः" इत्यधिकं सूत्रम्।
(१०) सर्वाद्यन्तर्गणस्थाने "समं सर्वयुक्ते" ॥ "पूर्वपरावरदाक्षिणोत्तरापराधराण्यखौ व्यवस्थायाम्" ॥ "स्वमज्ञातिधनाख्यायाम्" ॥ "वहियोगोपसंव्यानेऽपुर्यन्तरम्" ॥ इति सूत्रचतुष्टयम्।
(११) "ग्रामाग्रान्नीः" इति णत्वसाधकं सूत्रमधिकम्। एतत्कार्यं "पूर्वपदात् खाचगः" इत्यनेन समाप्यते महावृत्तौ।
(१२) "तृज्वत्क्रोष्टुः" ॥ "वाच्यापि" ॥ इत्याधिकं सूत्रद्वयं नापेक्षितं महावृत्तौ।
(१३) "इकःश्खम्" ॥ "वाऽद्रेः" ॥ "रःखम्" ॥ एतैर्विना कार्यं साधितं बृहद्वृत्तौ।
(१४) "तत्तस्सात्त्राशःकृत्वस्सुचवद्धामयत्वामृतुमसुम्मिङ्भत्यन्यकस्वरादयो झिः" इत्यनेन संगृहीतपाठो बृहद्वृत्तौ गणपाठादिना दर्शितः।

कानिचित्संज्ञासूत्राणि लक्षणसूत्राणि च रूपान्तरं दधते तन्मुद्रितप्रक्रियापुस्तकादेवावगन्तव्यम्।

## अथ विभक्त्यर्थाः ।

मिङपेक्षःसुबपेक्षश्चेति विभक्त्यर्थो यथायथं द्विधा संप्रधार्यः सर्वत्र ।

**मिङैकार्थे वा ॥ १ । ४ । ५४ ॥** मिङन्तेन पदेनैकार्थे वर्तमानान्मृदो वा भवति । कुमारी तिष्ठति । ओदनः पच्यते । खारी मीयते । एकः । द्वौ । बहवः । उक्तेष्वपि एकत्वादिषु मिङाकाङ्क्षित्वाद्वादिः । शिषु च वा इत्येवमादिष्वनर्थकेषु प्रादिषु च मिङन्तेनैकार्थत्वाभावेपि 'सुपो ङेरि' ति ज्ञापनाद्वा भवति । कर्मादिविशिष्टेष्वेकत्वादिष्विबादिनियमान्न वा । संबोधनेपि मिङैकार्थत्वाद्वा । हे देवदत्त ।

**कारके ॥ १ । २ । १०८ ॥** अधिकारोयम् । क्रियाया निर्वर्तकं हेतुर्वा कारकम् । क्रिया ध्वर्थः ।

**कर्त्राप्यम् ॥ १ । २ । ११९ ॥** कर्त्रा क्रियया यदाप्यं तत्कारकं कर्मसंज्ञं भवति । कर्त्रेति किम् ? माषेष्वश्वं बध्नाति । सर्वेषु कारकेषु कर्त्राप्येषु पुनराप्यग्रहणमाप्यतमसंप्रत्ययार्थम् । तेन पयसा ओदनं भुङ्क्ते ।

**अनुक्ते ॥ १ । ४ । १ ॥** अधिकारोयम् ।

**कर्मणीप् ॥ १ । ४ । २ ॥** अनुक्ते कर्मणि कारके इब्भवति ।

---

(१) कारकत्वं क्रियाजनकत्वं, भाष्ये करोति क्रियां निर्वर्तयतीति व्युत्पत्तिदर्शनात् । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र ब्राह्मणस्य न कारकत्वम्, अन्यथासिद्धिशून्यत्वे सति कार्यानियतपूर्ववर्तित्वेनाकारकत्वात् ।

(२) तदभावेपि केनाप्तुमित्याकाङ्क्षायां कारकाधिकाराद् व्यापारलाभ स्यात्तः प्रश्न. ।

(३) माषेषु प्रसक्तमश्वं माषनाशो मा भूत् इति अन्यत्र बध्नातीत्यर्थः ।

प्राप्य विषयभूत च निर्वर्त्यं विक्रियात्मकम् ।
कर्तुश्च क्रियया व्याप्यमीप्सितानीप्सितेतरत् ॥१॥

आप्यत्वसामान्य सर्वत्रात्र वर्तते । प्राप्य, ग्राम गच्छति । विषयभूत, जैनेन्द्रमधीते । निर्वर्त्य,कट करोति । विक्रियात्मक, काष्ठानि दहति । ईप्सित, गुड भक्षयति । अनीप्सित, ग्राम गच्छन् व्याघ्र पश्यति। अनुभयं, ग्राम गच्छन् वृक्षमूलान्युपसर्पति । भिङ्कृद्धस्तैरनुक्ते कर्मोऽवादिरुपसख्यात केश्चित् तत्प्राथिक, कट करोति दर्शनीयमित्यत्र दर्शनीयशब्दादपीवुत्पत्ते । अनुक्ते एव । नेह, क्रियते कट ,मिडोक्तम् । कृत कट , कृतोक्तम् । श्राद्ध भुङ्क्ते श्राद्धिक , हतोक्तम् । प्राप्तमुदक य स प्राप्तोदको ग्राम , सेनोक्तम्।

अकथितं च ॥ १ । २ । १२० ॥ अपादानादिविशेषकथाभिरसकीर्तित च कारक कर्मसज्ञ भवति । परिगणन कर्तव्यम् ।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरित कविना ॥२॥

उपयुज्यते इत्युपयोग पय प्रभृति, तन्निमित्त गवादि । न पूर्वोक्तो विधिरपूर्वविधिस्तस्मिन् । दुहादीना प्रयोगे यदपूर्वविधावुपयोगनिमित्त, ब्रुविशास्योर्गुणेन (अप्रधानेन) च (क्रियया कर्मणा वा) यत्सम्बध्यते तदकीर्तितमिति । गा दोग्धि पय । माणवक गां याचते । गामवरुणद्धि व्रजम् । आचार्य धर्मं पृच्छति । देवदत्त गा भिक्षते । वृक्षमवचिनोति फलानि । माणवक धर्मं ब्रूते

(१) [illegible]

शास्ति वा । अकथितमिति किम्? देवदत्ताद्वा याचते । करणाधिकरणसञ्ज्ञयो पूर्वमेव विहितत्वान्नेह,पाणिना कांसपात्र्या दोग्धि। कालभावाध्वगन्तव्या कर्मसञ्ज्ञा ह्यकर्मणामित्यनुक्तस्य चकारात्समुच्चय । मासमास्ते। एक द्वौ त्रीन्वाऽनाहारक । गोदोहं स्वपिति। योऽध्वा स एव गन्तव्य । क्रोशमास्ते । देशोपीति केचित् । कुरूनास्ते। प्रधानाप्रधानकर्मणो सामान्येनाप्यत्वात्केचिद्ध्वो द्विकर्मका । अजा नयति हरति वहति वा ग्रामम् । शाखा कृषति ग्रामम् । जिनदत्त शत जयति । ग्राम शत दण्डयति ।

ज्ञागम्यद्यर्थधेरणि कर्त्ता णौ ॥ १ । २ । १२१ ॥ अकर्मकस्य धिसंज्ञा वक्ष्यते । ज्ञार्थाना गम्यर्थानामदर्थाना धीना चाण्यन्ताना धूना य कर्ता स णौ कर्मसञ्ज्ञो भवति। ज्ञार्थे, ज्ञापयति माणवक धर्मम्। दर्शयति माणवक ग्रामम् । गम्यर्थे, गमयति माणवक ग्रामम्। अदर्थे,भोजयति माणवकमोदनम्। आशयति शाययति वा माणवकम्। पूर्वेण सिद्धे नियमार्थमिदं'मेतेषामेवाणौ कर्ता ण्यन्ते कर्मसञ्ज'। तेन, पाचयति ओदन देवदत्तेन । अणि कर्तेति किम्? ण्यन्ताण्णौ यथा न स्यात् । गमयति देवदत्तो यज्ञदत्तेन जिनदत्तम् । आदिखाद्यो प्रतिषेधो वक्तव्य । आदयति खादयति वान्न देवदत्तेन। भक्षेरहिंसार्थस्य च। भक्षयति पिण्डीं देवदत्तेन। अहिंसार्थस्येति किम्? भक्षयति बलीवर्दान् यवान् । नीवह्यो प्रापणार्थत्वान्न कर्मसञ्ज्ञा । नाययति वाहयति वा अजा देवदत्तेन । गत्यर्थसभवे तु स्यादेव । वाहयन्ति बलीवर्दान् यवान् ।

(१) अय तु विशेष — प्रधानकर्मण्यभिधेये ल्यादीनाहुर्द्विकर्मणाम । अप्रधाने दुहादीना ण्यन्ते कर्तुश्च कर्मण ॥१॥

प्रकृतेन कर्मणा अकर्मका इहाभिप्रेताः । तेन कालादिकर्मकाणां कर्त्ता कर्मसंज्ञो भवत्येव । मासमासयति देवदत्तम् ।

**शब्दे च ॥ १ । २ । १२२ ॥** कर्मभावेन क्रियाभावेन च शब्दे वर्तमानस्य णेराणि यः कर्ता स णौ कर्मसंज्ञो भवति । शब्दकर्मणः, श्रावयति उपलम्भयति वा देवदत्तं शब्दम् । शब्दक्रियस्य, जल्पयति देवदत्तम् । चकारेण, पूर्वसूत्रे ग्रहणमकृत्वा पृथग्विधानेन वाऽनुक्तसमुच्चयः । तेनेह न, ह्वाययति क्रन्दयति वा देवदत्तेन ।

**हृक्रोर्नवा ॥ १ । २ । १२३ ॥** हृक्रोराणि यः कर्ता स णौ नवा कर्मसंज्ञो भवति । विहारयति देवदत्तं देवदत्तेन वा । विकारयति सैन्धवान् सैन्धवैर्वा । प्राप्ताप्राप्तविकल्पोयम् । चकारानुकर्षणादभिवादिदृश्योर्वा दविषये । अभिवादयते गुरु देवदत्तं देवदत्तेन वा । दर्शयते राजानं भृत्यान् भृत्यैर्वा ।

**कर्मवाधिशीङ्स्थासः ॥ १ । २ । ११६ ॥** अधिपूर्वाणां शीङ् स्था आस् इत्येतेषामाधारो यस्तत् कारकं कर्मसंज्ञमेव भवति । ग्राममधितिष्ठति । पर्वतमधिशेते । प्रासादमध्यास्ते । एवकारः पुलिङ्गाधिकरणसंज्ञासमावेशनिवृत्त्यर्थः ।

**वसोऽन्वाध्याङः ॥ १ । २ । ११७ ॥** अनूपाध्याङ्पूर्वस्य वसतेराधारो यस्तत् कारकं कर्मसंज्ञं भवति । गिरिमनुवसति, उपवसति, अधिवसति, आवसति वा ।

**अभिनिविशश्च ॥ १ । २ । ११८ ॥** अभिनिपूर्वस्य विशतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । गेहमभिनिविशते ।

चकारात्क्वचिदधिकरणसंज्ञापि । तेन अर्थेष्वभिनिविष्ट ।

**अन्तराऽन्तरेण योगे** ॥ १ । ४ । ३ ॥ निभ्यामाभ्यां योगे इव् भवति । अन्तरा गन्धमादन कुरवः । तागप्तौ वचनम् । अन्तरेण विद्युत्प्रभं सौमनसं च देवकुरवः । मोक्षमन्तरेण नात्यन्तं सुखम् । क्वचिदन्यैरपि योगे योगग्रहणसामर्थ्यात्स्यात् । तेन अभित ,परितः,समया,निकषा,हा, प्रतियोगेषूपसंख्यानम् । अभितः परितः समया निकषा वा ग्रामम् । हा देवदत्तम् । वृणीष्व भद्रे प्रतिभाति यस्त्वाम् ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥२॥

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग् देवदत्तम् । अधोऽधो ग्रामम् । अध्यधि ग्रामम् । उपर्युपरि पर्वतम् । अन्यत्रापि । विना धर्मं कुतः सुखम् । अपिशब्दान्नच क्वचित् । हा तात ।

**कालाध्वन्यविच्छेदे** ॥ १ । ४ । ४ ॥ द्रव्यगुणक्रियाभिः कार्त्स्न्येन कालाध्वनोः सम्बन्धे वर्तमानाभ्यां कालाध्वभ्यामिव्भवति । अधिकरणस्य सम्बन्धस्य वा विवक्षायामपि ताया वा प्रासायां वचनम् । मासं गुडापूपा । शरदं मधुरा रमणीया । मासमधीते । क्रोशं सिकता । योजनं दीर्घः पर्वतः । योजनमधीते ।

---

(१) अभिनिविशिस्यानुपूर्व्या अविकृताया यत्र भवन तत्रैवैतत्सूत्रप्रवृत्तिरित्यर्थस्तीकारेणोक्तप्रयोगे न दोष इति भावः । अभिनिवेश आग्रह ।

(२) अन्तरा इत्यनृतीयान्तसाहचर्यादन्तरेणेति अतृतीयान्तम्, अन्तरेणेत्यदान्तसाहचर्यादन्तरा इत्यटान्तमिति बोध्यम् ।

अविच्छेदे किम्? मासस्य द्विरधीते। क्रोशे पर्वत, क्रोशस्य एकदेशे इत्यर्थः।

**वीप्सेत्थंभूतलक्षणेऽभिनेप्** ॥ १।४।११ ॥ वीप्सेत्थम्भूतलक्षणेष्वर्थेषु अभिना योगे इब्भवति गितिसंज्ञाप्रतिषेधश्च। वीप्सायां, वृक्षं वृक्षमभि सिञ्चति। गितिसंज्ञाप्रतिषेधात् षत्वप्रतिषेधादिर्वक्ष्यते से। इत्थंभूते, साधुर्देवदत्तो मातरमभि स्थितः। लक्षणे, वृक्षमभि सजति।

**भागे चानुप्रतिपरिणा** ॥ १।४।१२ ॥ भागेऽर्थे वीप्सादिषु चानुप्रतिपरिभिर्योगे इब्भवति गितिसंज्ञाप्रतिषेधश्च। भागोंऽश.। यदत्र मामनु प्रति परि वा स्यात्तद्दीयताम्। वीप्सायां, वृक्षं वृक्षमनु प्रति परि वा सिञ्चति। इत्थंभूते, साधुर्देवदत्तो मातरमनु प्रति परि वा। लक्षणे, वृक्षं प्रति पर्यनु वा विद्योतते विद्युत्।

**हेतावनुना** ॥ १।४।१३ ॥ हेत्वर्थे अनुना योगे इब्भवति गितिसंज्ञाप्रतिषेधश्च। जिनस्य ज्ञानोत्पत्तिमन्वागमन् सुरा.। जिनस्य ज्ञानोत्पत्तिमन्वागमनम्। इत्थम्भूते लक्षणे चानुना योगे पूर्वेण सिद्धैव तथापि येन नाप्राप्तन्यायेन शेषतायाः सोपवादो हेत्वर्थे तु परत्वाद्धा प्रसज्येतेति वचनम्।

**भार्थे** ॥ १।४।१४ ॥ सहार्थे अनुना योगे इब्भवति गितिसंज्ञाप्रतिषेधश्च। पर्वतमनु वसिता नगरी। पर्वतेन सह सम्बद्धेत्यर्थ।

**हीने** ॥ १।४।१५ ॥ हीनार्थे द्योत्येऽनुना योगे इब्भवति गितिसंज्ञाप्रतिषेधश्च। उत्कृष्टापेक्षयैव हीनः स्यादिति सामर्थ्यादधिके इप्। अनु समन्तभद्रं तार्किकाः। वादिराजमनु शाब्दिका.।

**उपेन ॥ १ । ४ । १६ ॥** हीनार्थे द्योत्ये उपेन योगे इब्भवति गितिसञ्ज्ञाप्रतिषेधश्च । उप सिद्धसेनं वैयाकरणाः ।

**स्वतन्त्रः कर्ता ॥ १ । २ । १२४ ॥** आत्माधीनः स्वतन्त्रः। क्रियासिद्धौ स्वतन्त्रो योर्थस्तत्कारकं कर्तृसंज्ञं भवति ।

**साधकतमं करणः ॥ १ । २ । ११३ ॥** क्रियया अतिशयेन साधकं साधकतमं, तत्कारकं करणसंज्ञं भवति । तमग्रहणं किम्? अन्यत्र तमग्रहणेन विना प्रकर्षो न लभ्येतेति । नेन 'आधारोधिकरण' इत्यनेन मुख्यामुख्ययोरधिकरणत्वं सिद्धम् । तिलेषु तैलम् । गङ्गायां घोषः । पुलिङ्गनिर्देशेनानवकाशया अपि परिक्रयणमिति संप्रदानसंज्ञया बाधा यथा न स्यात् । शतेन परिक्रीतः शताय वा । वचनसामर्थ्यात्संप्रदानसंज्ञापि ।

**कर्तृकरणे भा ॥ १ । ४ । २९ ॥** अनुक्ते कर्तरि करणे च कारके भा भवति । जिनदत्तेन स्तुतम् । वृतेन जन्माप्रमुपैति मर्त्यः । भेति वर्तमाने पुनर्भाग्रहणं प्रकृत्यादिभ्योपि भार्थम् । प्रायेण वैयाकरणः ।

**दिवः कर्म ॥ १ । २ । ११४ ॥** दिवः साधकतमं कारकं कर्मसंज्ञं भवति । नपा निर्देशात्करणसंज्ञापि । अक्षानक्षैर्वा दीव्यति।

---

(१) स्वतन्त्रत्वं कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतध्वर्थाश्रयत्वम् । अत एव पचस्तण्डुलो देवदत्तेनेत्यत्र फलस्य प्राधान्येपि देवदत्तस्य कर्तृत्वसिद्धय विशेषण दत्त लक्षणे ।

(२) दानेन भोग दयया सुरूप ध्यानेन मोक्ष तपसेष्टसिद्धिम । सत्येन वाक्यं प्रशमेन पूजा वृतेन जन्माप्रमुपैति मर्त्यः ॥ १ ॥

(३) प्रकृति, प्राय, गोत्र, सम, विषम, द्विद्रोण, पञ्चक, साहस्र । आकृतिगणोयम् ।

सिद्धौ भा ॥ १ । ४ । ५ ॥ क्रियाफलनिष्पत्तौ गम्यमानायामविच्छेदे यौ कालाध्वानौ ताभ्यां भा भवति । मासेन प्राभृतमधीतम् । अवधारितं चेत्यर्थः । सिद्धाविति किम्? मासमधीतं प्राभृतं न चानेनावधारितम् । अत्र 'कालाध्वनी'तीवेव ।

सहार्थेन ॥ १ । ४ । ३० ॥ योग इति मण्डूकप्लुत्यानुवर्तते । सहार्थशब्देन योगेऽप्रधाने भा भवति । सह पुत्रेणागतः पिता । अप्रधाने इति किम्? प्रधाने पितृशब्दे मिडैकार्थत्वात् वैव । अर्थग्रहणात्साकंसार्द्धंसमंयोगेपि भा । अन्त्येनेतादिरिति ज्ञापनात्तदर्थसम्प्रत्यये, विनापि तद्योगं भा ।

येनाङ्गिविकारेत्थम्भावौ ॥ १ । ४ । ३१ ॥ अङ्गिविकारः शरीरविकृतत्वम् । अनेन प्रकारेण भवनमित्थम्भावः। येनाङ्गिनो विकार इत्थम्भावश्च लक्ष्यते ततो भा भवति । पादेन खञ्जः । भवान् कमण्डलुना छात्रमद्राक्षीत् । अङ्गिविकारेत्यादि किम्? पादः खञ्जोऽस्य । वृक्षं प्रति विद्योतते ।

हेतौ ॥ १ । ४ । ३२ ॥ हेत्वर्थे तद्वाचिनो भा भवति । विद्यया यशः । इह लौकिकफलसाधनयोग्यः पदार्थो हेतुर्गृह्यते।

संज्ञो भा ॥ १ ॥ ४ ॥ २८ ॥ संपूर्वस्य जानातेः कर्मणि या भा भवति । मात्रा मातरं वा संजानीते । स्मृत्यर्थे तु 'स्मर्थदयेषामि'ति वक्ष्यते वा ता ।

कर्मणोपेयः सम्प्रदानम् ॥ १ । २ । ११० ॥ दानार्थानां धुना कर्मणा य उपेयोऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति ।

सम्प्रदानेऽप् ॥ १ ॥ ४ । २३ ॥ अनुक्ते संप्रदाने कारके-

ऽन्भवति । उपाध्यायाय गा ददाति । अन्वर्थसंज्ञत्वान्नेह, रजकस्य वस्त्रं, राज्ञो दण्डं वा ददाति । कर्मणेति किम् ? गवा उपाध्यायमुपैति । तदर्थेऽप्सवचनाचादर्थ्येऽप्यप् । युद्धाय सन्नह्यते । रथाय दारु । "सिद्धिरनेकान्तादि"त्यतोऽत्र कथञ्चिद्भेदाऽभेदोभयविवक्षा प्रत्येतव्या । तेन यत्र भेद आश्रीयते तत्र सन्दर्शनप्रार्थनाध्यवसायादिक्रियाभि क्रियापि आप्या सती कर्म स्यात् । तयोपेयोर्थश्च सम्प्रदानम् । रोचते देवदत्ताय मोदक । पत्ये शेते । स्वेभ्यो वर्षति । पुष्पेभ्य स्पृह्यति । मित्राय कथयति, क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति, कुप्यति वा । यत्र नाश्रितो भेदस्तत्र क्रियाया कर्मव्यपदेशो नास्ति । भार्यामीर्ष्यति । शप उपालम्भेऽर्थभेद* । देवदत्ताय शपते । न्हुङ आलनिह्नवे* । मित्राय न्हुते । अन्यत्र मित्र न्हुते । राधीक्ष्योर्दैवालोचने* । पुत्राय राध्यति ईक्षते वा । पृष्टो गृहस्थाचार्य शुभाशुभ कथयतीत्यर्थ । अन्यत्र पुत्रस्य राध्यति पुत्रमीक्षते च । प्रत्याङ्पूर्वस्य शृणोतेरभ्युपगमे* । देवाय प्रतिशृणोति । अनुप्रतिपूर्वस्य गृणातेश्च कथयितु प्रोत्साहने* । आचार्याय अनुगृणाति प्रतिगृणाति वा । क्वचिदुभयम्* । देवाय देव वा श्लाघते । देवाय देवं वा प्रणमति । गत्यर्थाना चेष्टायामसप्राप्तावुभयम्* । ग्रामाय ग्राम वा गच्छति । चेष्टायामिति किम् ? मनसा पाटलिपुत्र गच्छति । असप्राप्ताविति किम् ? पन्थान गच्छति । अन्यत्राभेदविवक्षैव* । कट करोति । सम्योश्च क्रुधिद्रुहो । मित्रमभिक्रुध्यति अभिद्रुह्यति वा ।

धारेरुत्तमर्णः ॥ १ । २ । १११ ॥ ऋणे उत्तम उत्तमर्ण ।

धारयतेर्योगे उत्तमर्णो यस्तत्कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय गां धारयते । उत्तमर्ण इति किम्? शतं धारयति (देवदत्तस्य) दरिद्रः ।

**परिक्रयणम्** ॥ १ । २ । ११२ ॥ परिक्रीयतेऽनेनेति परिक्रयणं, तत्कारकं सम्प्रदानसंज्ञं वा भवति पक्षे करणसंज्ञं च । शताय शतेन वा परिक्रीतः ।

**ध्वर्थवाचः कर्मणि स्थानिनः** ॥ १ । ४ । २४ ॥ ध्वर्थः क्रिया । स वाग् (उपपदं) यस्य स ध्वर्थवाक् तस्य स्थानिनो (अप्रयुज्यमानस्य) धो. कर्मण्यब् भवति। एधेभ्यो व्रजति । एधान्याहर्तुं व्रजतीत्यर्थ. । ध्वर्थवाचः किम्? प्रविश पिण्डीम् । स्थानिन इति किम्? एधान्याहर्तुं याति ।

**तुमर्थाद्भावे** ॥ १ । ४ । २५ ॥ तुम्समानार्थस्तुमर्थः । तुमर्थे भावे वर्तमानो यस्त्यस्तदन्तान्मृदोऽब्भवति । पाकाय व्रजति । पक्तुं व्रजतीत्यर्थः । अत्र तदर्थायां क्रियाया त्यस्य विधानान्न तादर्थ्येनाप् । तुमर्थादिति किम्? पाकः ।

**नमःस्वस्तिस्वाहास्वधालंवषड्योगे** ॥ १ । ४ । २६ ॥ एतैर्योगेऽब्भवति । नमोऽर्हते । स्वस्ति प्रजाभ्यः । आशिषि कुशलार्थैर्योगे प्राप्तां परामपि तां पूर्वनिर्णयेन बाधित्वाऽब्येव भवति । स्वस्त्यस्तु गोभ्य. । स्वाहा इन्द्राय । स्वधा पितृभ्यः । अलमिति पर्याप्त्यर्थानां ग्रहणं, तस्मै प्रभवतीति निर्देशात् । तेन मल्लः प्रतिमल्लायालं प्रभु· समर्थो वा । वषडिन्द्राय । वाग्विभक्त्याः कारकविभक्ती बलीयसी । नमस्करोति चैत्यायतनानि ।

कन्यामलङ्कुरुते । योगग्रहणादन्यैरपि योगे भवति । तेन हितयोगे उपसंख्यानम् । आरोचकिने हितम् । भिन्नविकारापत्तौ क्लृप्त्यर्थधुप्रयोगे च* । मूत्राय प्रकल्पते सम्पद्यते जायते वा यवागूः । भिन्नेति किम् ? मूत्रं सम्पद्यते यवागूः । विकारेति किम् ? देवदत्तस्य सम्पद्यते यवागूः । उत्पातेन ज्ञाप्यमाने च* । वाताय कपिला विद्युत् ।

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ १ । ४ । २७ ॥ जीववर्जिते दैवादिकमन्यते· कर्मणि वाऽभवति अतिशयतिरस्कारे गम्यमाने । न त्वां तृणाय तृणं वा मन्ये । प्रकृत्येति किम् ? न त्वां काष्ठं लोष्टं नावमन्नं वा मन्ये । विकरणनिर्देशः किम् ? तानादिकयोगे यथा न स्यात् । न त्वां तृणं मन्वे । अजीव इति किम् ? न त्वा श्वानं शृगालं वा मन्ये । गर्हग्रहणाद्युष्मत्प्रयोगाच्चाप् ।

ध्रुवमपायेऽपादानम् ॥ १ । २ । १०९ ॥ बुद्ध्या कृतः प्राप्तिपूर्वको विश्लेषो ध्यपायस्तत्र साध्ये यद् ध्रुवम्( अवधिभूतं ) कारकं तदपादानसंज्ञं भवति ।

अपादाने पञ्चमी ॥ १ । ४ । ३७ ॥ अपादाने कारके का भवति । ग्रामादागच्छति चैत्र । धावतोऽश्वात्पतितः । धीग्रहणं किम् ? कायप्राप्तिपूर्वक एव यथा न स्यात् । आचार्यादधीते । शृङ्गाच्छरो जायते । मेषौ परस्परतोऽपसर्पतः । अधर्माज्जुगुप्सते धर्मात्प्रमाद्यति । व्याघ्राद्बिभेति । चौरात् त्रायते । अध्ययनात्पराजयते । यवेभ्यो गां वारयति क्षेत्रे । उपाध्यायादन्तर्भवति । गङ्गा

(१) मानपात्राद्विनिर्गमिनी । पीती वर्णेन विद्युता दुर्भिक्षाय सिता भवेत् ॥ इति ।

हिमवत प्रभवति। विवक्षात कारकप्रवृत्ति ।तेनेह न,नटस्य गाथां शृणोति । ध्रुवमिति किम् ? अरण्ये निमेति । केति योगविभागा-दन्यत्रापि भवति । तेन प्याप्रयोगे कर्माधिकरणयो का वक्तव्या । प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य, आसने उपविश्ये-त्यर्थ । प्रश्नाख्यानयोश्च* । किं देवदत्तो व्याकरणात्कथयति ? आ-ख्यानेप्येवम् । यतोऽध्वकालपरिच्छेदस्तत्र च, कायुक्तादध्वनो वा वेप्च, कालात्तु ईववक्तव्या । गवेधुमत साकाश्य चत्वारि योजनानि चतुर्षु वा योजनेषु । कार्तिक्या आग्रहायणी मासे ।

दिक्छब्दान्यारादितरर्तेऽञ्चुदब्वाहियुक्ते ॥ १ । ४ । २८ ॥ एतैर्युक्ते का भवति ।'इयमस्या उत्तरा । शब्दग्रहणाद्दिशि दृष्टो य शब्दस्तेन देशकालवृत्तिनापि योगे स्यात् । पूर्वो ग्रामात् । पूर्वो ग्रीष्माद्वसन्त । अवयवयोगे प्रतिषेधो वक्तव्य । पूर्वं छात्राणा-माम लयस्व । अन्य इत्यर्थग्रहणम् । अन्यो व्यतिरिक्तो वा देव-दत्तात् । आराद्गृहात्क्षेत्रम् । गृहाद् दूरेन्तिके वेत्यर्थ । अत्र दूरा-न्तिकार्थैरिति ताया प्राप्ताया वचनम् । इतरो निर्दिश्यमानप्रति-योग्यर्थ । इतरो देवदत्तात् । ऋते धर्मात्कुत सुखम् । अञ्चु, प्रा ग्रामात् । आ, दक्षिणा ग्रामात् । आहि, दक्षिणाहि ग्रामात् । अञ्चुप्वाऽऽहियुक्ते 'तातसथे' इति प्राप्ता ता बाधितु वचनम् ।

कर्णेऽकर्तरि ॥ १ । ४ । २३ ॥ कर्तृवर्जिते हेतुभूते ऋणे का भवति । भाऽपवादोयम् । शताद्बद्ध । अकर्तरीति किम् ? शतेन बद्ध । अत्र कर्त्रर्थे विवक्षित ऋणम् । केति योगविभागा-द्धेतौ कापि । कृतकत्वादनित्य । अनुपलब्धेर्घटो नास्ति ।

**गुणे श्रीदत्तस्याऽस्त्रियाम्** ॥ १ । ४ । ३४ ॥ अस्त्री-लिङ्गे गुणे हेतौ का वा भवति । पक्षे तृक्ता भा । जाड्याज्जाड्येन वा बद्ध । गुणे किम्? धनेन कुलम् । अस्त्रियामिति किम्? बुद्ध्या मुक्त ।

**काऽऽङा मर्यादावचने** ॥ १ । ४ । २० ॥ मर्यादावचनेर्थे आङा योगे का भवति गितिसंज्ञाप्रतिषेधश्च । आ पाटलिपुत्राद्वृष्टो देव । ईषा सिद्धे वचनग्रहणमभिविध्यर्थम् । तेन आ कुमारेभ्यो यश प्रसृत समन्तभद्रस्य ।

**वर्जनेऽपपरिभ्याम्** ॥ १ । ४ । २१ ॥ विवक्षितेनासम्बन्धो वर्जनम् । आभ्या योगे का भवति वर्जने गितिसंज्ञाप्रतिषेधश्च । अप परि वा त्रिगर्तेभ्यो वृष्टो देव । वर्जने इति किम्? ओदन परिसिञ्चति ।

**यतः प्रतिदाप्रतिनिधी प्रतिना** ॥ १ । ४ । २२ ॥ प्रतिदान प्रतिदा।[1] मुख्यस्य सदृश प्रतिनिधि ।[2] प्रतिना योगे यत प्रतिदा प्रतिनिधिश्च तत का भवति गितिसंज्ञाप्रतिषेधश्च । तैल सर्पिष प्रतियच्छति । सर्पिर्गृहीत्वा तैल ददातीत्यर्थ । अभयकुमार श्रेणिकत प्रति । अभयकुमार श्रेणिकसदृश इत्यर्थ ।

**पृथग्विनानानाभिर्भा वा** ॥ १ । ४ । ४१ ॥ एतैर्युक्ते वा भा भवति पक्षे का च । पृथग् देवदत्तेन देवदत्ताद्वा । एव विना नाना । त्रयाणा ग्रहण पर्यायनिवृत्त्यर्थम् । हिरुग् देवद-

---

(१) दत्तस्य प्रतिनियातन प्रतिदानम ।

(२) मुख्यस्याभावे सति तत्सदृश उपादीयते य स प्रतिनिधि ।

स्य । करणे स्तोकाल्पकृच्छ्रकतिपयेभ्योऽसत्त्ववचनेभ्यो भाके वक्तव्ये । स्तोकेन स्तोकाद्वा मुक्तः । एवमल्पादिभिः । असत्त्ववचनेभ्य इति किम्? स्तोकेन विषेण हतः । विवक्षातः कारकप्रवृत्तिः । तेन स्तोकं चलति इत्यपि ।

**दूरान्तिकार्थैस्ता च ॥ १ । ४ । ४२ ॥** दूरार्थैरन्तिकार्थैश्च युक्ते ता भवति का च । दूरमन्तिकं वा ग्रामस्य ग्रामाद्वा । एवं विप्रकृष्टाभ्यासादिभिः ।

**तेभ्य इप् च ॥ १ । ४ । ४३ ॥** दूरान्तिकार्थेभ्यस्तु इब्भवति का च । चकाराद्वा च । दूरं दूरेण दूराद्वा ग्रामस्य । अन्तिकमन्तिकेन अन्तिकाद्वा ग्रामस्य । एवं विप्रकृष्टाभ्यासादिभ्यश्च । असत्त्ववचनेभ्य इति वक्तव्यम् । तेनेह न । दूरस्य पथः शम्बलम् ।

**ता शेषे ॥ १ । ४ । ५७ ॥** कर्मादिकारकाणामविवक्षा मृदर्थातिरेको वा स्वस्वामिसम्बन्धादिः शेषस्तत्र ता भवति । नटस्य शृणोति । स्वस्वामिसम्बन्धसमीपसमूहविकारावयवस्थानादयस्तार्थाः । राज्ञः स्वम् । मद्राणां राजा । देवदत्तस्य भ्राता । ग्रामस्य समीपम् । यवानां राशिः । यवानां धानाः । देवदत्तस्य हस्तः । गोः स्थानम् । अन्नादयो नियताः कर्मादयस्त्वनियताः, इति तेभ्यस्ता मा भूदिति शेषग्रहणम् ।

**ता हेतौ ॥ १ । ४ । ३५ ॥** हेतुशब्दे प्रयुक्ते हेत्वर्थे ता भवति । भिक्षाया हेतोर्वसति ।

**सर्वनाम्नो भा च ॥ १ । ४ । ३६ ॥** हेतुशब्दे प्रयुक्ते सर्वनाम्नो भा भवति ता च । केन हेतुना वसति, कस्य हेतोर्वा ।

निमित्तकारणप्रयोजनहेतुषु प्रयुक्तेषु सर्वासां प्रायो दर्शनमित्यनुक्तस्य चकारात्संग्रहः । किं निमित्तं, केन निमित्तेन, कस्मै निमित्ताय, कस्य निमित्तस्य, कस्मिन्निमित्ते वा वसति । एवं कारणादिषूदाहार्यम् । प्रायोग्रहणादिह ।

**ताऽतसर्थे त्येन ॥ १ । ४ । ३९ ॥** वक्ष्यतेऽतस् । तत्समानार्थेन त्येन योगे ता भवति । ग्रामस्य उत्तरत उपरि उपरिष्टात् पश्चात् पुरः पुरस्ताद्वा ।

**इबेनेन ॥ १ । ४ । ४० ॥** एनेन योगे इब्भवति । दक्षिणेन विजयार्द्धम् । तेति एनेनेति वा योगविभागात्तापीति केचित् । दक्षिणेन ग्रामस्य ।

**ज्ञोऽस्वार्थे करणे ॥ १ । ४ । ५८ ॥** स्वार्थोऽवबोधनम् । अस्वार्थे वर्तमानस्य जानाते करणे ता भवति । सर्पिषो जानीते । करणभूतेन सर्पिषा ईक्षते प्रवर्तते वेत्यर्थः । करणस्य शेषत्वाविवक्षाया तार्थं वचनम् ।

**स्मृत्रर्थदयेशां कर्मणि ॥ १ । ४ । ५९ ॥** स्मृत्यर्थाना धूनां दय ईशश्च कर्मणि शेषत्वेन विवक्षिते ता भवति । अर्थस्य स्मरणम् । सर्पिषो दयनमीशनं वा ।

**प्रतियत्ने कृञः ॥ १ । ४ । ६० ॥** प्रतियत्नः समीहा । करोते: कर्मणि शेषे ता भवति प्रतियत्ने गम्ये । एधो दकस्योपस्कुरुते । काण्डगुणस्योपस्कुरुते । प्रतियत्ने किम् ? कटं करोति बुद्ध्या । शेष इत्येव । एधो दकमुपस्कुरुते ।

**रुजर्थस्य भाववाचिनोऽज्वरिसन्ताप्योः ॥ १ । ४ । ६१ ॥**

भावकर्तृकाणां रुजर्थानां कर्मणि शेषे ता भवति ज्वरिसंतापी वर्जयित्वा । चौरस्य रुजति रोगः । वृषलस्यामयति रोगः । भावकर्तृकाणामिति किम्? मधुराशिनं रुजति श्लेष्मा । अज्वरि-संताप्योरिति किम्? आयूनं ज्वरयति ज्वरः । अत्याशिनं संतापयति ज्वरः । शेष इत्येव । चौरं रुजति रोगः ।

**आशिषि नाथः ॥ १ । ४ । ६२ ॥** आशीःक्रियस्य नाथतेः कर्मणि शेषे ता भवति । पयसो नाथते । पयो मे भूयादित्यर्थः । आशिषीति किम्? माणवकमुपनाथति अङ्ग पुत्राधीष्वेति।

**जासनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ १ । ४ । ६३ ॥** हिंसाक्रियाणामेषां कर्मणि शेषे ता भवति । चौरस्योज्जासयति । दैवादिकस्य तु न ग्रहणमहिंसार्थकत्वात् । निप्रयोः समुदितयोर्व्यस्तयोर्विपर्यस्तयोर्वा ग्रहणम् । चौरस्य निप्रहन्ति प्रहन्ति प्रणिहन्ति वा । चौरस्योन्नाटयति । चौरस्योत्क्राथयति । त्रिषु कृतदीत्वोच्चारणं किम्? दस्युमजीजसत् । वृषलस्य पिनष्टि । हिंसायामिति किम्? धानाः पिनष्टि । अभावकर्तृकार्थं वचनम् ।

**व्यवहृपणोः सामर्थ्ये ॥ १ । ४ । ६४ ॥** एतयोः कर्मणि शेषे ता भवति समानार्थे गम्ये । क्रयविक्रययोर्द्यूते च समानार्थत्वम् । सहस्रस्य व्यवहरते पणते वा । तौदादिकस्य पणतेर्ग्रहणम् । सामर्थ्ये किम्? शलाकां व्यवहरति । देवान्पणायते स्तौतीत्यर्थः ।

(१) विक्षिपतीत्यर्थः ।

**दिवश्च** ॥ १ । ४ । ६५ ॥ व्यवहृपणिसमानार्थस्य दिवः कर्मणि ता भवति । सहस्रस्य दीव्यति । सामर्थ्ये एव । साधनं दीव्यति । चकारोऽनुक्तसमुच्चयार्थः । तेन, सक्तूनां पूर्णः । ओदनस्य तृप्तः । नात्र शेषविवक्षा, उत्तरत्र बाधनात् ।

**वा गौ** ॥ १ । ४ । ६६ ॥ गिपूर्वस्य दिवः कर्मणि वा ता भवति । सहस्रस्य सहस्रं वा प्रतिदीव्यति । सामर्थ्ये एव । शलाकां प्रतिदीव्यति ।

**कालेऽधिकरणे सुजर्थे** ॥ १ । ४ । ६७ ॥ प्रयुक्त इति दूरादनुवर्तते । कालवाचकेऽधिकरणे शेषे ता भवति सुजर्थे त्ये प्रयुक्ते सति । पञ्चकृत्वोऽन्हो भुङ्क्ते । प्रयुक्त इति किम्? गम्यमाने यथा न स्यात् । अहनि भुङ्क्ते । द्विस्त्रिर्वेति गम्यते । शेष एव । द्विरहन्यधीते ।

**कर्तृकर्मणोः कृति** ॥ १ । ४ । ६८ ॥ कृति प्रयुक्ते अनुक्ते कर्तरि कर्मणि च ता भवति । भवतः शायिका । यवानां लावकः । कृतीति किम्? कृतपूर्वी कटम् ।

---

(१) नन्विह कर्तृकर्मण्या क्रियाशिष्यत तद्वाच्य धुगेव करणान्वयकरणान्वयत्व तावच्छेदकरूपेण साध्यत्वेन धुभिरेव तदुपास्थिति । शयोष इत्यादौ कृतो न तत्र रूप णोपस्थितारिति न तत्र कारकान्वय एतत्सत्युदाहरणदानाद् भाष्ये रूपरसामिक कृतश्च न मिङ्योगे न इति निषेधात् पारिशेष्यरूढ्येव एव माविष्यतीति किं तेन? इति चेत्, कृद्ग्रहणात् कृदन्तशक्तिमहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणारनात्र कृदन्त्यत्व कृदन्त शक्तिग्रहमात्रप्रयोज्योपस्थितिविषयाक्रियाया कर्तृकर्मणोः सूत्रस्यापवृत्त कृतपूर्वी कटमि त्यत्र सकर्मकप्रकृतिकभावक्तान्तस्य ईदृशात् चेमात्रविषयतया भाष्यममतत्वेन तस्य कर्तृ त्वस्य कष्यप्रयोगेण कृदन्तसमुदायशक्त्यैव क्रियोपस्थापकत्वात् तण्डुलानां पाचकतरं इत्यादौ तु पाचकादृ पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्यो- पस्थितिविषयत्वं क्रियाया अस्त्येवेति दिक् ।

**द्विप्राप्तौ परे ॥ १ । ४ । ६९ ॥** द्वयो प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव ता भवति । रोचते मे ओदनस्य भोजनम् । द्वयो. प्राप्तिर्यस्मिन्निति किम् ? भिन्नेधिकरणे यथा न स्यात् । आश्चर्यमिदमतिथीना प्रादुर्भाव., ओदनस्य च न पाक. । अकाकारयो प्रयोगे नेति वक्तव्यम् । भेदिका जिनदत्तस्य काष्ठानाम् । चिकीर्षा जिनदत्तस्य काव्यानाम् । शेषे विभाषा* । अकाकारापेक्षया शेषस्य स्त्रीत्यस्य ग्रहणम् । विचित्रा सूत्रस्य कृतिराचार्यस्याचार्येण वा । केचिदविशेषेणेच्छन्ति । विचित्र शब्दानुशासनमाचार्यस्याचार्येण वा ।

**क्तस्याधिकरणे ॥ १ । ४ । ७० ॥** अधिकरणे य क्तस्तस्य प्रयोगे ता भवति । 'न क्षिते'ति प्रतिषेधे प्राप्ते वचनम् । इदमेषामासित भुक्त शयित गत वा । अधिकरणस्य क्तेनोक्तत्वान्निर्ङेकार्थे इति वा ।

**भवति ॥ १ । ४ । ७१ ॥** भवति काले विहितस्य क्तस्य प्रयोगे ता भवति । राज्ञा मतो बुद्ध पूजितो वा । शेषविवक्षाया तु सर्वत्र प्राप्यते ता । छात्रस्य हसितम् ।

**न क्षितलोकखार्थतृनाम् ॥ १ । ४ । ७२ ॥** क्षि त ल उ उक खार्थ तृन् इत्येतेषा प्रयोगे ता न भवति । कर्तृकर्मणोरित्यस्य प्रतिषेधोयम् । क्षि, कट कृत्वा । कट कर्तुम् । त, देवदत्तेन कृत कट । कृतवान्कट देवदत्त । ल, कट कुर्वन् कुर्वाणो वा । उ, ओदन बुभुक्षु । उक, आगामुको वाराणसीम् । उकप्रतिषेधे कमेरप्रतिषेध * । वृषल्या. कामुक ।

सार्थः, सुकरः कटो भवता । तृन्निति शतृशानाविति तृशब्दादारभ्य तृनो नकारेण प्रत्याहारः । धान्यं यवमानः । जैनेन्द्रमधीयन् । वदिता जनापवादान् । द्विषः शतुर्वा* । चौरं चौरस्य वा द्विषन् ।

वर्त्स्यत्यऽकस्य ॥ १ । ४ । ७३ ॥ वर्त्स्यति काले वर्त्स्यतीति विहितस्याकस्य योगे ता न भवति । कटं कारको व्रजति । वर्त्स्यतीति किम्? ओदनस्य भोजकः । वर्त्स्यतीति विहितस्येति किम्? वर्षशतस्य पूरकः । शेषविवक्षायां सर्वत्र स्यादेव ता ।

आधमर्ण्ये चेनः ॥ १ । ४ । ७४ ॥ आधमर्ण्ये वर्त्स्यति काले विहितस्येनः प्रयोगे ता न भवति । शतं दायी । आधमर्ण्ये वर्त्स्यति इति किम्? अवश्यंकारी कटस्य ।

व्यस्य वा कर्तरि ॥ १ । ४ । ७५ ॥ व्यसंज्ञकस्य प्रयोगे कर्तरि वा ता भवति । भवतो भवता वा कटः कर्तव्यः । कर्तरीति किम्? ज्ञेयो माणवको गाथानाम् । भव्यज्ञेयादिसूत्रेण कर्तरि ज्ञेयशब्दो निपात्यते । अत्र कर्मणि नित्यं ता । वेति व्यवस्थितविभाषाश्रयणात् द्विप्राप्तौ परे इत्यस्यास्ताया व्यप्रयोगे प्रतिषेधः । तेन नेतव्या ग्राममजा देवदत्तेन ।

भाऽतुलोपमाभ्यां तुल्यार्थैः ॥ १ । ४ । ७६ ॥ तुलोपमाशब्दाभ्यामन्यैस्तुल्यार्थैर्युक्ते वा भा भवति । पक्षे शेषे ता । तुल्यो देवदत्तेन देवदत्तस्य वा । अतुलोपमाभ्यामिति किम्? नास्ति तुला उपमा वा सनत्कुमारस्य ।

अप् चाशिष्यायुष्यमद्रभद्रकुशलसुखहितार्थैः ॥ १ । ४ । ७७ ॥ आयुष्याद्यर्थैर्युक्तेऽब्वा भवत्याशिषि गम्यमानायाम् । पक्षे शेषे ता । आयुष्यं चिरंजीवितं वा देवदत्ताय देवदत्तस्य वा भूयात् । एवं मद्राद्यर्थैर्युक्तेपि । चकारादर्थार्थैरपि युक्ते वाऽप् । अर्थः प्रयोजनं वा देवदत्ताय देवदत्तस्य वा । आशिषि किम्? मद्रमस्ति देवदत्तस्य ।

आधारोऽधिकरणः ॥ १ । २ । ११५ ॥ क्रियाश्रययोः कर्तृकर्मणोराधारो यस्तत्कारकमधिकरणसंज्ञं भवति ।

ईबऽधिकरणे च ॥ १ । ४ । ४४ ॥ अधिकरणे ईब्भवति दूरान्तिकार्थेभ्यश्च ।

औपश्लेषिकवैषयिकावभिव्यापक इत्यपि ।
आधारस्त्रिविधः प्रोक्तः कटाकाशतिलेषु च ॥ ४ ॥

कटे आस्ते । स्थाल्यां पचति । आकाशे शकुनयः । यदधीना यस्य स्थितिः सोप्याधारः । गुरौ वसति । विभागाप्रतीतेरभिव्यापकः । दधनि सर्पिः । दूरेऽन्तिके वा ग्रामस्य । तेभ्य इप्के चोक्ते । क्तस्येन्विषयस्य कर्मणीब्वक्तव्या* । परिगणिती ज्योतिषि । परिगणितमनेनेत्यस्मिन्विग्रहे इष्टादेरिति कर्तरीन् । निमित्तात् कर्मसंयोगे च* ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ ५ ॥

ईविति योगविभागात्सिद्धमेतत् ।

(१) इनो विषयस्य-प्रकृतेः क्तान्तस्य कर्मणीत्यर्थ. । तेन कृतपूर्वी कटमित्यत्र न ।

**यद्भावाद्भावगतिः** ॥ १ । ४ । ४५ ॥ यस्य क्रियया क्रियान्तरज्ञानं स्यात्तत्रैतेभवतः । देवार्चनायां क्रियमाणायां गतः। यद्भावादिति किम्? यो जटाभिः स भुक्ते। पुनर्भावग्रहणं किम्? यो भुक्तवान् स देवदत्तः ।

**ता चानादरे** ॥ १ । ४ । ४६ ॥ अनादरे गम्यमाने यस्य क्रियया क्रियान्तरज्ञानं स्यात्तत्र ता ईप् च भवति । क्रोशतः क्रोशति वा प्राव्राजीत् । अत्रावज्ञानेन क्रोशनेन प्रव्रजनभावो लक्ष्यते ।

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** ॥ १ । ४ । ४७ ॥ एतैर्युक्ते तेपौ भवतः । गवां गोषु वा स्वामी । चकारस्तेपोरनुवर्तनार्थः । अन्यथा पूर्वत्र चानुकृष्टाया ईपोऽनुवृत्तिर्न स्यात् । प्रसूतेन योगे ईपि इतरैस्तु तायां भाषायां वचनम् ।

**कुशलायुक्तेन चासेवायाम्** ॥ १ । ४ । ४८ ॥ आभ्यां युक्ते तेपौ भवतस्तत्परतायां गम्यमानायाम् । कुशलो विद्याग्रहणस्य विद्याग्रहणे वा । आयुक्तस्तपश्चरणस्य तपश्चरणे वा । आसेवायामिति किम्? आयुक्तो गौः शकटे । आकृष्य युक्त इत्यर्थः ।

**यतश्च निर्द्धारणम्** ॥ १ । ४ । ४९ ॥ जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणं यतस्ततस्तेपौ भवतः । मनुष्याणां मनुष्येषु वा क्षत्रियः शूरतमः । नारीणां नारीषु वा श्यामा दर्शनीयतमा । अध्वगानामध्वगेषु वा धावन्तः शीघ्रतमाः । प्रपञ्चार्थमिदम्-इदमन्तराप्यधिकरणसम्बन्धविवक्षायां तेपोः सिद्धत्वात् । तेन छात्राणां छात्रेषु वा मैत्रेयः पटुः ।

**विभक्ते का ॥ १ । ४ । ५० ॥** भिन्नजातीयात्समुदाया-द्गुणादिना पृथक्करण विभक्तं–निर्द्धारण, तत्र का भवति । अयम-स्माद्विलक्षण । अयमस्माल्लघु । इदमपि प्रपञ्चार्थं–ध्यपायत्वेनापादा-नत्वसिद्धे ।

**साधुनिपुणेनार्चायामीबऽप्रतेः ॥ १ । ४ । ५१ ॥** प्रतेरप्रयोगे आभ्या योगे ईब्भवत्यर्चाया गम्यमानायाम् । मातरि साधु । पितरि निपुण । अर्चायामिति किम् ? साधुर्निपुणो वा राज्ञोऽमात्य । प्रतिग्रहणमगितिसञ्ज्ञानामभिपर्यन्तानामुपलक्षणम् । मातर प्रत्यभि अनु वा साधु ।

**प्रसितोत्सुकाभ्यां भा च ॥ १ । ४ । ५२ ॥** आभ्यां युक्ते भा भवति ईप्च । केशै केशेषु वा प्रसित । प्रसक्त इत्य-र्थ । केशै केशेषु वोत्सुक ।

**उसि भे ॥ १ । ४ । ५३ ॥** भवाचिनि भेपौ भवत उस्वि-षये । पुष्येण पुष्ये वा पायसमश्नीयात् । पुष्येण युक्त काल इति विग्रहे कृतस्याण उस् वक्ष्यते । उस्विषये इति किम् ? मघासु ग्रह ।

**क्रियामध्ये केपौ ॥ १ । ४ । ६ ॥** क्रिययोर्मध्ये यौ कालाध्वानौ ताभ्या केपौ भवत । अद्य भुक्त्वा मुनिर्द्व्यहाद् द्व्यहे वा भोक्ता । इहस्थोयमिष्वासो लक्ष्य क्रोशात्क्रोशे वा विध्यति ।

**ईवऽधिके ॥ १ । ४ । १७ ॥** उपेन योगे ईब्भवत्यधिकार्थे द्योत्ये । उपनिष्के कार्षापणम् ।

**ईश्वरेऽधिना ॥ १ । ४ । १८ ॥** ईश्वरेशितव्यसम्बन्धे

घोत्येऽधिना योगे ईश्भवति गितिसंज्ञाप्रतिषेधश्च । वा कृञ-धिरित्यतो विभाषावलोकनात् पर्यायेणेश्वरादीशितव्याचेप् । अधि मेघेश्वरे कुरवः। अधि कुरुषु मेघेश्वर• । विभक्त्यर्थे हसो वक्ष्यते। सोऽत्र न भवति, अस्य सम्बन्धस्य कारकत्वाभावात् ।

इति विभक्त्यर्थाः ।

---

अथ सप्रकरणम् ।

सो हि चतुर्था, तत्र हसो दर्श्यते सर्वत• प्राक् ।

**समर्थः पदविधिः** ॥ १ । ३ । १ ॥ परिभाषेयम् । सर्वः पदसम्बन्धी विधि समर्थपदाश्रितो वेदितव्य. । तत् सामर्थ्यमेकार्थीभावः परस्परव्यपेक्षा च । तत्र सविधिनामधुह्रद्विधिषु स्वभावत एकार्थीभाव. । अन्यत्र व्यपेक्षा ।

**सः** ॥ १ । ३ । २ ॥ आ पादपरिसमाप्तेरधिकारोयम् । समुदाये वाक्यपरिसमाप्ति. । तेन पदसमुदाये ससंज्ञा । वक्ष्यमाणहादिसंज्ञासमावेशार्थ• पुल्लिङ्गनिर्देश । अन्यथा,—

**नव्वाध्य आसम्** ॥ १ । २ । ९० ॥ अधिकारोऽयम् । आ साधिकारपरिसमाप्तेर्नेषा निर्दिष्टो बाध्यो भवति । इति ससज्ञया सह हादिसज्ञा नैकत्र सतिष्ठेत ।

**सुप्सुपा** ॥ १ । ३ । ३ ॥ सुवन्त सुवन्तेन सह समस्यते ।

---

(१) विधिशब्द कर्मसाधन शेषषष्ठ्या स , तदाह पदसम्बन्धीति । पदविधिश्च स , सहादि तस्य च न सामर्थ्य माक्षाद्विशेषणसभवात् । अत आह समर्थपदाश्रित इति । एव च सूत्रे समर्थपद समर्थाश्रिते लक्षणिकमिति भाव ।

(२) एकार्थीभावे ससृष्टार्था व्यपेक्षायां तु सम्बद्धाय समेक्षितार्थो वा समर्थ ।

एतदधिकृतमो पादपरिसमाप्तेर्लक्षणं च । यदृच्छयाऽतर्कितोप-स्थिते चित्रीकरणे चायमिष्यते । तेन काकतालीयादयः सिद्धाः ।

हः ॥ १ । ३ । ४ ॥ अधिकारोयमापम् ।

ङि विभक्त्यभ्याससद्धर्यर्थाभावातीत्यसम्प्रतिव्यृद्धिशब्द-प्रभवपश्चाद्यथानुपूर्व्ययौगपद्यसम्पत्साकल्यान्तोक्तौ ॥ १ । ३ । ५ ॥ एष्वर्थेषु वर्तमानं यज्झिसंज्ञं तत्समर्थेन सुबन्तेन सह समस्यते स च हसंज्ञकः सो भवति । विभक्त्यर्थः कारकम् । स्त्रीष्विति अलपदविग्रहे ईबर्थद्योतकोऽधिः । स्त्री सुप् अधि इत्यलौकिको वाक्यविग्रहः ।

वोक्तं न्यक् ॥ १ । ३ । ९३ ॥ सविधायकेषु सूत्रेषु वानि-र्दिष्ट न्यक्संज्ञ भवति ।

पूर्वम् ॥ १ । ३ । ९७ ॥ सवृत्तौ न्यक्संज्ञं पूर्वं प्रयोक्त-व्यम् । इत्यधे पूर्वप्रयोगः । हश्चेति नपि 'प्रो नपी'ति प्रः । सत्वात्मृत्संज्ञा ।

सुपो धुमृदोः ॥ १ । ४ । १४२ ॥ धुमृदोरवयवस्य सुप उब्भवति । इति सुप उप् । ततो मृत्त्वात्स्वादयः । तासां हा-दित्युप् । अधिस्त्रि सर्वत्र । अभ्यासः समीपम् । कुम्भस्याभ्यासे इत्यर्थे वान्तेन वृत्ति ।

नातोम्त्वकायाः ॥ १ । ४ । १५२ ॥ उपकुम्भम् । का-न्तस्य तु उपकुम्भात् ।

---

(१) आदिपदेनाजकृपाणीयान्धकवर्तकीयादयो गृह्यन्ते ।

ईङ्भयोर्विभाषा ॥ १ । ४ । १५३ ॥ अम् । उपकुम्भमुपकुम्भेन वा । उपकुम्भमुपकुम्भे वा । समया पर्वतमाराद्ग्रामादित्यादौ तु न ह्सः, प्रतिपदोक्तेप्क्ययोर्विधानसामर्थ्यात् । विभूतेराधिक्यमृद्धिः । मद्राणामृद्धिः सुमद्रम् । व्यवस्थितविभाषयात्र नित्यममादेशः । अर्थाभाव उत्तरपदार्थप्रध्वंसः । मक्षिकाणामभावो निर्मक्षिकम् । अतीतिरतीतत्वम् । स्वत एवातिक्रान्तत्वमित्यर्थः । शीतस्यातीतिर्निःशीतम् । असम्प्रति, नेदानीमित्यर्थः । न सम्प्रति तैसृकमतितैसृकम् । तिसृका नाम ग्रामस्तत आगतेऽर्थेऽणि तैसृकम् । ऋद्धेर्विगमो व्यृद्धिः । यवनानामृद्धेर्विगमो दुर्यवनम् । शब्दप्रभवः शब्दस्य प्रकाशः, श्रीदत्तशब्दस्य प्रकाशः अहोश्रीदत्तम् । रथानां पश्चादनुरथम् । यथार्थो योग्यता वीप्सा सादृश्यमुत्तरपदार्थानतिवृत्तिश्च । सुरूपं वहति । रूपस्य योग्यमित्यर्थः । वीप्सायां तु वा ह्सः, इञ्विधानसामर्थ्यात् । प्रत्यर्थम्, अर्थमर्थं प्रति वा । सदृशं शीलस्येत्यर्थे,–

हेऽकाले ॥ ४ । ३ । १८९ ॥ ह्से सहस्य सादेशो भवति अकालवाचिनि धौ । सशीलम् । काले तु सहपराह्णम् । कुलमनतिक्रम्य यथाकुलम् । आनुपूर्व्यमनुक्रमः । ज्येष्ठस्यानुक्रमेणेति अनुज्येष्ठम् । यौगपद्यसम्पत्साकल्यान्तोक्तिषु सहशब्दो वर्तते । चक्रेण युगपदिति सचक्रम् । सम्पदात्मभावनिष्पत्तिः । वृतस्य सम्पत् सवृतं साधूनाम् । साकल्ये सतृणमभ्यवहरति । सर्वमभ्यवहरतीत्यर्थः । अन्ते, प्राभृतपर्यन्तमधीते इति सप्राभृतमधीते।

एवं सटीकम् । आचाण्डालं प्रयच्छतीत्यत्रान्तोक्तिरभिविधिश्च । तेन वाक्यमपि । आ चाण्डालेभ्यः प्रयच्छति ।

**यावद्यथावधृत्यऽसादृश्ये** ॥ १ । ३ । ६ ॥ यावद्यथा इत्येतौ क्रमेणावधारणेऽतुल्यार्थे चैव सुपा सह प्राग्वत् समस्येते । यावदमत्रमतिथीन् भोजय । यावन्त्यमत्राणि तावतो भोजयेत्यवधार्यते । यथावृद्धं साधूनर्चय । वृद्धानतिक्रमेणेत्यर्थः । यथार्थे पूर्वेण सिद्धे नियमार्थोऽयम् । तेन यथा देवदत्तस्तथेन्द्रदत्त इत्येव। अवधारण एव । नेह, यावद्दत्तं तावद्भुक्तम् ।

**स्तोके प्रतिना** ॥ १ । ३ । ७ ॥ ह्मीति निवृत्तम् । स्तोकेऽर्थे प्रतिना सह सुबन्तं समस्यते स च हसो भवति । सूपस्य मात्रा सूपप्रति । स्तोके किम् ? वृक्षं प्रति विद्योतते विद्युत् ।

**परिणाऽक्षशलाकासंख्याः** ॥ १ । ३ । ८ ॥ एते परिणा सह समस्यन्ते स च हसो भवति । एकवचनेन सिद्धे बहुत्वनिर्देशादिदं लभ्यते । तेन, वेति सिंहावलोकनादत्र वृत्तिः । साप्यऽक्षादयो यदा भान्ता एकत्व चाक्षशलाकयोः परिशब्दश्च पूर्वोक्तस्यान्यथावृत्तौ स्यात्तदैव कितवव्यवहारविषये एव चेष्यते। अक्षेण विपरीत वृत्तमक्षपरि । शलाकापरि । द्विपरि ।

**वा** ॥ १ । ३ । ९ ॥ अधिकारोऽयम् । अत एवातः पूर्वः सविधिर्नित्यः । तत एव तत्रास्वपदविग्रहः ।

**पर्यपाङ्बहिरञ्चवः कया** ॥ १ । ३ । १० ॥ एते सुबन्ताः कान्तेन सह वा समस्यन्ते स च हसो भवति । परित्रिगर्तं परि त्रिगर्तेभ्यो वा वृष्टो देवः । एवमपत्रिगर्तमप त्रिगर्तेभ्यो वा ।

आपाटलिपुत्रमा पाटलिपुत्राद्वा । धर्हिग्रामं बहिर्ग्रामाद्वा । अत एव ज्ञापकाद्बहिर्योगे का । प्राग्ग्रामं प्राग्ग्रामाद्वा ।

**लक्षणेनाभिमुख्येऽभिप्रती ॥ १ । ३ । ११ ॥** लक्ष्यतेऽनेनेति लक्षणं तद्वाचिना सुबन्तेन सह आभिमुख्ये वर्तमानावभिप्रती वा समस्येते स च हसो भवति । अभ्यग्नि अग्निमभि वा शलभाः पतन्ति । प्रत्यग्नि अग्निं प्रति वा । लक्षणेनेति किम् ? स्रुघ्नं प्रति गतः ।

**यत्समयाऽनुः ॥ १ । ३ । १२ ॥** समयावाची अनुरुपचारात्समया । यस्य समया यत्समया । अनुर्यत्समयाद्योतकस्तेन लक्षणवाचिना सुबन्तेन हानोर्वा हसो भवति । अनुवनं गतोऽशनिर्वनमनु वा । त्रिविभक्तीति सिद्धे विकल्पार्थं वचनम् ।

**आयामिना ॥ १ । ३ । १३ ॥** अनुरतिशयेन दीर्घेण लक्षणवाचिना सह वा प्राग्वद्भवति । अनुगोणं पाटलिपुत्रम् । शोणनदायामेन पत्तनायामो लक्ष्यते । पक्षे वाक्यमपि ।

**तिष्ठद्ग्वादीनि च ॥ १ । ३ । १४ ॥** एतानि हससंज्ञानि निपात्यन्ते । तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः। एवमायतीगवादयः । इह शत्रादेशः सान्तादिश्च निपात्यते ।

**पारे मध्ये तया वा ॥ १ । ३ । १५ ॥** पार–मध्यशब्दौ तान्तेन सह वा समस्येते स च हसो भवति । वावचनात्पक्षे तासोपि । अधिकृतेन तु वावचनेन वाक्यमपि । वचनसामर्थ्यादेदन्तत्वं निपात्यते । गङ्गायाः पारं मध्यं वा । पारेगङ्गं गङ्गापारं वा । मध्येगङ्गं गङ्गामध्यं वा ।

**संख्या वंश्येन ॥ १ । ३ । १६ ॥** विद्यया जन्मना च कृतः सन्तानो वंशस्तत्र भवो वंश्यः । तद्वाचिना सह संख्या समस्यते स च हसो भवति । द्वौ मुनी व्याकरणस्य वंश्यौ । द्विमुनि व्याकरणस्य । अत्र सम्बन्धे ता । व्याकरणस्याचार्ययो-श्चाभेदविवक्षा यदा तदा द्विमुनि व्याकरणम् । त्रिकौशलम् । एकाश्रयो यसो वक्ष्यते तदपवादोयम् ।

**नदीभिश्च॥ १ । ३ । १७ ॥** संख्या नदीवाचिभिः सह समस्यते स च हसो भवति । सप्त सिन्धवः समाहृता सप्तसि-न्धु । एवं द्वियमुनमित्यादि । चकारात्समाहारेऽयमिष्यते । नेह एकनदी ।

**खावन्यपदार्थे ॥ १ । ३ । १८ ॥** अन्यपदार्थे वर्तमानं सुबन्तं नदीभि॰ सह नित्यं समस्यते स च हसो भवति खुविषये। तूष्णींगङ्गम् । अत्र वृत्त्यैव संज्ञा गम्यते इति सामर्थ्याभित्य स. । अखुविषये तु यसो वक्ष्यते ।

**सान्तः ॥ ४ । २ । ६५ ॥** अधिकारोयमा पादपरिसमाप्तेः ।

**हे शरदादेः ॥ ४ । २ । १०९ ॥** शरदाद्यन्ताद्धसाद्टः सान्तो भवति । शरदः समीपमुपशरदम् । प्रतिशरदम् । शरद्, विपाश्, अनस्, मनस्, उपानह्, दिश्, दृश्, कियत्, चतुर्, हिमवत्, अनडुह्, तद्, यद्, जराया जरस च (ग.) उपजरसम्, प्रतिपरसमनुभ्योऽक्ष्ण (ग.) टिखे प्रत्यक्षम्, पथिन् ।

**अनः ॥ ४ । २ । ११० ॥** अन्नन्ताद्धसाट्टो भवति ।

**नोऽपुंसो हृति ॥ ४ । ४ । १२८ ॥** नकारान्तस्य भस्य टिख भवति हृति परे न तु पुंस । अध्यात्मम् ।

नपो धा ॥ ४ । २ । १११ ॥ अनन्तं यन्नप् सदन्ताद्-साद्वा टो भवति । उपचर्मम्, उपचर्म ।

गिरिनदीपौर्णमास्याग्रहायणीझयः ॥ ४ । २ । ११२ ॥ गिर्यादिभ्यो झयन्ताच्च वा टो भवति हसे । अन्तर्गिरम्, अन्तर्गिरि । तिष्ठद्ग्वादित्वाद्विभक्त्यर्थे वा सः । उपनदम्, उपनदि । उपपौर्णमासम्, उपपौर्णमासि । उपाग्रहायणम्, उपाग्रहायणि । उपदृषदम्, उपदृषत् ।

इति समासे ह्याधिकारः ।

---

अथ पप्रकरणम् ।

पम् ॥ १ । ३ । १९ ॥ अधिकारोऽयं प्रागबसात् ।

इपा च माप्तापन्ने ॥ १ । ३ । २० ॥ इबन्तेन सुबन्तेन सह प्राप्तापन्ने समस्येते स च पसो भवति ।

स्त्रीगोर्नीचः । १ । १ । ८ ॥न्यग्भूतो यः स्त्र्यो गोशब्दश्च तदन्तस्य मृदः प्रादेशो भवति । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । चकारः किम् ? अकारादेशोऽपि यथा स्यात् । प्राप्ता जीविकां प्राप्तजीविका । आपन्नजीविका प्रपञ्चार्थमिदं, बसेनापि सिद्धेः ।

इप् तच्छ्रितातीतपतितगतात्यस्तैः ॥ १ । ३ । २१ ॥ इबन्तं प्राप्तापन्नाभ्यां श्रितादिभिः प्रकृतिभिश्च सह समस्यते स च पसो भवति । जीविकां प्राप्तो जीविकाप्राप्तः । जीविकापन्नः । धर्मश्रितः । संसारातीतः । नरकपतितः । मोक्षगतः । दुःख-

नात्यस्तः । सापेक्षमसमर्थवद्भवतीति नेह—महान्तं धर्मं श्रितः । यसगर्भे तु स्यादेव महाधर्मश्रितः ।

स्वयं क्तेन ॥ १ । ३ । २२ ॥ इबधिकारोऽसम्भवादिमं योगमुल्लङ्घते । स्वयमित्येतञ्झिसंज्ञं क्तान्तेन सह समस्यते स च पसो भवति । संघाताद्भूदुत्पत्तिः फलम् । स्वयंगुप्तस्येदं स्वायंगुप्तम् । कृद्ग्रहणे तिकारकपूर्वस्यापि ग्रहणम् । स्वयंविलीनम् ।

खट्वाऽक्रमे ॥ १ । ३ । २३ ॥ इबन्तः खट्वाशब्दः क्तान्तेन सह समस्यते स च पसो भवत्युत्पथगमने । खट्वाश्रितो जाल्मः । खट्वारूढो जाल्मः । वृत्त्यैवाक्रमो गम्यते अतोऽत्र नित्यं सः । अक्रमे किम् ? खट्वामारूढोऽध्यापकः ।

सामि ॥ १ । ३ । २४ ॥ सामीत्यर्धवाचि झिसंज्ञं क्तान्तेन सह समस्यते स च पसो भवति । सामिभुक्तम् ।

कालाः ॥ १ । ३ । २५ ॥ इबन्ताः कालवाचिनः क्तान्तेन सह समस्यन्ते स च पसो भवति । विच्छेदे क्तान्तेनेहोदाहरणम् । मासं प्रमातुमारब्धो मासप्रमितः प्रतिपच्चन्द्रमा ।

अविच्छेदे ॥ १ । ३ । २६ ॥ क्तेनेति निवृत्तम् । इबन्ताः कालवाचिनः सुबन्तेन सह समस्यन्ते स च पसो भवति नैरन्तर्ये । सर्वरात्रकल्याणी । अत्यन्तसुखम् ।

भा गुणोक्त्यार्थनोनैः ॥ १ । ३ । २७ ॥ भान्तं सुबन्तं गुणोक्त्या अर्थशब्देनोनवाचिभिश्च सह समस्यते स च पसो भवति । गिरिणा काणो गिरिकाणः । पुण्येनार्थः पुण्यार्थः ।

अर्थोऽत्र प्रयोजनम् । मापे णविकलं मापविकलम् । गुणेनेति सिद्धे उक्तिग्रहणाद्दान्तकृतो गुणो गृह्यते । नेह अक्ष्णा काणः । एतैः किम् ? गोभिर्वपवान् ।

**पूर्वावरसदृशकलहनिपुणमिश्रश्लक्ष्णसमैः** ॥ १ । ३ । २८ ॥ एतैः सह भान्तं समस्यते स च षसो भवति । संवत्सरपूर्वः । संवत्सरावरः । विद्यासदृशः । असिकलहः । वाग्निपुणः । तिलमिश्राः । जिह्वाश्लक्ष्णः । कुलसमः ।

**साधनं कृता बहुलम्** ॥ १ । ३ । २९ ॥ भान्तं कारकं बहुलं कृदन्तेन सह समस्यते स च षसो भवति । अहिहतः । विषहतः । साधनमिति किम्? भिक्षाभिरुषितः । वेति सिद्धे बहुलग्रहणं किम्? देवदत्तेन नखैर्निर्भिन्नो देवदत्तनखनिर्भिन्नः । कर्म, ग्रामं गमी ग्रामगमी । ओदनबुभुक्षुः । अपादानम्, ग्रामनिर्गतः । अधिकरणं, गले चोप्यते गलेचोपकः । क्वचिन्न । परशुना छिन्नवान् । व्यान्तैरधिकार्थवचने इष्यते । कुक्कुटैः संपात्याः कुक्कुटसंपात्या ग्रामाः । अत्यासन्नताकथनम् । क्वचिन्न, काकैः पातव्या नदी । क्वचिदधिकार्थाभावेपि । तुसोपेयम् ।

**भक्ष्यान्नाभ्यां मिश्रणव्यञ्जने** ॥ १ । ३ । ३० ॥ भान्ते मिश्रणव्यञ्जने भक्ष्यान्नवाचिभ्यां सह यथाक्रमं समस्येते स च षसो भवति । गुडेन मिश्राः पृथुका गुडपृथुकाः । घृतेनोपसिक्त ओदनो घृतौदनः । मिश्रणादिक्रियाया वृत्तावेवान्तर्भावादप्रयोग. ।

**अप्तदर्थार्थबलिहितसुखरक्षितैः** ॥ १ । ३ । ३१ ॥ अबन्तं सुबन्तमबन्तार्थेनार्थादिभिश्च सुबन्तैः सह समस्यते स च षसो

भवति। तदर्थेन प्रकृत्या सहैव विकृतिः समस्यते। कुण्डलाय हिरण्यं कुण्डलहिरण्यम्। नेह— अवहननायोदूखलम्। अस्मादेव ज्ञापकात्तादर्थ्येऽप् सिद्धा। अश्वघासादिषु तु तासः। अर्थशब्देन नित्यं वृत्तिः। मात्रे इदं मात्रर्थम्। आतुरार्था यवागूः। आतुरार्थः सूपः। त्रिलिङ्गतास्य, लिङ्गस्य लोकाश्रयत्वात्। देवबलिः। अश्वहितम्। हितयोगे इदमेवापो ज्ञापकम्। गोसुखम्। गोरक्षितम्।

का भीभिः॥ १।३।३२॥ कान्तस्य सुबन्तस्य भीतादिभिः सुबन्तैः सह षसो भवति। वृकेभ्यो भीः वृकभीः। वृकभयम्। वृकभीतः। केति विभागेन परेभ्यस्त्रायन्ते परत्रा इत्यपि।

मुक्ताऽपेताऽपोढपतिताऽपत्रस्तैः प्रायः॥ १। ३। ३३॥ एतैः सह कान्तस्य प्रायः षसो भवति। भवान्मुक्तो भवमुक्तः। पापापेतः। सुखापोढः। स्वर्गपतितः। तरङ्गापत्रस्तः। प्रायोग्रहणात्कचिन्न, प्रासादात्पतितः।

स्तोकान्तिकदूरार्थकृच्छ्रं क्तेन॥ १। ३। ३४॥ स्तोकाद्यर्थाः कृच्छ्रशब्दश्चैतेषां कान्तानां क्तान्तेन सह षसो भवति। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्यासादागतः। दूरादागतः। कृच्छ्राल्लब्धः। कायाः स्तोकादेरित्युब् वक्ष्यते।

ता॥ १। ३। ७०॥ तान्तस्य सुबन्तैः सह षसो भवति। स्वर्गस्य सुखं स्वर्गसुखम्। मोक्षमार्गः।

कृति॥ १। ३। ७१॥ कृत्प्रयोगे या ता तदन्तस्य सुपा सह

पसो भवति । न प्रतिपदमित्यस्य पुरस्तान्निरासोयम् । इध्मव्रश्चनः । श्मश्रुकर्तनः । 'कर्तृकर्मणोरि'ति ता ।

याजकादिभिः ॥ १ । ३ । ७२ ॥ याजकादिभिश्च सह तान्तस्य पसो भवति । कृतीति प्राप्तस्य 'तृजकाभ्यामि'ति निषेधे प्रतिप्रसवोयम् । देवयाजकः । याजक, पूजक, परिचारक, परिवेषक, स्नापक, अध्यापक, उद्वर्तक, उत्सादक, होतृ, भर्तृ, रथगणक, पत्तिगणक इति ।

न प्रतिपदम् ॥ १ । ३ । ७३ ॥ ज्ञोऽस्वार्थे इत्यादिसूत्रैः प्रतिपदं विहिता या ता तदन्तं न समस्यते । सर्पिषो ज्ञानम् । सर्पिषो दयनम् । इत्यादि । अत्रापि शेषे ता तु समस्यत एव ।

निर्धारणे ॥ १ । ३ । ७४ ॥ निर्धारणे या ता तदन्तं न समस्यते । मनुष्याणां क्षत्रियः शूरतमः ।

डङ्गुणतृप्तार्थसत्तव्यैकद्रव्यैः॥ १ । ३ । ७५ ॥ डडिति तस्य पूरणे डडित्यतः प्रभृति तमटष्टकारेण प्रत्याहारः । डङन्तगुणार्थतृप्तार्थसत्संज्ञकतव्यएकद्रव्य इत्येतैः सह तान्तं न समस्यते । पूरणार्थैः, चक्रधराणां पञ्चमः । अत्र समुदायसमुदायिसम्बन्धे शेषे ता । गुणार्थैः, बलाकायाः शौक्ल्यम् । यो लोकप्रसिद्धः सन् गुणद्वारेण पूर्वं द्रव्ये वृत्तो भवन्भावत्यान्तो गुणमाह सोऽत्र गुणो, न सर्वदा गुणवचनं, पररूपमिति ज्ञापनात् । तेन चन्दनगन्धः । इह न पूर्वं द्रव्ये वृत्तिः । लोकप्रसिद्ध इति किम् ? सूत्रलाघवम् । वचनप्रामाण्यम् । तृप्तार्थैः, फलानां तृप्तः ।

सक्तूनां पूर्णः। शतृशानौ सदिति सत्संज्ञा वक्ष्यते। चौरस्य द्विषन्। देवदत्तस्य कुर्वन् कुर्वाणो वा । तव्येन, देवदत्तस्य कर्तव्यम्। तव्येन केचिद्विकल्पमिच्छन्ति। एकं द्रव्यमस्य तदेकद्रव्यम्। तेन, आचार्यस्य श्रीदत्तस्य। एकद्रव्येण गुणगुणिविवक्षा नास्तीति विशेषणवृत्तिरपि न। क्विना प्रतिषेधो वक्तव्यः*। देवदत्तस्य कृत्वा। देवदत्तस्योपरि।

कर्मणि च ॥ १। ३। ७६॥ द्विप्राप्तौ कर्मण्येव या ता तदन्तं न समस्यते। आश्चर्यो गवां दोहोऽगोपेन। कर्मण्येवेति किम्? इध्मव्रश्चनः।

कर्तरि क्तेन ॥ १। ३। ७७॥ कर्तरि कर्मणि च या ता तदन्तं क्तान्तेन सह न समस्यते। इदमेषामासितम्। एवं राज्ञा मतो बुद्धः पूजितो वा। इदमोदनस्य भुक्तम्। छात्रहसितमित्यत्र तु शेषे ता।

तृजकाभ्यां योगे ॥ १। ३। ७८॥ कर्तरि या ता तदन्तं न समस्यते तृजकाभ्यां योगे। तृज्ग्रहणमुत्तरार्थं, तद्योगे तेनोक्तत्वात्कर्तरि ताया असम्भवात्। भवत आसिका। कर्तरीति किम्? इक्षुभक्षिका।

कर्तरि ॥ १। ३। ७९॥ कर्तरि यौ तृजकौ ताभ्यां सह तान्तं न समस्यते। अपां स्रष्टा। सक्तूनां पायकः। कथं तर्हि तीर्थकर्तारमर्हन्तमिति? तृजन्तत्वेन साधनं कृतेत्यत्र बहुलग्रहणात् साध्यम्।

कर्मादाजीविकयोर्नित्यम् ॥ १। ३। ८०॥ आरम्भ-

त्वाद्युजिह नानुवर्तते । नेति निवृत्तम् । क्रीडायां जीविकायां च तान्तस्याकेन सह नित्यं षसो भवति । क्रीडायाम्, उद्दालकपुष्पभञ्जिका । जीविकायां, नखलेखकः । क्रीडायां, कृतीति विकल्पे जीविकायां कर्तरीति निषेधे च प्राप्ते वचनम् ।

काला मेयैः ॥ १ । ३ । ६७ ॥ कालवाचिनां शब्दानां परिच्छेद्यैः सुबन्तैः सह षसो भवति । संवत्सरो जातस्य यस्य स संवत्सरजातः । तासापवादोऽयम् । काला इति बहुत्वनिर्देशाद्विपदस्यापि षसार्थः । द्वे अहनी जातस्य यस्येति द्व्यहजातः । अह्नोऽह्न इति वक्ष्यतेऽह्नादेशः । यदा द्वयोरह्नोः समाहार इति विग्रहस्तदा 'न समाहार' इति प्रतिषेधाद् द्व्यहः । द्व्यहो जातस्य यस्य स द्व्यहजातः ।

ईप् शौण्डैः ॥ १ । ३ । ३५ ॥ ईबन्तस्य शौण्डादिभिः सह षसो भवति । अक्षेषु शौण्डोऽक्षशौण्डः । शौण्ड, धूर्त, कितव, व्याड, प्रवीण, संवीत, वीर, अन्तर, अधि, पण्डित, कुशल, चपल, निपुण, इत्येवम् । अधिना यदोत्तरपदार्थप्राधान्यं तदा षसः । अषडक्षेति खः सान्तो वक्ष्यते । राजाधीनम् । यदा तु पूर्वपदार्थप्राधान्यं विभक्त्यर्थश्च तदा हसः । अधिराजम् ।

सिद्धशुष्कपक्वबन्धैः ॥ १ । ३ । ३६ ॥ एतैरीबन्तस्य षसो भवति । काम्पिल्यसिद्धः । छायाशुष्कः । कुम्भीपक्वः । चारकबन्धः ।

ऋणे त्यैः ॥ १ । ३ । ३७ ॥ ईबन्तस्य त्यान्तैः सह षसो भवति ऋणे गम्ये । मासदेयम् ऋणम् । नियोगतः कार्यमृणम् ।

तेनेहापि—पूर्वाह्णेऽध्येयम् प्रातरध्येयम्। ऋणे इति किम्? मासे देया भिक्षा।

खौ ॥ १। ३। ३८॥ ईबन्तस्य सुबन्तेन सह नित्यं पसो भवति खौ। वनेहरिद्रका। कूपेपिशाचिका। ईपोऽद्धलादनुप्।

क्तेनाहोरात्रभेदाः ॥ १। ३। ३९॥ ईबन्तानामह्नो रात्रेश्चावयवानां क्तान्तेन सह पसो भवति। पूर्वाह्णकृतम्। अपररात्रकृतम्। अवयवा इति किम्? एतत्तु ते दिवा नृत्तं रात्रौ नृत्तं तु द्रक्ष्यसि।

तत्र ॥ १। ३। ४०॥ तत्रेत्येतस्य क्तान्तेन सह पसो भवति। तत्रपीतम्।

क्षेपे ॥ १। ३। ४१॥ ईबन्तस्य क्तान्तेन सह पसो भवति क्षेपे गम्ये। कृद्ग्रहणे तिकारकपूर्वस्यापि। एतत्कार्येण्वनवस्थितत्वम्। तवेदमित्यर्थः। पे कृति बहुलमित्यनुप्।

ध्वांक्षैः ॥ १। ३। ४२॥ ध्वांक्षवाचिभिः सहेबन्तस्य सुबन्तस्य पसो भवति क्षेपे गम्ये। तीर्थे ध्वांक्ष इव तीर्थध्वांक्षः। वृत्ताविवार्थस्यान्तर्भावः। ध्वांक्षैरिति बहुत्वनिर्देशात्तत्सदृशैरपीति केचित्। तेन तीर्थश्वा। तीर्थशृगालः। क्षेपे किम्? तीर्थे ध्वांक्षो वास्यते।

पात्रेसमितादयश्च ॥ १। ३। ४३॥ एते गणपाठादेव निपातिताः पससंज्ञा भवन्ति क्षेपे। पात्रेसमिताः। पे कृति बहुलम्। भोजनसमये एवैकनिता न तु कचित्कार्ये इति क्षेपः। पात्रेबहुलाः। उदुम्बरमशकाः। इवार्थोऽत्रान्तर्भूतः। चकारोऽवधारणार्थः, तेन पात्रेसमितादय एव, न पुनर्वृत्त्यन्तरं लभन्ते ते। परमाः पात्रेसमिताः।

**पूर्वकालैकसर्वजरत्पुराणनवकेवलं यश्चैकाश्रये ॥ १।३।४४ ॥** एतेषां सुबन्तानां सुबन्तेन सह यसंज्ञः षसंज्ञश्च सो भवति समानाधिकरणे। पूर्वः कालोऽस्य तत् पूर्वकालम्। पूर्वं छिन्नं पश्चात्प्ररूढमिति छिन्नप्ररूढम्। एवं स्नातानुलिप्ताः। एकचर्या। सर्वपदार्थाः। जरद्धस्ती। पुराणशास्त्रम्। नवान्नम्। केवलमसहायम्। केवलज्ञानम्। विशेषणवृत्तेरयं प्रपञ्चः पूर्वनिपातनियमार्थः। एकाश्रये इति किम्? एकस्याः शाटी।

**दिक्संख्यं खौ॥ १।३।४५ ॥** दिग्वाचिनः संख्यावाचिनश्च सुबन्तस्य सुबन्तेन सह खुविषये एव षसो भवत्येकाश्रये। दक्षिणपञ्चालाः। सप्तर्षयः। खाविति किम्? दक्षिणा ग्रामाः। पञ्च ग्रामाः।

**हृदर्थद्युसमाहारे॥ १।३।४६ ॥** हृदर्थविषये, द्यौ परतः, समाहारे चाभिधेये दिक्संख्ययोः सुबन्तेन सह षसो भवत्येकाश्रये। अपरस्यां शालायां भवः, अत्र षसे कृते दिगादेरखाविति समुदायाण्णः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। आपरशालः। पूर्वा शाला प्रिया यस्य (इति त्रिपदे बसे प्रियाशब्दे उत्तरपदे पूर्वयोः षः, तेन स्त्रियाः पुंवदिति पूर्वस्य पुंवत्।) पूर्वशालाप्रियः। दिशां समाहारो नास्त्यनभिधानात्।

**संख्यादी रश्च ॥ १।३।४७ ॥** हृदर्थेत्यत्रोक्तः संख्यादिर्यः सः स रसंज्ञो भवति चात्षसंज्ञश्च। हृदर्थे, द्व्यनुयोगौ वेत्त्यधीते वेत्यर्थे कृतस्याणो 'रस्योबनपत्ये' इत्युप्। द्व्यनुयोगः। द्यौ, पञ्च नावः प्रिया यस्येति विग्रहे,

**सन्महत्परमोत्तमोत्कृष्टं पूज्येन** ॥ १ । ३ । ५६ ॥ एते पूज्यवाचिना सह समस्यन्ते स च षसो भवत्येकाश्रये । सत्पुरुषः ।

**आन्महतो जातीये च** ॥ ४ । ३ । १५८ ॥ महत आकारादेशो भवति जातीये एकार्थे घौ च परतः । महापुरुषः । महाजातीयः । एकाश्रये किम्? महत्याः पुत्रः महत्पुत्रः । अत्र पुंवद्धेत्यत्र पुंवदिति योगविभागात्पुंवत् । आदिति योगो विभज्यते । तेन महाघासः । महाकारः । सन्महदिति प्रतिपदोक्तत्वेनैव सिद्धे, एकार्थानुवर्तने षसेपि प्रापणार्थश्च । महाबाहुः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः । पूज्येन किम्? उत्कृष्टो गौः, कर्दमादुद्धृत इत्यर्थः ।

**वृन्दारकनागकुञ्जरैस्तत्** ॥ १ । ३ । ५७ ॥ पूज्यवाचिनो वृन्दारकादिभिः सह षसो भवत्येकाश्रये । गोवृन्दारकः । पुन्नागः । गोकुञ्जरः । तदिति किम् ? सुशीमो नागः ।

**कतरकतमौ समर्थौ** ॥ १ । ३ । ५८ ॥ जातिप्रश्ने प्रयुक्तयोरेतयोः सुपा सह षसो भवत्येकाश्रये । कतरगार्ग्यः । कतमगार्ग्यः । वृद्धं च चरणैः सहेति जातिसंज्ञा ।

**क्षेपे किम्** ॥ १ । ३ । ५९ ॥ यो हि यदर्थस्तस्य तदर्थाननुष्ठानं क्षेपः क्षेपार्थस्य किंशब्दस्य सुपा सह षसो भवत्येकाश्रये । को नाम राजा किंराजा, नश्यन्तं यो न रक्षति । एवं किंसखा । किमिति योगविभागः । तेन संज्ञायां शुकादिभिः सह षसो भवति । किंशुकः । किंवदन्ती ।

**पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृ-**

**श्रोत्रियाध्यापकधूर्तैर्जातिः** ॥ १ । ३ । ६० ॥ पोटादिभिः सह जातिः समस्यते स च पसो भवत्येकाश्रये । विशेषणस्य परनिपातार्थ आरम्भः ।

**पुंवद्यजातीयदेशीये** ॥ ४ । ३ । १५४ ॥ उक्तपुंस्कादनूः स्त्री पुंवद्भवति यसंज्ञके से स्त्रीलिङ्गे यौ, जातीयदेशीययोश्च परतः। यसे स्त्र्युक्तपुंस्कादिति वक्ष्यते, ततः सिद्धे जातीयदेशीययोस्तु तसादौ पाठादिति तर्हि प्रतिषेधनिवृत्त्यर्थ आरम्भः । डद्प्रियादौ वसे प्रतिषेत्स्यमानोपि पुंवद्भावो यसे विधीयते। कल्याणपञ्चमी। कल्याणप्रिया । कल्याणमनोज्ञा । 'न वुद्वत्कोङ' इत्यादिना च प्रतिषेत्स्यमानः पुंवद्भावो यसे विधीयते । पाचकवृन्दारिका। डद्त्वोरिति च, पञ्चमवृन्दारिका। दत्तवृन्दारिका। 'ञिणद्वृदरक्तविकारे' इति च, औरसवृन्दारिका। अमानिनीत्स्वाङ्गादिति च, दीर्घकेशवृन्दारिका। जातिश्चेति च, कठवृन्दारिका । एवं पाचकजातीया । पाचकदेशीया । उक्तपुंस्कादिति किम्? मालावृन्दारिका । अनूरिति किम्? वामोरूभार्या । इभपोटा। क्षत्रिययुवतिः । स्तोककतिपयावेकार्थे । अग्निस्तोकम् । दधिकतिपयम् । सकृत्प्रसूता गृष्टिः । गोगृष्टिः । अभिनवप्रसवा धेनुः । गोधेनुः । वशा वन्ध्या । गोवशा । वेहद् गर्भपातिनी । गर्भधारिणीत्यन्ये । गोवेहत्। महता वत्सेन या दुह्यते सा बष्कयणी । गोबष्कयणी । प्रवक्ता उपाध्यायः । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । धूर्तो बुद्धिमान् । कठधूर्तः ।

(१) पोटा स्त्री पुंसलक्षणा । इभपोटा अल्पवयस्का हस्तिनी ।

नञ् ॥ १ । ३ । ६८ ॥ नञ् सुपा सह समस्यते ।

नञोऽन् ॥ ४ । ३ । १८१ ॥ नञः अनित्ययमादेशो भवति घौ । अनेकाल्त्वात्सर्वादेशः । स्थानिवद्भावेन पदत्वाश्रलम् । न हिंसा अहिंसा । घावित्येव, । न भुङ्क्ते । क्षेपे मिङ्युपसंख्यानम् *। अकरोषि जाल्म ।

अचि ॥ ४ । ३ । १८२ ॥ अजादौ च घौ नञोन् भवति। पुनर्वचनं नखनिवृत्त्यर्थम् । अनादिः । अदोऽनञे इति ज्ञापकान्न त्र रुमुट् । उत्तरपदार्थप्रधानेयं वृत्तिः । अन्यपदार्थप्रधानापि क चित् । पूर्वपदार्थप्राधान्ये तु अर्थाभावे हसः । अमक्षिकम् ।

नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकनागाः ॥ ४ । ३ । १८३ ॥ एते निपात्यन्ते । न भ्राजते, नभ्राट् । न पाति, नपात् । न वेत्ति, नवेदाः । न असत्या, नासत्या । न मुञ्चतीति नमुचि । नास्य कुलमस्ति, नकुलम् । नास्य खमस्ति, नखः । न स्त्री न पुमानिति नपुंसकः । स्त्रीपुंसयोः पुंसकभाव. । न क्षरति क्षीयते वा नक्षत्रम्। अत्र क्षत्रमिति निपात्यते । न क्रीडति क्रामति वा, नक्रः । न अक्रः, नाक. । न अग., नाग. । अथवा नास्मिन्कं दु.खमस्तीति नाकः । न गच्छतीति नागः ।

एकान्नः ॥ ४ । ३ । १८४ ॥ एतन्निपात्यते घौ । एकेन न विंशतिः एकान्नविंशतिः । अत्र नञो विंशतिशब्देन साधनं कृतेति बहुलवचनाद्, भेति योगविभागाद्वान्तस्यैकशब्दस्य च नविंशतिशब्देन षसे एकस्यात् नञः प्रकृतिभावश्च निपात्यते ।

**नगो वाऽजीवे ॥ ४ । ३ । १८५ ॥** नग इति वा निपात्यते अजीवेर्थे । नगः अगो वा पर्वतो वृक्षो वा । अजीवे किम् ? अगो देवदत्तः शीतेन ।

**गुणोक्तयेपत् ॥ १ । ३ । ६९ ॥** ईषच्छब्दस्य गुणशब्देन सह पसो भवति । ईषत्कडारः । ईषदुन्नतः ।

**तिकुप्रादयः ॥ १ । ३ । ८१ ॥** क्रीडेत्यतो नित्यमनुवर्तते । तिसंज्ञाः कुशब्दः प्रादयश्च समर्थेन सह नित्यं माग्वद् भवन्ति ।

**ति ॥ १ । २ । १३० ॥** प्रादयः क्रियायोगे तिसंज्ञाश्च भवन्ति । अधिकारो लक्षणं च । अभिषिच्य ।

**च्विडाजूर्यादिः ॥ १ । २ । १३१ ॥** च्व्यन्ता डाजन्ता ऊरीप्रभृतयश्च क्रियायोगे तिसंज्ञा भवन्ति । शुक्लीकृत्य । पटपटाकृत्य । कृभ्वस्तियोगे च्विडाचोर्विधानादूर्यादयोपि कृभ्वस्तियोगे एव तिसंज्ञा स्यु । ऊरीभूय । आविर्भूय । करोतियोगे साक्षादादौ पाठात्तिसंज्ञाविकल्प । आविष्कृत्य, आविष्कृत्वा ।

**अनितावनुकरणम् ॥ १ । २ । १३२ ॥** अनुक्रियते अनेन तत्तिसंज्ञं भवति क्रियायोगे, न त्वितौ परत । पटत्कृत्य । अनिताविति किम् ? खाडिति कृत्वा निरष्ठीवत् ।

**सदादरानादरयोः ॥ १ । २ । १३३ ॥** आदरानादरयोरर्थयोर्वर्तमानः सच्छब्दस्तिसंज्ञो भवति । आदरे, सत्कृत्य । तदन्तविधिरत्र । परमसत्कृत्य । अनादरे, असत्कृत्य । आदरानादरयोरिति किम् ? सत्कृत्वा गतः । विद्यमान कृत्वेत्यर्थः ।

जातिरिति किम्? देवदत्त प्रवक्ता ।

**चतुष्पाद्गर्भिण्या: । १ । ३ । ६१ ॥** चतुष्पाज्जातेर्गर्भिणीशब्देन सह षसो भवत्येकाश्रये । अजगर्भिणी । चतुष्पादिति किम्? ब्राह्मणी गर्भिणी ।

**प्रशंसोक्त्या ॥ १ । ३ । ६२ ॥** प्रशसावाचिना सह जात्या षसो भवत्येकाश्रये । अश्वप्रकाण्डम् । अश्वमतल्लिका । अश्वमचर्चिका । अश्वकुमारी । अश्वतल्लज । अश्वोद्घ । प्रशस्तोऽश्व इत्यर्थ । प्रकाण्डादयो नियतलिङ्गा । जातिरित्येव देवदत्ता कुमारी ।

**युवा खलतिपलितवलिनजरद्भिः ॥ १ । ३ । ६३ ॥** एकाश्रयैरेभिर्युवशब्दस्य षसो भवति । युवा खलति युवखलति । युवपलित । युववलिन । युवजरन् । मृद्ग्रहणे लिङ्गविशिष्टस्यापि । युवति खलती युवखलती ।

**व्यतुल्याख्या अजात्या ॥ १ । ३ । ६४ ॥** व्यान्तास्तुल्याख्याश्च अजातिवाचिना सह प्राग्वद् भवन्त्येकाश्रये । पानीयशीतम् । तुल्यश्वेत । सदृशमहान् । अजात्या किम्? भोज्य ओदन । तुल्यो वैश्य । निषेधसामर्थ्याद्विशेषणसोपि न । सारङ्गादिशब्दा यदि जातिवचनास्तदा जाति कथञ्चिद्व्याद्भिन्नेति विशेषणस । कृष्णसारङ्ग । लोहितसारङ्ग । अथ पूर्वोत्तरपदयोर्वर्णविशेषवाचित्व तदेच्छया विशेषणविशेष्यभावक स । कृष्णसारङ्ग । सारङ्गकृष्ण ।

---

(१) पूर्वत्र रोग इत्यत्र सप्तम्यर्थे प्रथमाया प्रयोग ।

**कुमारः श्रमणादिभिः ॥ १ । ३ । ६५ ॥** श्रमणादिभिः सह कुमारशब्द प्राग्वद् भवत्येकाश्रये । इह गणे स्त्रीलिङ्गा अपि पठ्यन्ते इति मृद्ग्रहणे लिङ्गविशिष्टस्यापीति ज्ञापकमेतत् । कुमारी श्रमणा कुमारश्रमणा । एवं कुमारगर्भिणी । कुमारः अध्यापकः कुमाराध्यापकः ।

**मयूरव्यंसकादयश्च ॥ १ । ३ । ६६ ॥** एते निपात्यन्ते एकाश्रये । व्यंसको मयूरो मयूरव्यंसकः । उदक्चावाक्च उच्चावचम् । उच्चनीचम् । आचितं चोपचितं च आचोपचम् । निश्चप्रचम् । अकिञ्चनः । स्नात्वाकालक । जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति (ग.) । कर्मणा सह जहीत्येतस्य बहुलं घसो भवति आभीक्ष्ण्येऽर्थे तेन चेत्कर्ताभिधीयते। जोडं जहीत्याह जहिजोड । जहिस्तम्बः । बहुलमिति किम्? पचौदनम् । आख्यातमाख्यातेन सातत्ये (ग.) । अश्नीत पिबतेति यत्र सततमभिधीयते सा क्रिया अश्नीतपिबता । खादत-मोदता । एहीडमादयोऽन्यपदार्थे (ग.) । एहीड इति यस्मि-न्कर्मणि तदेहीडम् । एहि यवैरिति यस्मिन्कर्मणि तदेहियवम् । उद्धरोत्सृजा । उद्धमविधमा । उत्पतनिपता । असातत्यार्थमिदं वचनम् । आकृतिगणोऽयम् । ततोऽविहितलक्षण सविधिरिह द्रष्टव्य ।शाकप्रधान पार्थिव शाकपार्थिव. । इह मध्यमपद-स्य खम् । एव द्रव्यान्तरम् । अन्यद्द्रव्यमित्यर्थ । चकारान्नेह धृत्यन्तरम् । परमो मयूरव्यसक ।

---

(१) व्यसको धूर्त । (२) इह क्रियारूपस्यान्यपदार्थस्य प्राधान्यात् स्त्रीत्वाट्टाप् ।

भूषाऽपरिग्रहेलमन्तः ॥ १ । २ । १३४ ॥ भूषायामपरिग्रहे चार्थे क्रमेण वर्तमानौ अलमन्तःशब्दौ तिसंज्ञौ भवतः । अलङ्कृत्य । भूषयित्वेत्यर्थः । अन्तर्हत्य । मध्ये हत्वेत्यर्थः । भूषापरिग्रहे इति किम्? अलङ्कृत्वा । पर्याप्तं कृत्वेत्यर्थः । अन्तर्हत्वा । परिगृह्येत्यर्थः ।

कणेमनः श्रद्धाघाते ॥ १ । २ । १३५ ॥ श्रद्धानिवृत्त्यर्थे वर्तमानौ कणेमनःशब्दौ तिसंज्ञौ भवतः । कणेशब्द ईबन्तप्रतिरूपकोभिलाषातिशये वर्तते । तत्साहचर्यान्मनःशब्दोपि तादृगेव । कणेहत्य भुङ्क्ते । मनोहत्य भुङ्क्ते ।

पुरोस्तं झिः ॥ १ । २ । १३६ ॥ झिसंज्ञौ पुरोस्तंशब्दौ तिसंज्ञौ भवतः । पुरस्कृत्य गतः । अस्तङ्गत्य पुनरुदेति । झिरिति किम्? पूः, पुरौ, पुरः कृत्वा गतः । अस्तं कृत्वा काण्ड गतः ।

गत्यर्थवदेऽच्छः ॥ १ । २ । १३७ ॥ झिसंज्ञोऽच्छशब्दस्तिसंज्ञो भवति गत्यर्थे वदत्यर्थे च परे । अच्छगम्य । अभिमुखं गत्वेत्यर्थ । अच्छोद्य । दृढमुक्त्वेत्यर्थ । झिरित्येव । उदकमच्छं गत्वा ।

अनुपदेशेऽदः ॥ १ । २ । १३८ ॥ अद शब्दस्तिसंज्ञो भवत्यनुपदेशे । अदःकृत्य । अनुपदेशे किम्? अदः कृत्वा गत इति परस्य कथयति ।

---

(१) [illegible] न मुद्गो हार्यं । [illegible] शब्दे । (२) [illegible]

**तिरोऽन्तर्धौ ॥ १। २। १३९ ॥** तिरःशब्दस्तिसंज्ञो भवत्यन्तर्धाने। तिरोभूय। अन्तर्धौ किम्? तिरोभूत्वा। तिर्यग्भूत्वेत्यर्थः।

**वा कृञि ॥ १। २। १४० ॥** तिरस्कृत्य, तिरः कृत्वा वा गतः। अन्तर्धायेव। नेह, तिरः कृत्वा काष्ठं गतः।

**उपाजेऽन्वाजे ॥ १। २। १४१ ॥** ईबन्तप्रतिरूपकावेतौ कृञो योगे वा तिसंज्ञौ भवतः। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा। दुर्बलस्य भग्नस्य वा बलाधानं कृत्वेत्यर्थः।

**साक्षादादिः ॥ १। २। १४२ ॥** साक्षात्प्रभृतीनि कृञि वा तिसंज्ञानि भवन्ति। च्चिडाजूर्यादिरित्यतश्च्विर्मण्डूकप्लुत्यानुवर्तते। तेन च्व्यर्थेयं तिविकल्पः। साक्षात्कृत्य, साक्षात्कृत्वा। यदा च्विः क्रियते तदा च्विडाजूर्यादिरिति नित्यं तिसंज्ञा। अमीप्रभृतय ईबन्तप्रतिरूपका निपातनं वा। अमीकृत्य, अमीं कृत्वा। विकसनेकृत्य, विकसनं कृत्वा। उष्णंकृत्य, उष्णं कृत्वा। मान्तत्वं निपातनात्। आकृतिगणोयम्।

**मनस्युरस्यनत्याधाने ॥ १। २। १४३ ॥** अत्याधानमुपश्लेषः। ईबन्तप्रतिरूपकावेतौ कृञि वा तिसंज्ञौ भवतोऽनत्याधाने। मनसिकृत्य, मनसि कृत्वा। उरसिकृत्य, उरसि कृत्वा। निश्चित्येत्यर्थ। अत्याधाने तु उरसि कृत्वा पाणिं शेते।

**मध्येपदेनिवचने ॥ १। २। १४४ ॥** एकारान्तप्रतिरूपका एते कृञि वा तिसंज्ञा भवन्ति, अनत्याधाने। मध्ये·

कृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेशब्दो वचनाभावेऽर्थे वर्तते । निवचनेकृ य, निवचने कृत्वा । अत्याधाने तु हस्तिनः पदे कृत्वा पाणिमास्ते ।

हस्तेपाणौ स्वीकृतौ तिः ॥ १ । २ । १४५ ॥ हस्तेपाणौशब्दौ कृञि नित्यं तिसंज्ञौ भवतः स्वीकारे । हस्तेकृत्य, पाणौकृत्य । भार्यां कृत्वेत्यर्थः । स्वीकृतौ किम्? कार्षापणं हस्ते कृत्वा गतः ।

प्राध्वं बन्धे ॥ १ । २ । १४६ ॥ प्राध्वमानुकूल्यम् । शिसंज्ञः प्राध्वंशब्दः कृञि तिसंज्ञो भवति, बन्धो निमित्तं चेत् । प्राध्वंकृत्य । बन्धेनानुकूलं कृत्वेत्यर्थ. । बन्धो निमित्तमिति किम्? प्रगतमध्वानं प्राध्वं कृत्वा शकटं गत ।

जीविकोपनिषदाविवे ॥ १ । २ । १४७ ॥ इवार्थे वर्तमानौ जीविकोपनिषच्छब्दौ कृञि तिसंज्ञौ भवतः । जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । इवार्थे किम्? जीविकां कृत्वा ।

प्रादिसाहचर्यात् कुशब्दोऽत्र शिसंज्ञ' । कुत्सितो ब्राह्मणः कुब्राह्मण । अक्रियायोगार्थं प्रादिग्रहणम् । स्वती पूजार्थे । शोभनः पुरुष', सुपुरुष । सुस्तुतम् । अतिपुरुष. । दु' पापार्थे । पाप' पुरुषो, दुष्पुरुष । कृच्छ्रेण कृत दुष्कृतम् । आङीषदर्थे । ईषत्कडार आकडार । प्रादयो गतार्थे यथा (ग.)। प्रगत आचार्य' प्राचार्य' । एवं प्रवृद्धो गुरु' प्रगुरु । प्रपितामहः । अत्यादयः क्रान्तार्थे इपा ( ग.)।अतिक्रान्त' सङ्ग्राम-

तिलट्वः। उत्क्रान्तो वेलामुद्वेलः। अवादयः क्रुष्टाद्यर्थे भया (ग.)। अवक्रुष्टः कोकिलया अवकोकिलः। परिणद्धो वीरुद्भिः परिवीरुत्। पर्यादयो ग्लानाद्यर्थे अपा(ग.)। अध्ययनाय परिग्लानः पर्यध्ययन.। उद्युक्तः संग्रामाय उत्संग्रामः। निरादयः क्रान्ताद्यर्थे कया(ग.)। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। अपगतः शालाया अपशालः। लक्षणादिषु न वृत्तिरीत्विधेर्वैयर्थ्यापत्तेः। वृक्षं प्रति।

ईषात्र वाक्॥ २। १। ७९॥ अत्र षोरधिकारे कर्मण्यणित्यादि ईषा निर्दिष्टं वाक्संज्ञं भवति।

वागमिङ्॥ १। ३। ८२॥ वाक्संज्ञस्य समर्थेन नित्यं षसो भवति। अमिङन्तेनायं सः। कुम्भं करोतीति कुम्भकारः। अमिङिति किम्? एधानाहारको व्रजति। तुमुण्मो क्रियायां तदर्थायामित्यत्र वाक्संज्ञं मिङन्तं वक्ष्यते। अमिङिति प्रतिषेधो ज्ञापकोऽनयोर्योगयोः सुप्सुपेति नाभिसम्बध्यते। एवं च तिवाक्कारकाणां प्राक् सुबुत्पत्तेः कृद्भिः सविधिरिति लब्धम्। तेन माषवापिणी। असत्यस्मिन् मृदन्तस्येति णत्वं न स्यात्, स्त्रीत्वेन सुबुत्पत्तेर्बाधे मृदन्तत्वाभावात्। एवमश्वक्रीती।

(१) व्याप्त शब्दमयी वा।

(२) 'तिकुप्रादय' इति सूत्रे तीति योगविभागेन तदैकार्थ्येन, प्रकृतसूत्रस्यामिङिति प्रतिषेधेन, कारकांशे त्वेकदेशानुमत्या सिद्धान्तेय परिभाषया तिवाक्कारकाणां प्राक् सुबुत्पत्तेः कृद्भिः सह सविधिरिति। अन्यथा क्रीतादीनां सुबन्तापेक्षयान्तरङ्गत्वाच्छिन्नबोधकेऽपि नत्र सेऽन्तत्वाभावेन क्रीतात्करणादे इत्यादीनामप्रवृत्त्याऽश्वक्रीतीत्यादेरसिद्धिः स्पष्टैव। तत्रापि सुबुत्पत्तेरित्यस्य स्त्रीत्यस्य पक्ष्याग बोध्यम्। अन्यथा पदद्वयापेक्षस्य ततोऽप्यन्तरङ्गत्वादेकपदाश्रितत्वेन टाप् दुर्वार. स्यात्।

ञिनाऽमैव ॥ १ । ३ । ८३ ॥ पूर्वेण सिद्धे नियमार्थोऽयम् । अमैव यत्सह निर्दिष्टं वाक्संज्ञं तदेव ञिसंज्ञेन सह प्राग्वद् भवति । लवणङ्कारम् । नेह, कालः समयो वेला वा भोक्तुम् । 'कालसमयवेलासु तुम्वे'ति तुम् । आरम्भादेव सिद्धे नियमे एवकारः किम्? अमान्येन च यत्सह निर्दिष्टं तस्य मा भूत् । अग्रे भोजम्, अग्रे भुक्त्वा । 'वाग्रेप्रथमपूर्वे' इति क्त्वाणमौ ।

वा भादि ॥ १ । ३ । ८४ ॥ 'उपदंशो भायामि'तिप्रभृति यावत्संज्ञममा सह वा समस्यते । मूलकोपदंशं भुङ्क्ते मूलकेनोपदंशं वा । अमन्तेनेत्येव । पर्याप्तो भोक्तुम् । एवेति नानुवर्तते । तेन भादिषु यदमा सह निर्दिष्टममा चान्येन च सह निर्दिष्टं तत्सर्वं वा समस्यते । उच्चैःकारम्, उच्चैः कारम्, उच्चैः कृत्वा ।

• क्त्वा ॥ १ । ३ । ८५ ॥ क्त्वान्तेन सह भादि वा प्राग्वद् भवति । अलङ्कृत्य, अलङ्कृत्वा वाचष्टे । भादीत्येव । प्रदेशान्तरवाचो श्रुतिर्न स्यात् । अलङ्कृत्वा ।

गेरध्वनः ॥ ४ । २ । ८७ ॥ गिसंज्ञकेभ्यः परादध्वशब्दादन्त्यः सान्तो भवति । 'नोपुंस' इति टिखे प्रगतोऽध्वानं प्राध्वो रथः ।

षेऽङ्गुलेर्ञिसंख्यादेः ॥ ४ । २ । ८८ ॥ ञिसंख्यादेरङ्गुलिशब्दादः सान्तो भवति षे । अतिक्रान्तमङ्गुलीरत्यङ्गुलम् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् । द्वे अङ्गुली प्रमाणमस्य द्वयोरङ्गुल्योः समाहारो वा द्व्यङ्गुलम् । चतुरङ्गुलम् ।

**अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ४ । २ । ८९॥** एभ्यः पराज्जिसंख्यादेश्च रात्रिशब्दादो भवति षसे । अहश्च रात्रिश्च अहोरात्रम् । अत्र षस्यासंभवाद् द्वन्द्व एव । सर्वा रात्रिः सर्वरात्रः । पूर्वा रात्रिः पूर्वरात्रः। रात्र्येकदेशे रात्रिशब्दोत्र । पूर्वकालैकेति षः । संख्यातरात्रः । पुण्यरात्रः । नीरात्रः । द्विरात्रः।

**राजाहःसखिभ्यष्टः ॥ ४ । २ । ९३ ॥** एतदन्तात्षाट्टो भवति । देवराजः । राजसखः । अतिराजी । नान्तलक्षणान्डीविधेः परत्वादनेन टः । मृद्ग्रहणे लिङ्गविशिष्टस्यापीत्यस्यानित्यत्वान्नेह, मद्राणां राज्ञी मद्रराज्ञी । न समाहारे इत्यनेनाह्लादेशप्रतिषेधे,

**टखोरेवाह्नः ॥ ४ । ४ । १२१ ॥** अह्नष्टेः खं भवति, टखोरेव नान्यत्र । द्व्यहः । द्वे अहनी भूतो द्व्यहीनः । ह्नदर्थे रसः । 'समायाः ख' इत्यधिकारे 'रात्र्यहःसंवत्सरादि'ति खः । आरम्भादेव सिद्धे नियमे इष्टतोवधारणार्थ एवकारः । अह्न एव इति न स्यादतः । तेन मद्रराजः ।

**एभ्योऽह्नोऽह्नः ॥ ४ । २ । ९० ॥** सर्वादिभ्यः परस्य ञ्जिसंख्यादेश्चाहन्शब्दस्याह्न इत्यादेशो भवति सान्ते । अतोह्न इति णत्वम् । टखोरेवेति टिखे प्राप्ते वचनम् । असम्भवादहःपूर्वत्वं नाश्रीयते । सर्वाह्णः । उत्तराह्णः । संख्याताहः । निरह्वी कथा । अष्टस्वहस्सु भवा अष्टाह्वी पूजा । अत्र ह्नदर्थे रसे कृते भवार्थे आगतस्याणः 'रस्योभनपत्ये' इत्युप् । द्यौ रसे संख्यादिः, द्वे अहनी जातस्य द्व्यह्नजातः ।

**न समाहारे ॥ ४ । २ । ९१ ॥** समाहारलक्षणे षसे अहन्शब्दस्याह्वादेशो न भवति । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः । प्रतिपदस्य हृद्यर्थेति विहितस्य समाहारस्येह ग्रहणं न तु प्रादिलक्षणस्य । तेन सङ्गतान्यहानि समह्नः । समाहारे इति किम्? द्वयोरह्नोर्भव उत्सवो द्व्यह्नः ।

**पुण्यैकाभ्याम् ॥ ४ । २ । ९२ ॥** आभ्यां परस्याहन्शब्दस्याह्वादेशो न भवति । पुण्याहम् । एकाहम् ।

**गोरहृदुपि ॥ ४ । २ ९४ ॥** गोशब्दाट्टो भवति षसे, न तु हृदुपि । पञ्चानां गवां समाहारः पञ्चगवम् । महागवी । अतिगवी । पञ्चगवधनः । अहृदुपि किम्? पञ्चभिर्गोभिः क्रीतः पञ्चगु.। क्रीतार्थे आर्हीयठणो 'राद्वखावि'स्युप् । अत्रान्तरङ्गत्वाप्रागेव सान्तो भविष्यतीति न, अनुपीति विषयनिर्देशात् । उपीति किम्? पञ्चगवरूप्यम् ।

**उरसोऽग्रे ॥ ४ । २ । ९५ ॥** अग्रे (प्रधाने)र्थे वर्तमानो य उर शब्दस्तदन्तात्षाट्टो भवति । हस्तिनामुर इव हस्त्युरसम् - प्रधान इत्यर्थ । अग्रे इति किम्? पुरुषोरः ।

**सरोऽनोऽश्माऽयसः खुजात्योः ॥ ४ । २ । ९६ ॥** एतदन्तात्षाट्टो भवति खुविषये जातौ च । क्रमेण—जलसरसम् । मण्डूकसरसम् । महानसम् । उपानसम् । स्थूलाश्म. । कनकाश्म. । लोहितायसः । कालायसम् । खुजात्योरिति किम्? परमसरः ।

**ग्रामकौटाभ्यां तक्ष्णः ॥ ४ । २ । ९७ ॥** आभ्यां परो यस्तक्षन्शब्दस्तदन्तात्षाट्टो भवति । ग्रामस्य तक्षा, ग्रामतक्षः ।

साधारण इत्यर्थः । कुट्यां भवः कौटः । कौटश्चासौ तक्षा, कौटतक्षः । स्वायत्तकर्मजीवीत्यर्थः ।

शुनोऽतेः ॥ ४ । २ । ९८ ॥ अतिश्वो नीचजनः ।

उपमानात् ॥ ४ । २ । ९९ ॥ उपमानात्परो यः श्वन्शब्दस्तदन्तात्पाट्टो भवति । व्याघ्र इव श्वा, व्याघ्रश्वः । मयूरव्यसकादित्वात्सः ।

अजीवे ॥ ४ । २ । १०० ॥ अजीवेऽर्थे वर्तमानो य उपमानवाची श्वन्शब्दस्तदन्तात्पाट्टो भवति । आकर्षः श्वा इव आकर्षश्वः । व्याघ्रैरुपमेय इति सः । अजीवे किम्? वानरोय श्वा इव वानरश्वा ।

मृगोत्तरपूर्वोत्सक्थ्नः ॥ ४ । २ । १०१ ॥ एभ्यः परो यः सक्थिशब्दस्तदन्तात्पाट्टो भवति । मृगस्य सक्थि, मृगसक्थम् । पूर्वसक्थम् । उपमानादिति च वर्तते । फलकमिव सक्थि फलकसक्थम् ।

अर्द्धाच्च ॥ ४ । २ । १०३ ॥ अर्द्धशब्दात्परान्नावष्टो भवति । अर्द्धा च सा नौश्च अर्द्धनावी । विशेषणमिति सः । लोकाश्रय नपुंसकमपि दृश्यते । अर्द्धनावम् ।

खार्या वा ॥ ४ । २ । १०४ ॥ रादर्धपूर्वाच्च खारीशब्दाद्वा टो भवति । द्विखारम्, द्विखारि । केचित्पुल्लिङ्गं पठन्ति । द्विखारि । पञ्चखारप्रिय, पञ्चखारीप्रिय । पञ्चखाररूप्य, पञ्चखारीरूप्यम् । अर्द्धखारम्, अर्द्धखारि ।

द्वित्रिभ्यामञ्जलेः ॥ ४ । २ । १०५ ॥ आभ्यां परो

योऽञ्जलिशब्दस्तदन्ताद्राट्टो भवति । द्व्यञ्जलम् । त्र्यञ्जलम् । द्व्यञ्जलरूप्यम् । केचिद्वेत्यनुवर्तयन्ति । तेन द्व्यञ्जलि अपि । अहृदुपीत्येव । नेह, द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलि. । रात् किम्[1] द्वयोरञ्जलिर्द्व्यञ्जलि. ।

**ब्रह्मणो राष्ट्रेभ्यः ॥ ४ । २ । १०६ ॥** राष्ट्रेभ्य परो यो ब्रह्मन्शब्दस्तदन्तात्पाट्टो भवति। अवन्तिषु ब्रह्मा अवन्तिब्रह्म । ईषिति योगविभागात्स । राष्ट्रेभ्य किम्[2] देवब्रह्मा नारद ।

**कुमहद्भ्यां वा ॥ ४ । २ । १०७ ॥** आभ्यां परो यो ब्रह्मन्शब्दस्तदन्तात्पाट्टो वा भवति। कुब्रह्म , कुब्रह्मा। महाब्रह्म , महाब्रह्मा ।

**पोऽनन्यः ॥ १ । ४ । ९५ ॥** नन्स यस च वर्जयित्वा पो नभवतीत्यधिकारोऽयम् ।

**खौ कन्थोशीनरेषु ॥ १ । ४ । ९६ ॥** खुविषये कन्थान्त पो नभवति, उशीनरेषु चेत्सा कन्था । सौशमीना कन्था सौशमिकन्थम् । खौ किम्[2] वीरणकन्था । उशीनरेषु किम्[2] दक्षकन्था । अन्यत्र ग्रामसंज्ञेयम् । उत्सर्गेणोत्तरपदार्थप्राधान्याल्लिङ्गनिधि पे ।

**उपज्ञोपक्रमं तदाद्युक्तौ ॥ १ । ४ । ९७ ॥** उपज्ञा उपदेश. । उपक्रम प्रारम्भ । उपज्ञोपक्रमान्त पो नभवति, तयोरुपज्ञोपक्रमयोराद्युक्तौ गम्यमानायाम् । देवस्योपज्ञा देवोपज्ञमनेकशेष व्याकरणम् । कुरुराजस्योपक्रम कुरुराजोपक्रमम् । उपज्ञो-

(१) देश [illegible] देवोपज्ञ ।

पक्रमान्त किम्? आदिदेवतपस्या तीत्रा । तदायुक्तौ किम्? देददत्तोपज्ञा । देवदत्तोपक्रम ।

**छाया बहूनाम्** ॥ १ । ४ । ९८ ॥ बहूना या छाया तदन्त पो नञ्भवति । शलभाना छाया शलभच्छायम् । एकस्य या छाया तस्य विकल्पो वक्ष्यते ।

**सभाऽराजाऽमनुष्यात्** ॥ १ । ४ । ९९ ॥ अराज॰ अमनुष्याच्च परा या सभा तदन्त पो नञ्भवति । इनसभम् । इन्द्रसभम् । राजपर्युदासात्तत्पर्यायाणामत्र ग्रहण, न तद्विशेषाणाम् । नेह, शालिवाहनसभा । रक्ष सभम् । पिशाचसभम् । अमनुष्यशब्दस्य रक्ष प्रभृतिषु रूढत्वान्नेह—काष्ठसभा । पाषाणसभा । अराजाऽमनुष्यादिति किम्? राजसभा । देवदत्तसभा ।

**अशाला** ॥ १ । ४ । १०० ॥ अशालावाचिका या सभा तदन्तश्च पो नञ्भवति । गोपालसभम् । अत्र समुदाये सभा शब्द । अशालेति किम्? देशिकसभा । पथिकशाला गुरुशाला वेत्यर्थ ।

**सेनासुराछायाशालानिशा वा** ॥ १ । ४ । १०१ ॥ एत दन्त पो वा नञ्भवति । देवसेन, देवसेना । पिष्टसुरम्, पिष्टसुरा । कुड्यस्य छाया कुड्यच्छाय, कुड्यच्छाया । गोशाल, गोशाला । चौरनिश, चौरनिशा । प इत्येव । सूरसेनो राजा । अनञ्य इति च । असेना । परमसेना ।

**रात्राह्नौ पुंसि** ॥ १ । ४ । १०४ ॥ कृतसान्तौ एतौ पुसि भवत । द्विरात्र । पूर्वमह पूर्वाह्ण । उत्तरपदार्थप्राधान्याल्लिङ्गप्रासौ वचनम् ।

अहः ॥ १ । ४ । १०५ ॥ अहश्च पुंस्येव । द्वयोरह्नोः समाहारो द्व्यहः ॥ अनुवाकादयश्चेति वक्तव्यम् *। अनुवाकः। संप्रवाकः ।

पुण्यसुदिनाभ्यां नप् ॥ १ । ४ । १०६ ॥ आभ्यां परोऽहशब्दो नब्भवति । पुण्याहम् । पुण्यग्रहणं सूत्रोपलक्षणम्। एकाहम् । सुदिनाहम् ।

अपथम् ॥ १ । ४ । १०७ ॥ अपथशब्दो नब्भवति । अपथम् । सान्तनिर्देशः किम्? अपन्थाः । वक्ष्यते सान्तविकल्पः । पे इत्येव । अपथा अटवी ॥ झिसंख्यादेरिति वक्तव्यम्* । उत्पथम् । चतुष्पथम् । पसोऽत्रापि ।

पुंसि चार्द्धर्चाः ॥ १ । ४ । १०८ ॥ अर्द्धर्चादयः शब्दाः पुंसि नपि च वेदितव्याः । अर्द्धर्चः, अर्द्धर्चम् । एवं गोमय, कषाय, कार्षापण, कुतप, कवाटादीनामपि तत्पाठादवगमः कार्यः । शब्दरूपाश्रया चेयमुभयलिङ्गता अर्थभेदेन द्रष्टव्या । यथा पद्मशङ्खशब्दौ निधिवचनौ पुंसि, जलजे द्विलिङ्गौ ।

इति पसाधिकारः ।

---

(१) पाठान्तरे 'षसो लिङ्ग्यादेः' इति सूत्रितम् । तथा चेदं नित्यार्थता भवति ।

(२) सर्वत्र लिङ्गविधिर्लोकाश्रयत्वात् प्रधानापेक्षया निर्धारणं कर्तव्यम् । प्रधानता च षसे उत्तरपदस्य प्रायः । [illegible] षसोत्सर्गेणोत्तरपदापेक्षया षसे लिङ्गविधिरेव । प्रादिसमासादौ तु यत्र पूर्वपदप्राधान्यं तत्र पूर्वपदापेक्षयैव लिङ्गविधिरेव ।

## अथ बसप्रकरणम् ।

अन्यपदार्थेऽनेकं बम् ॥ १ । ३ । ८६ ॥ अन्यस्य पदस्यार्थे वर्तमानमनेकं सुबन्तं समस्यते स च बसंज्ञः सो भवति । अन्यपदार्थस्य ये लिङ्गसंख्ये ते बसस्यापि स्याताम् इत्यर्थग्रहणं क्रियते । प्राप्तमुदकं यं स ग्रामः प्राप्तोदकः । नदी प्राप्तोदका । क्षेत्रं प्राप्तोदकम् । वचनेपि तथा । ऊढरथोऽनड्वान् । दानीयो गौर्यस्मै दानीयगुर्विप्रः । उद्धृतौदना स्थाली । सत्यवचनो जिनवरः । वीरपुरुषो ग्रामः । बहूनामपि बसत्वार्थमनेकग्रहणम् । वाविभक्त्यन्तेऽन्यपदार्थे न वृत्तिरनभिधानात् । वृष्टे देवे गतः । शस्त्रीश्यामेत्यत्र उन्मत्तगङ्गमित्यादौ चानेन सह 'यश्चैकाश्रये, खावन्यपदार्थे' इति सूत्राभ्यां क्रमेण यहसंज्ञासमावेशे प्राप्ते, नञाद्य आसमित्युक्तत्वात् पुल्लिङ्गया हसंज्ञया यसंज्ञया च बाध्यते बसंज्ञा । वीरपुरुषको ग्राम इत्यत्र पूर्वावरेत्यनेन, अन्यपदार्थे इत्यनेन च षबसंज्ञयोर्युगपत्प्राप्तयोः परत्वाद्बसंज्ञैव । निष्कौशाम्ब्यादौ तु वचनबलात्षसंज्ञैव । केशचूडः सुवर्णालङ्कारो वा देवदत्त इत्यत्र तु केशसंभारे-सुवर्णविकारे च

(१) ऊढो रथो येन स ।

(२) 'अत्रान्यार्थेनेकं बम्' इत्येव लघुवृत्तौ सूत्रितम् । तत्र वार्थे प्राप्तिरेव नास्ति ।

( ३ ) उन्मत्तगङ्गमित्यत्र तु प्रसिद्धैवान्यपदार्थता, शस्त्रीश्यामेत्यत्र यदस्य विशेष्यपदवाच्यं स एवान्यपदार्थ इति कृत्वा उभयत्राप्यन्यपदार्थवाच्यत्वसंभवाद् बप्रसंगः संभवति । वान्तेऽन्यपदार्थे कथं बस इति तु न शङ्क्यम्, उपदशा इति वक्ष्यते तद्वान्तेऽन्यपदार्थे सम्भवे सति तत्र बसविधेरस्वीकारे प्रमाणाभावात् । प्रवृत्तितन्त्रं हि व्याकरणम् । यहसंज्ञे [illegible] तत्र तत्र विहिते एव । अत एव अनेकसंज्ञासमावेश शङ्कितः ।

अह्नः ॥ १ । ४ । १०५ ॥ अहश्च पुंस्येव । द्वयोरह्नोः समाहारो द्व्यहः ॥ अनुवाकादयश्चेति वक्तव्यम् *। अनुवाकः। संप्रवाकः ।

पुण्यसुदिनाभ्यां नप् ॥ १ ।४ । १०६ ॥ आभ्यां परोऽहशब्दो नब्भवति । पुण्याहम् । पुण्यग्रहणं सूत्रोपलक्षणम् । एकाहम् । सुदिनाहम् ।

अपथम् ॥ १ । ४ । १०७ ॥ अपथशब्दो नब्भवति । अपथम् । सान्तनिर्देशः किम्? अपन्थाः । वक्ष्यते सान्तविकल्पः। । पे इत्येव । अपथा अटवी ॥ झिसंख्यादेरिति वक्तव्यम्* । उत्पथम् । चतुष्पथम् । पसोऽत्रापि ।

पुंसि चार्द्धर्चाः ॥ १ । ४ । १०८ ॥ अर्द्धर्चादयः शब्दाः पुंसि नपि च वेदितव्याः । अर्द्धर्चः, अर्द्धर्चम् । एवं गोमय, कषाय,कार्षापण,कुतप,कवाटादीनामपि तत्पाठादवगमः कार्यः । शब्दरूपाश्रया चेयमुभयलिङ्गता अर्थभेदेन द्रष्टव्या । यथा पद्मशङ्खशब्दौ निधिवचनौ पुंसि, जलजे द्विलिङ्गौ ।

इति पसाधिकारः ।

---

(१) पाठान्तरे 'पथो झिस्यादेः' इति सूत्रितम् । तथा चेष्टेगतार्थता भवति ।

(२) यदर्थं लिङ्गविधिर्नोक्तस्तत्र प्रधानापेक्षया निर्धारणं कर्तव्यम् । प्रधानता च पसे उत्तरपदस्य प्रायः । अत पसोत्सर्गेणोत्तरपदापेक्षया पसे लिङ्गविधिर्ज्ञेयः । प्रादिसमासादौ तु यत्र पूर्वपदप्राधान्यं तत्र पूर्वपदापेक्षयैव लिङ्गविधिर्ज्ञेयः ।

## अथ बसप्रकरणम् ।

अन्यपदार्थेऽनेकं बम् ॥ १ । ३ । ८६ ॥ अन्यस्य पदस्यार्थे वर्तमानमनेकं सुबन्तं समस्यते स च बसज्ञः सो भवति । अन्यपदार्थस्य ये लिङ्गसङ्ख्ये ते बसस्यापि स्यातामित्यर्थग्रहणं क्रियते । प्राप्तमुदकं यं स ग्रामः प्राप्तोदकः । नदी प्राप्तोदका । क्षेत्रं प्राप्तोदकम् । वचनेपि तथा । ऊढरथोऽनड्वान् । दानीयो गौर्यस्मै दानीयगुर्विप्रः । उद्धृतौदना स्थाली । सत्यवचनो जिनवरः । वीरपुरुषो ग्रामः । बहूनामपि बसत्वार्थमनेकग्रहणम् । चाविभक्त्यन्तेऽन्यपदार्थे न वृत्तिरनभिधानात् । वृष्टे देवे गतः । शालीश्यामेत्यत्र उन्मत्तगङ्गमित्यादौ चानेन सह 'षष्ठ्यैकाश्रये, खावन्यपदार्थे' इति सूत्राभ्यां क्रमेण षहसंज्ञा समावेशे प्राप्ते, नञ्नाध्य आसमित्युक्तत्वात् पुल्लिङ्गया हसंज्ञया बसंज्ञया च बाध्यते बसंज्ञा । वीरपुरुषको ग्राम इत्यत्र पूर्वोवरेत्यनेन, अन्यपदार्थे इत्यनेन च षबसंज्ञयोर्युगपत्प्राप्तयोः परत्वाद्बसंज्ञैव । निष्कौशाम्ब्यादौ तु वचनबलात्षसंज्ञैव । केशचूडः सुवर्णालङ्कारो वा देवदत्त इत्यत्र तु केशसंभारे सुवर्णविकारे च

---

(१) ऊढो रथो येन सः ।

(२) अन्यपदार्थेऽनेकं बम् इत्यत्र लघुवृत्तौ सूत्रितम् । ततश्च नाथे प्राप्तिरेव नास्ति ।

(३) उन्मत्तगङ्गमित्यत्र तु प्रसिद्धैवान्यपदार्थता, शालीश्यामेत्यत्र पदस्य विशेष्यपदवाच्य स एवान्यपदार्थं इति कृत्वा उभयत्राप्यन्यपदार्थत्वाच्चात्र सम्भवाद् बसंज्ञा सम्भवति । वर्तेऽन्यपदार्थे कथं बम इति तु न शङ्क्यम्, उपन्यासा इति वक्ष्यते तद्दृष्टान्तेऽप्यन्यपदार्थे समत्रं सति तत्र बसान्वयेरस्वीकारे प्रमाणं न स्यात । प्रवृत्तिश्च हि व्याकरणम् । षहसंज्ञे ■ तत्र तत्र विहिते एव । अत एव अनेकमत्र समवेशः शङ्कितः ।

केशसुवर्णशब्दौ द्रष्टव्यौ । सङ्गतार्थे 'समर्थे' इति निर्देशादेवं-जातीयस्य षुखं वा द्रष्टव्यम् । तेन प्रपतितपर्णः, प्रपर्णः । अविद्यमानभार्यः, अभार्यः । ईबुपमानपूर्वस्य षुखं गतार्थत्वात् । उदरे स्थितो मणिरस्य उदरेमणिः । 'पे कृति बहुलमि'ती-पोऽनुप् । एवमुष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुखः । अत्र 'सुप्सुपे'त्यतो वानिर्दिष्टं सुबिति पदमनुवर्तते । भानिर्दिष्टं तु निवृत्तम् । अत एव सर्वेषां वोक्तत्वेनानियमात्प्रसक्तेपि पूर्व-निपाते तन्निर्धारणार्थमाह,

ईव्विशेषणे वे ॥ १ । ३ । १०२ ॥ ईबन्तं विशेषणं च बसे प्राक् प्रयोक्तव्यम् । बसेन्यार्थत्वाचाऽनेकं सुबन्तं न्यक्संज्ञमित्यतोऽ-प्यनियमे प्राप्तेयमारम्भः । उरसिलोमा । अकामेऽमूर्द्धमस्तकादिति वक्ष्यतेऽनुप् । लम्बकर्णः । सर्वनामसंख्ययोः पूर्वनिपातो वक्त-व्यः* । सर्वगौरः । द्विकृष्णः । परस्परं सर्वनामसंख्ययोर्वृत्तौ तु वचनपरत्वात्संख्यायाः पूर्वनिपातः । द्व्यन्य । आहिताग्न्यादि-त्वाद्वा, मियदधिः, दधिप्रियः । गडुकण्ठ इत्यादौ चाहिताग्न्या-दित्वादीबन्तस्यापि परनिपातो वक्ष्यते । ईबन्तस्य पूर्वनिपात-नियमाच्चायं सः समानाधिकरणानामेवेति गम्यते । कथं तर्हि

---

(१) लघुवृत्तौ 'अनान्यार्थेनेकं बम्' इति सूत्रयित्वा 'एकार्थम्' इत्यपि पृथक् सूत्रितमुपलभ्यते । ततश्च ज्ञायते यत् प्रथमेन सूत्रेणासामानाधिकरण्येपि बसो भवति । तथापि असमानाधिकरणो बस पूर्वत्र प्रसिद्धेष्वर्थेषु रूढेष्वेव च स्यात् । उदाहृतमपि तथैव । योगार्थमुख्यत्वे तु 'एकार्थम्, इत्यनेनैव बस स्यात्, सभवतो रूढेष्वपि च इति । 'अन्यपदार्थेने बम्' इति सूत्रे तु यथासभव व्याख्यानतो-वगति कारिता महावृत्तिकारेण । यथा पारस्करादिशब्दानां सूत्रेर्थमनिर्दिशतैव सिद्धि-माख्यत्, तथापि अर्थविशेषे एव तत्सिद्धिर्व्याख्यानतोऽवगम्यते, व्याख्यानतो विशेषावगतेरित्यादेरुपलक्षणात् ।

पञ्चभिर्भुक्तमस्येत्यत्र बसो न? अनभिधानात् । अनभिधानेपि यदि स्यात् स्यात्तर्हि पञ्च भुक्तवन्तोस्येत्यत्रापि ।

ता ॥ १ । ३ । १०२ ॥ तान्तं बसे पूर्वं प्रयोज्यम् । कृतकटः । तान्तस्य विशेषणत्वविवक्षायां तु ईविशेषणे इत्येव सिद्धम् । आहिताग्न्यादित्वात् कचिज्जातिकालसुखादिभ्यस्तान्तं परं प्रयुज्यते । पलाण्डुभक्षिती । संवत्सरजाता । सुखजाता । दुःखजाता । तत एव च प्रहरणार्थेभ्यः परौ तेपौ स्याताम् । अस्युद्यतः । असिपाणिः । उद्यतगद इत्यादि च आहिताग्न्यादावेव वेति व्यवस्थावलोकनाद्बोध्यम् ।

वाहिताग्न्यादौ ॥ १ । ३ । १०३ ॥ बसे आहिताग्न्यादिषु तान्तादि वा पूर्वं प्रयोज्यम् । आहिताग्निः, अग्न्याहितः । एवं जातपुत्रः, पुत्रजातः । आकृतिगणोयम् । तेन बसे पूर्वनिपातव्यवस्था आर्षाविरोधेन सम्प्रधार्या सर्वत्र ।

स्न्युक्तपुंस्कादनूरेकार्थेऽडद्प्रियादौ स्त्रियां पुंवत् ॥ ४ । ३ । १४६ ॥ उक्तपुंस्कात्परो यः स्त्रीस्यः अनूत्तदन्तः शब्दः पुंशब्देन तुल्यो भवति डडन्तप्रियादिवर्जिते स्त्रियां वर्तमाने एकार्थे द्यौ परतः । 'स्त्रीगोर्नीचः' इति प्रः । दर्शनीया भार्या यस्य स दर्शनीयभार्यः । चित्रगुः । स्त्रीति किम्? ग्रामणि (कुलं) दृष्टिरस्य ग्रामणिदृष्टि । उक्तपुंस्कादिति किम्? मालावृन्दारिकः । अनूरिति किम्? वामोरूभार्यः । अनूरिति पर्युदासेनैव स्त्रीस्ये लब्धे अस्त्रीस्यान्ताया अपि स्त्रियाः पुंवद्भावार्थं स्त्रीग्रहणम् । तेन दारदभार्यः । एकार्थे किम्? कल्याण्या माता

(१) दरदोऽपत्य दारदः । स्त्रियां इत्यस्योपि दरत् । सा भार्या यस्य स दारदभार्यः ।

कल्याणीमाता। अडट्प्रियादाविति किम्? कल्याणी-दशमी यासां रात्रीणामिति विग्रहे,

**डट्स्त्रीप्रमाण्योरः** ॥ ४ । २ । ११६ ॥ डडन्ता ये स्त्रीशब्दाः प्रमाणीशब्दश्च तदन्ताद्वादस्त्यो भवति। कल्याणीदशमा रात्रयः। स्त्री प्रमाणी येषां ते स्त्रीप्रमाणाः। डट्स्त्रियां प्रधानस्त्रीग्रहणं कर्तव्यम्। तद्गुणसंविज्ञानादिना डडन्ता स्त्री प्रधानं चेत्तदायं सान्तः पुंवद्भावप्रतिषेधश्च स्यादित्यर्थः। नेह, कल्याणी पञ्चमी यस्मिन्पक्षे इति विग्रहे पुंवद्भावे,

**ऋन्मोः** ॥ ४ । २ । १५३ ॥ ऋकारान्तान्मुसंज्ञकान्ताच्च बाह्कब्भवति। इति कपि,

**केऽणः** ॥ ५ । २ । १२९ ॥ के परतोऽणः प्रो भवति। इति प्राप्ते,

**न कपि** ॥ ५ । २ । १२६ ॥ कपि परतोऽणः प्रो न भवति। कल्याणपञ्चमीकः पक्षः। बहुकर्तृकः। कल्याणीप्रियः। प्रिया, मनोज्ञा, कल्याणी, सुभगा, दुर्भगा, भक्तिः, सचिवा, स्वसा, कान्ता, समा, चपला, दुहिता, वामा, इत्येवं प्रियादिः। दृढभक्तिरित्यादौ तु दृढं भक्तिरिति सामान्ये नप्। स्त्रियामिति किम्? कल्याणी प्रधानमेषां ते कल्याणीप्रधानाः।

**तसादौ** ॥ ४ । ३ । १४७ ॥ आदिशब्दः प्रकारवाची। तस्, त्र, तर, तम, चरट्, जातीय, देश्य, देशीय, कल्प, पाश, रूप, था, थम्, दा, र्हि, ध्य, क इत्येषु त्येषु परत उक्तपुंस्कादनूः स्त्री पुंवद्भवति। तस्यास्ततः। तस्यां तत्र।

आढ्यतरा । आढ्यतमा । भूतपूर्वा पट्वी— पटुचरी । पटुजातीया । पटुदेश्या । पटुदेशीया। वृद्धकल्पा । वृद्धपाशा । वृद्धरूपा । तया प्रकृत्या तथा । एव कथम् । तस्या वेलाया तदा । एव तर्हि । अजायै हितमजथ्यम् । के पुवद्भावापवादत्वेन ङ्रूपेति वक्ष्यते प्र । पट्विका । बहल्पार्थाच्छसि, बह्वीभ्य इति बहुशो देहि । एवमल्पश । गुणवचनात्त्वतलो , पट्व्या भाव पटुत्वम् । पटुता । गुणवचनात्किम्? क्षत्रियात्वम् । भस्य हत्यढे पुवद्भावो वक्तव्य * । हास्तिनीना समूहो हास्तिकम् । अढे किम्? स्येन्या अपत्य स्यैनेय । अत्र स्त्रीभ्यो ढण् । ढेपि क्वचित्पुवद्भावो वक्तव्य * । अग्नायी देवतास्य आग्नेय । अभत्वादप्राप्ते, ठक्छसोश्च* । भवत्या इद भावत्कम् । भवदीयम् ।

**क्यङ्मानिनोः** ॥ ४ । ३ । १४८ ॥ क्यङि मानिनि च परत उक्तपुस्कादनू स्त्री पुवद्भवति । हरिणीवाचरति हरितायते । इमा दर्शनीया मन्यते दर्शनीयमानी । मूढ्रहणे लिङ्गविशिष्टस्यापि । देवदत्ता दर्शनीया मन्यते दर्शनीयमानिनी जिनदत्ता । एकार्थे स्त्रीलिङ्गे धौ तु पूर्वेणैव सिद्ध पुवद्भाव । दर्शनीयामात्मान मन्यते दर्शनीयमानिनी ।

**न वुहृत्कोडः** ॥ ४ । ३ । १४९ ॥ वोर्हृतश्च य ककारस्तदुड स्त्रिया न पुवत् । वुकोड , कारिकाभार्य । कारिकात । पाचिकामानिनी । हृत्कोड , लाक्षिकीभार्य । लाक्षिकीत । लाक्षिकीयते । लाक्षिकीमानी । एवं मद्रिकायते । वुहृद्ग्रहण किम्? भूकभार्य । जागरूकभार्य ।

डट्रूवोः ॥ ४।३।१५० ॥ डडन्ता संज्ञाभूता च स्त्री न पुंवत्। दशमीभार्यः। दशमीपाशा। दशमीयते। दशमीमानिनी। गुप्ताभार्य.। गुप्तामानिनी। गोपनक्रियाव्युत्पत्तिद्वारेण संज्ञाशब्दे-ष्युक्तपुंस्कत्वमिति प्राप्तिः। एवं दत्ताभार्यः।

ञ्णिद्धृद्रक्तविकारे ॥ ४ । ३ । १५१ ॥ रक्तविकार-वर्जितेऽर्थे यो हृत् ञ्णित् तदन्ता स्त्री न पुंवत्। ञित्, औत्सी-भार्यः। णित्, स्रौघ्नीभार्यः। स्रौघ्नीतः। स्रौघ्नीयते। एवं वैया-करणीभार्यः। ञ्णिदिति किम्? मध्यमभार्यः। तावती भा-र्यास्य स तावद्भार्यः। हृदिति किम्? पुष्पलावभार्यः। अरक्त-विकारे इति किम्? कषायेण रक्ता काषायी। सा बृहतिका यस्य स काषायबृहतिकः। लोहस्य विकारो लौही। सा ईषा यस्य स लौहेषो रथः।

अमानिनीत्स्वाङ्गात् ॥ ४ । ३ । १५२ ॥ स्वाङ्गात्परो य ईत्तदन्ता स्त्री न पुंवन्मानिन्शब्दवर्जिते घौ। दीर्घकेशी-त। दीर्घकेशीयते। अमानिनि किम्? दीर्घकेशमानिनी। ईदिति किम्? पृथुजघनभार्यः। अकेशभार्यः। न क्रोडादीति सहनाञिति च ङीप्रतिषेधः। स्वाङ्गात्किम्? पटुभार्यः।

जातिश्च ॥ ४ । ३ । १५३ ॥ जातिश्च स्त्री न पुंवदमा-निनि घौ। कठीभार्य। बह्वृचीभार्यः। मानिनि तु कठमानी। चशब्द किम्? भस्य ह्यढे इति प्राप्तस्य पुंवद्भावस्य यथा प्रतिषेधो न स्यात्। हस्तिनीनां समूहो हास्तिकम्।

---

(१) वैयाकरणभार्य इत्येके।

**संख्येये संख्यया ऽयासन्नाऽदूरसंख्यम् ॥ १ । ३ । ८७ ॥** सख्येयार्थया सख्यया सह ड्यादीना बसो भवति । स्वपदार्थे वान्तेप्यन्यपदार्थे च प्रापणार्थमिदम् । दशाना समीपे ये इति विग्रहे सख्यावादिति वक्ष्यतेऽत्र डः ।

**टेः ॥ ४ । ४ । १२७ ॥** भस्य टिसंज्ञकस्य खं भवति डिति । उपदशा ।

**तेर्विंशतेर्डिति ॥ ४ । ४ । १२६ ॥** भस्य विंशतेस्ति भागस्य खं भवति डिति । उपविंशाः । समीपताप्राधान्ये तु हस । आसन्ना दशानामिमे आसन्नदशा. । चत्वारिंशतामदूरे ये ते अदूरचत्वारिंशाः । स्वपदार्थे यथा, द्वौ वा त्रयो वा द्वित्राः । एव पञ्चषा । सख्ययो परस्परसमासे यथाक्रमन्यात् पूर्वविधि । त्रिरावृत्ता दश त्रिदशा । त्रिंशदित्यर्थ । अधिकशब्दो-

( १ ) अत्रोत्तरपदार्थप्राधान्यमस्तीति नान्यपदार्थवाच्यत्वे नियता वृत्तिरियम । अत एवात्र यस्मिन् प्रयोगेऽन्यपदार्थत्वसभवस्तस्मिन्नेव 'अन्यपदार्थे' इति पदमनुवर्तत , न सर्वत्राविशेषेण । इत्यस्माद कृतम् ।

( २ ) ङिना सख्या यदा बसे समस्यते तदा ये ते इत्यन्यपदार्थप्राधान्यमेव । हस स्तु यदा ङिना क्रियेत तदा पूर्वपदार्थप्राधान्य स्यात , यथा उपदश, दशाना सामीप्यमित्यर्थ । अत एव बसे 'उप' शब्दस्य उपगत सामीप्यगत इत्याद्यर्थपरत्वमुपलक्षणादिना स्यात , हसे तु सामीप्यार्थपरत्वमेव । यथा शुक्लादिशब्दाना गुणार्थपरत्व गुण्यर्थपरत्व चाङ्गीक्रियेत ।

( ३ ) सख्या वार्थे समस्यते इत्यनिर्देशेऽपि व्याख्यानतोऽभ्यावृत्तौ सशये चेति गम्यम । पाठान्तरे तु सख्याग्रहणमत्राकृत्वा 'स्यि सुज्वार्थे' इति सत्रान्तरितमेव । तथा च, सख्या सुजर्थे वार्थे चैव समस्यते इति नियम स्पष्टभवत्येव । सुजर्थ अभ्यावृत्ति । वार्थ सशय ।

प्यत्र संख्यावाची । अधिका दशानामिमे अधिकदशाः । संख्येये किम् ? अधिका विंशतिर्गवाम् । संख्यया किम् ? पञ्चपदार्थाः ।

**दिशोन्तराले** ॥ १ । ३ । ८८ ॥ दिक्छब्दानामन्तरालवचने बसो भवति । दक्षिणस्याः पूर्वस्याश्च दिशोन्तरालमिति विग्रहे, सर्वनाम्नो वृत्तिमात्रे पूर्वस्य पुंवद्भावः *। ' स्त्रीगोर्नीच ' इति मे अन्तरालदिशोपि स्त्रीत्वात्पुनष्टाप् । दक्षिणपूर्वा । अत्रानेकमित्यनुवर्तनान्न्यक्संज्ञायां द्वयोः पर्यायेण पूर्वनिपातः । पूर्वदक्षिणा । प्रसिद्धानां दिक्छब्दानां ग्रहणादिह न । वारुण्याश्च कौवेर्याश्च दिशोन्तरालम् ।

**तत्रेदमिति सरूपे** ॥ १ । ३ । ८९ ॥ ईबन्ते द्वे सरूपे ग्रहणविषये इदं युद्धं प्रवृत्तमित्येतस्मिन्नर्थे समस्येते स च बसो भवति । इतिकरणादयं विशेषो लभ्यते । अत्रेच् त्यो वक्ष्यते ।

**अन्यस्यापि** ॥ ४ । ३ । २३२ ॥ यस्य शब्दस्य शिष्टैर्दीर्घं प्रयुक्तं तस्य दीर्भवति । केशेषु केशेषु च गृहीत्वा प्रवृत्तमिदं युद्धं केशाकेशि । एवं कचाकचि ।

**तेन** ॥ १ । ३ । ९० ॥ भान्ते द्वे सरूपे प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे प्राग्वदेव भवत । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुसलामुसलि । सरूप इति किम् ? नेह, दण्डैश्च कमण्डलुभिश्च प्रहृत्येदं युद्ध प्रवृत्तम् । योगविभाग उत्तरार्थः ।

**सहेति तुल्ययोगे** ॥ १ । ३ । ९१ ॥ समानक्रियादिभिर्योगस्तुल्ययोगः । सहेति सुवन्तं तुल्ययोगे वर्तमानं भान्तेन सह प्राग्वद् भवति ।

आचेनैव सिद्धे इद वचन हसस्य कपश्च निवृत्त्यर्थम् । इति-शब्दो योगविभागार्थ । तेनातुल्ययोगेपि क्वचिद्ब । तत्र कप्च। तेन सकर्मकाचरेद , सपक्षको वादी ब्रूते, इत्यादि सिद्धम्। अत्र चरेरेव देन योगो न कर्मणो, वादिनो वा वचनेन योगो न पक्षस्य ।

**वा नीचः** ॥ ४ । ३ । १९० ॥ नीचो (बस्य)ऽवयवस्य सह-शब्दस्य वा सो भवति घौ । शिष्येण सहेति सशिष्य आगत, सहशिष्यो वा । नीचोवयवस्येति किम्? सहकृत्त्वा । सहयुद्धप्रिय ।

**नाशिष्यगोवत्सहले** ॥ ४ । ३ । १९१ ॥ आशिष्यर्थे सहस्य सो न भवति गोवत्सहलवर्जिते घौ । स्वस्ति सहशिष्याय गुरवे । गोवत्सहलेषु तु वा स स्यादेव । स्वस्ति सगवे, सवत्साय, सहलाय तुभ्यम् ।

**संख्यावाड्डोऽबहुगणात्** ॥ ४ । २ । ६९ ॥ सख्येये सख्येयेत्यादिकृतो यो बस्तस्मादबहुगणान्तात्सान्तो डो भवति । समीपे दशाना ये ते उपदशा । बहुगणान्तात्तु न । उपबहव । बहुगणयो सख्यासज्ञा भवतीतीदमेव ज्ञापकम् । गणाड्डे सत्य सति च न विशेष । किन्त्वन्यत्र सख्याकार्यलाभोऽतो भवति । तेन गणकृत्व । गणधा । प्रतिपदोक्तस्यैव ग्रहणादिह न, दशगु । डप्रकरणे सख्याया पसस्योपसंख्यान निर्स्त्रिशाद्यर्थम् *। निष्क्रान्तास्त्रिंशतो निस्त्रिंश । निश्चत्वारिंश । निरशीत ।

**स्वाङ्गाड्डेऽक्षिसक्थ्नः** ॥ ४ । २ । ११२ स्वाङ्गवाचिनौ यौ अक्षिसक्थिशब्दौ तदन्ताद्बाड्डो भवति । कल्याणे अक्षिणी

यस्य स कल्याणाक्षः । गौरसक्थी । एवं स्वक्षी । स्वतीति नेह निषेधः, पक्षे एव व्याख्यानात् । अप्राणिस्थस्य स्वाङ्गत्वनिषेधान्नेह, स्थूलाक्ष इक्षुः । दीर्घसक्थि शकटम् । वे किम् ? उत्तमाक्षि ।

द्रुण्यङ्गुलेः ॥ ४ । २ । ११४ ॥ अङ्गुल्यन्ताद्बाट्टो भवति दारुण्यभिधेये । द्वे अङ्गुली अस्य द्व्यङ्गुलं दारु । अग्रे अङ्गुलिसदृशावयवं धान्यविक्षेपणकाष्ठमिह गृह्यते । एवं त्र्यङ्गुलचतुरङ्गुलादय । द्वे अङ्गुली प्रमाणमस्येति विग्रहे तु हृदर्थे पक्षे कृते पेऽङ्गुलेर्द्विसंख्यादेरित्यः सान्त, प्रमाणे मात्रटश्चोप् । द्व्यङ्गुला यष्टिः । द्रुणि किम् ? पञ्चाङ्गुलिर्हस्तः ।

द्वित्रिभ्यां मूर्ध्नः ॥ ४ । २ । ११५ ॥ द्वित्रिपूर्वपदान्मूर्धान्ताद्बाट्टो भवति । द्विमूर्धः । त्रिमूर्धः । सान्तो विधिरनित्य । तेन द्विमूर्धा, त्रिमूर्धा इत्यपि । डट्स्त्रीप्रमाण्योर इति वर्तते । नेतुर्नक्षत्रे उपसंख्यानम्* । मृगो नेता यासा रात्रीणा ता मृगनेत्राः । एवं पुष्यनेत्राः । अन्यत्र तु देवदत्तनेतृकं सैन्यम् ।

लोम्नोऽन्तर्बहिर्भ्याम् ॥ ४ । २ । ११७ ॥ आभ्यां परो यो लोमन्शब्दस्तदन्ताद्बादो भवति । अन्तर्लोमः । बहिर्लोमः ।

नासिकाया नश्चाऽस्थूलात्खौ ॥ ४ । २ । ११८ ॥ नासिकान्ताद्बादो भवति खुविषये नासिकायाश्च नसादेशो भवति, न चेत्स्थूलपूर्वो नासिकाशब्दः । 'पूर्वपदात्खावग' इति णत्वम् । द्रुरिव नासिकास्य द्रुणस । वृध्ने भवा वार्ध्री । सा नासिकाऽस्य वार्ध्रीणसः । ञ्णिद्धृदिति पुंवत्प्रतिषेधः । अस्थूलात्किम् ? स्थूल-

नासिकः । खौ किम् ? तुङ्गनासिकः । खरखुराभ्यां वा नस् वक्तव्यः* । खरणाः । खुरणाः । पक्षे तु सूत्रेणैव नसादेशोऽस्य । खरणसः । खुरणसः ।

गेः ॥ ४ । २ । ११९ ॥ गिपूर्वपदान्नासिकान्ताद्बादौ भवति नासिकाया नश्चादेशः । अखुविषयेऽयं विधिः । उन्नता नासिकास्य उन्नसः । णत्वविधौ गेर्नस उपसंख्यानम् * । प्रणसः । वेः ख्यादेशो वक्तव्यः* । विख्यः ।

सोः मातर्दिवाश्वसः ॥ ४ । २ । १२० ॥ सुपूर्वात्मातर्दिवाश्वस्शब्दान्ताद्बादौ भवति । क्षेभमात्रे टिखम् * । शोभनं मातरस्य सुमातः । सुदिवः । सुश्वः । अत्र मातरादिपदैस्तत्र भवं कर्म गृह्यते ।

धर्मात्केवलादन् ॥ ४ । २ । १२५ ॥ धर्मशब्द एव केवलो यत्रोत्तरपदं तदन्ताद्बादन् भवति । साधुधर्मा । केवलात्किम् ? परमस्वधर्मः । एवं सन्दिग्धसाध्यधर्मः । केचित्परमस्वधर्मादावनमिच्छन्ति ।

सुहरिततृणसोमाज्जम्भात् ॥ ४ । २ । १२६ ॥ जम्भो दन्तेपि जम्बीरे दैत्यभेदेपि भक्षणे । सुहरिततृणसोमेभ्यः परस्य जम्भस्य सान्तोऽन् भवति । सुजम्भा । शोभनदंष्ट्रः शोभनाहारो वा । हरितजम्भा । तृणजम्भा । सोममिव दन्ता यस्य

---

( १ ) पूर्वं परमस्वशब्दयोर्बसे कृते धर्मस्य केवलोत्तरपदत्वसम्भवादनागमो न्याय्यः । तेन परमस्वधर्मा ऽनुच्छिद्याविधर्मा इत्यादि साधु ।

( २ ) इति विश्वलोचने ।

सोममभ्यवहार्यं यस्येति वा सोमजम्भा। स्वादिभ्यः किम्? स्थूलजम्भ।

**दक्षिणेर्मा लुब्धयोगे ॥ ४। २। १२७॥** बहुवाचकं व्रणवाचकं वा ईर्मम्। अन्नन्तोयं निपात्यते। हन्तुकामस्य व्याधस्य दक्षिणमङ्गं बहुकृत्वा स्थितो, दक्षिणमङ्ग व्रणितं वा व्याधेनास्येति दक्षिणेर्मा मृगः। स्वयमेव संजातव्रणस्तु दक्षिणेर्म.।

**बे इच् ॥ ४।२।१२८॥** ञः कर्मव्यतिहार इति वक्ष्यते। ग्रहणप्रतिग्रहणलक्षणे कर्मव्यतिहारेर्थे यो बसस्तस्मादिच् सान्त.। कचाकचि। दण्डादण्डि। तिष्ठद्ग्वादाविचः पाठादिह हसंज्ञापि। तेन सुब्निमित्तेन रूपान्तरप्राप्तिर्न स्यात्।

**द्विदण्ड्यादि ॥ ४। २। १२९॥** द्विदण्ड्यादय इजन्ता निपात्यन्ते। गणपाठसामर्थ्याद्बसेन्यत्र च। क्रियाविशेषणेर्थे एव। द्वौ दण्डौ प्रहरणमस्मिन्निति द्विदण्डि प्रहरति। एव द्विमुसलि। पसेपि। पादावाकुच्य, आकुच्यपदि वा शेते। मयूरव्यंसकादित्वात्स।

**संप्राज्जानुनो ज्ञः ॥ ४। २। १३०॥** सम प्राच परस्य जानुशब्दस्य ज्ञादेश सान्तो पिनात्यते बसे। सगते जानुनी अस्य सज्ञ। प्रज्ञ। ज्ञुरित्युकारान्त केचिदिच्छान्ति। सज्ञु।

**वोर्ध्वात् ॥ ४। २। १३१॥** ऊर्ध्वज्ञ ऊर्ध्वजानुरूर्ध्वजानुको वा।

**ऊधसोऽनङ् ॥ ४। २। १३२॥** ऊध शब्दान्तस्य बस्यानङादेशो भवति। स्वभावात्स्त्रीविपयतात्र। कुण्डोध्नी।

धनुषः ॥ ४ । २ । १३३ ॥ धनुःशब्दान्तस्य बस्यानङादेशो भवति । स्थूलधन्वा । गाण्डीवधन्वा ।

वा खौ ॥ ४ । २ । १३४ ॥ पूर्वविषये एव । पुष्पधन्वा, पुष्पधनुः ।

जायाया निङ् ॥ ४ । २ । १३५ ॥ जायान्तस्य बस्य निङादेशो भवति । वधूर्जाया यस्येत्यत्राकारस्य निङादेशे वलि व्योरिति यखम् । वधूजानिः । युवतिर्जाया यस्येत्यत्र तु पूर्वस्य पुंवत् । युवजानिः ।

गन्धस्येरुत्पूतिसुसुरभिभ्यः ॥ ४ । २ । १३६ ॥ उदादिभ्यः परस्य गन्धस्य सान्त इरादेशो भवति बसे । उद्गतो गन्धोस्य उद्गन्धि । पूतिगन्धि । सुगन्धि । सुरभिगन्धि । गुणवाचकस्यैव गन्धस्य । द्रव्यवाचकस्य तु नेह, शोभनं गन्धद्रव्यमस्य स सुगन्ध आपणिकः ।

अल्पाख्यायाम् ॥ ४ । २ । १३७ ॥ वात्र मण्डूकप्लुत्यानुवर्तते । अल्पवाचिनो गन्धस्य इरादेशो वा भवति । अन्नस्य गन्धोऽस्मिन् अन्नो गन्धो (अंल्पो) वा अस्मिन्नित्यन्नगन्धि, अन्नगन्धं वा भोजनम् ।

उपमानात् ॥ ४ । २ । १३८ ॥ उपमानात्परो यो गन्धस्तदन्तस्येरादेशो वा भवति । उत्पलस्येव गन्धो यस्योत्पलगन्धि, उत्पलगन्धम् ।

खं पादस्याहस्त्यादेः ॥ ४ । २ । १३९ ॥ वेति नानुव-

---

(१) 'गन्धो गन्धकसम्बन्धलेशेष्वामोदगर्वयो' इति विश्वलोचनकोशे ।

र्तते ॥ हस्त्यादिवर्जितादुपमानात्पादस्य सान्तं खं भवति बसे । सान्त इत्यधिकारात्परस्यादेरिति नोपतिष्ठते । सिंहस्येव पादावस्य सिंहपात् । हस्त्यादेस्तु, हस्तिपादः । कपोतपादः ।

**सुसंख्यादेः** ॥ ४ । २ । १४० ॥ स्वादेः संख्यादेश्च पादस्य खं भवति बसे । सुष्ठु पादावस्य सुपात् । द्विपात् ।

**कुम्भपद्यादिः** ॥ ४ । २ । १४१ ॥ कुम्भपदीप्रभृतयो ङ्यन्ता एव निपात्यन्ते । कुम्भपदी । सूकरपदी । अष्टापदी ।

**वयसि दन्तस्य दतृ** ॥ ४ । २ । १४२ ॥ वयसि गम्यमाने स्वादेः संख्यादेश्च दन्तस्य दतृ इत्ययमादेशो भवति बसे । सुदन् कुमारः । द्विदन् वत्सः । वयसि किम् ? सुदन्तो दाक्षिणात्यः ।

**स्त्रियां खौ** ॥ ४ । २ । १४३ ॥ अन्यपदार्थे स्त्रीलिङ्गे दन्तस्य सान्तो दतृआदेशो भवति खुविषये । अयोदती । खौ किम् ? समदन्ती । नासिकोदरौष्ठेति ङी ।

**वा श्यावाऽरोकात्** ॥ ४ । २ । १४४ ॥ श्यावादरोकाच्च परस्य दन्तस्य दतृ वा भवति बसे खौ । श्यावदन्, श्यावदन्तः । अरोकदन्, अरोकदन्तः । श्यावः कपिशः । अरोकश्छिद्रः ।

**शुद्धाग्रान्तशुभ्रवृषवराहात्** ॥ ४ । २ । १४५ ॥ शुद्ध–अग्रशब्दान्त–शुभ्र–वृष–वराहेभ्यः परस्य दन्तस्य दतृ वा भवति बसे । शुद्धदन्, शुद्धदन्तः । शिखराग्रदन्, शिखराग्र-

(१) स्थानिद्वारेणभावीभावस्थानयत्नविज्ञानादत्रापि सान्तता बोध्या ।

दन्तः। एवं शुभ्रदन्, शुभ्रदन्तः। अन्येभ्योपीति वक्तव्यम् *। अहिदन्, अहिदन्तः।

ककुदस्यावस्थायां खम् ॥ ४। २। १४६॥ कालादिकृतो बालादिभावोऽवस्था। ककुदान्तस्य सान्तं खं भवति अवस्थागम्यत्वे। अजातककुद्बालः। पूर्णककुद् वृद्धः। अवस्थायां किम्? श्वेतककुदः। कथं तर्हि ककुद्मान्। गणे निपातनात् सिद्धम्।

अद्रौ त्रिककुत् ॥ ४। २। १४७॥ अन्यार्थेऽद्रौ सति त्रिककुन्निपात्यते। त्रीणि ककुदान्यस्य त्रिककुत्। अद्रिसंज्ञेयम्। अन्यत्र त्रिककुदः।

व्युदः काकुत् ॥ ४। २। १४८॥ व्युद्भ्यां परस्य काकुदस्य सान्तं खं भवति। विशिष्टं काकुदं यस्य विकाकुत्। उत्काकुत्।

पूर्णाद्वा ॥ ४। २। १४९॥ पूर्णात्परस्य काकुदस्य वा खं भवति सान्तम्। पूर्णकाकुत्। पूर्णकाकुदः।

सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ ४। २। १५०॥ यथासंख्यं मित्रामित्रयोरर्थयोः सुदुर्भ्यां परस्य हृदयस्य हृदादेशो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रम्। मित्रामित्रयोः किम्? सुहृदयः साधुः। दुर्हृदयः खलः।

उरःप्रभृतिभ्यः कप् ॥ ४। २। १५१॥ उरःप्रभृत्यन्ताद्बसात्सान्तः कप् भवति। व्यूढोरस्कः। 'कुप्वोस्त्ये' इति

(१) ककुद, वक्तिविषयर्थ.।

रेफस्य सत्वम् । प्रभूतसर्पिष्कः । इह पुमानित्येवमादयः पञ्चैकवचनान्ताः पठ्यन्ते । तत एकवचनान्तेभ्य एव नित्यं कप् द्विवचनान्तेभ्यस्तु शेषाद्वेति वा कप् । द्विपुंस्कः, द्विपुमान् । ऋन्मोरित्यनेनैव सिद्धे दरीग्रहणं 'सहेति तुल्ययोगे' इत्यस्य कबभावपक्षे कबर्थम् । तेन सदरीकः । अर्थान्नञः (ग.) । अनर्थकम् । अन्यथैवंकथमित्थंस्वनर्थादिति तु सौत्रत्वात्प्रयोगः ।

इनः स्त्रियाम् ॥ ४ । २ । १५२ ॥ इन्नन्तात्कब् भवति स्त्रियामन्यपदार्थे । बहुदण्डिका । अनिनस्मन्ग्रहणादनर्थकादपि । बहुवाग्मिका । अस्त्रियां तु,

शेषाद्वा ॥ ४ । २ । १५४ ॥ अत्र प्रकरणे यस्माद्वात् सान्तो न विहितः स शेषः । तस्माद्वा कब् भवति । बहुदण्डी, बहुदण्डिकः । बहुराजन्यकं, बहुराजन्यं वा युद्धम् । यत्र तु विहितः सान्तस्तत्र न विकल्पः । सुगन्धि । उत्काकुत् । सुहृत् । बह्वयः खट्वा यस्येत्यत्र कपि कृते 'केऽण' इति प्रे प्राप्ते, न कपीति निषेधे प्राप्ते,

(१) दक्षिणपूर्वा, इत्यत्र शेषाद्वेति ■ कप्, अन्यपदार्थे इत्यनेन सिद्धेपि पृथग्विधानस्य नियमार्थत्वात् कबभावसूचनार्थत्वाच्च । भाष्येपि कबभावार्थोयं योग 'तेन सहेति, दिशोन्तराले' इति च, इति प्रतिज्ञातत्वात् । उपबहव इत्यत्रापि न कप्, यत मप्रथमविभक्त्यर्थसामान्यस्यान्यपदार्थत्वे उत्सर्गेण यत्र बसो विहितस्ततो विधीयमानेन सान्तमणेन यः परिमुक्तः स एव शेष इति कृत्वा 'सङ्ख्येये सङ्ख्यया' इति वचनेन विहितस्य बसोऽस्त्यपि सान्ते न शेषपरत्वम् । एतत्सूचनार्थमेव, उरस्‌गंबसादिहिते सान्तप्रकरणे सङ्ख्यावाड्विधिमनुक्त्वा व्यवधानेन इत प्रागुक्तवान् भगवान् ।

वाऽऽपः ॥ ५ । २ । १२७ ॥ कपि परे आबन्तस्य वा प्रादेशो भवति । बहुखट्वको, बहुखट्वाकः । कबभावे बहुखट्वः ।

न खौ ॥ ४ । २ । १५५ ॥ येन केनचित्प्राप्तः कप् खुविषये न भवति । श्वताश्वनिः ।

ईयसश्च ॥ ४ । २ । १५६ ॥ ईयसन्ताद्बान्न कप् । येन केनचित्प्राप्तस्य प्रतिषेधः । बहव श्रेयासोऽस्येति बहुश्रेयान् । मृद्ग्रहणे लिङ्गविशिष्टस्यापीति बह्व्यः श्रेयस्यो यस्येति बहुश्रेयसी । ऋन्मोरित्यनेन प्राप्तस्यात्र प्रतिषेधः । स्त्रीगोर्नीचि इति प्रादेशे प्राप्ते, ईयसो बसे प्रतिषेधो वक्तव्यः,अत्र ई ईयस इति प्रश्लेषनिर्देशात् चकारेण तदवस्थत्वसूचनाद्वा ।

स्तुते भ्रातुः ॥ ४ । २ । १५७ ॥ भ्रातृशब्दान्ताद्बान्न कप् प्रशंसायामर्थे । शोभनो भ्राता यस्य सुभ्राता । स्तुते किम् ? मूर्खभ्रातृक ।

नाडीतन्त्र्योः स्वाङ्गे ॥ ४ । २ । १५८ ॥ स्वाङ्गे वर्तमानौ यौ नाडीतन्त्रीशब्दौ तदन्ताद्बान्न कप् । बहुनाडिः काय. । स्त्रीगोरिति प्रादेश । स्त्रीत्याभावादत्र तु न,बहुतन्त्रीर्ग्रीवा। तन्त्रीर्धमनी । स्वाङ्गमिह पारिभाषिकम् । तेनेह न, बहुनाडीकः स्तम्बः । बहुतन्त्रीका वीणा ।

निष्प्रवाणिः ॥ ४ । २ । १५९ ॥ निष्प्रवाणिरिति कबभाववान् निपात्यते । प्रकर्षेण ऊयते अस्यामिति प्रवाणी

( १ ) पाठान्तरे तु 'नाडीयसो बसे ॥' इति सूत्र विधायैव प्रादेशो निषेध्यते ।

तन्तुवायशलाका। निर्गता प्रवाण्यस्मादिति निष्प्रवाणिः कम्बलः। प्रत्यग्र इत्यर्थः। ऋन्मोरित्यस्य प्रतिषेधोयम्। इकारान्तपाठे तु शेषाद्वेति प्राप्तः प्रतिषिध्यते।

इति बसाधिकारः।

---

## अथ द्वन्द्वप्रक्रिया।

चार्थे द्वन्द्वः ॥ १ । ३ । ९२ ॥ चार्थे वर्तमानमनेकं सुबन्तं वा समस्यते स च द्वन्द्वसंज्ञः सो भवति। चत्वारश्चार्थाः— समुच्चयोऽन्वाचय इतरेतरयोगः समाहारश्च। परस्परनिरपेक्षाणामनियतक्रमयौगपद्यानां द्व्यादिशब्दानामेकत्राध्यारोपः समुच्चयः। यथा नयमानो गामश्वं पशुं च न तृप्यति वैवस्वतः। गुणप्रधानभावमात्रविशिष्टः समुच्चय एवान्वाचयः। यथा भिक्षामट गां चानय। परस्परसापेक्षाणामवयवभेदानुगतः सम्बन्ध इतरेतरयोगः। अनपेक्षितावयवभेदः सहृतिप्रधानः समाहारः। आद्ययोश्चमन्तरेणापि प्रयोगादसामर्थ्याच्च न सन्धिः। इतरेतरयोगे, प्लक्षन्यग्रोधौ छाया कुरुतः। "समाहारे नप्"। प्लक्षन्यग्रोधम्। द्वाविंशतिरित्यादौ तु लिङ्गमशिष्य लोकाश्रयत्वात्।

राजदन्तादौ ॥ १ । ३ । ९६ ॥ राजदन्तादिषु पूर्वप्रयोगार्हं परं प्रयोक्तव्यम्। पद्वन्द्वयो सामान्यमिदम्। पूर्वमित्यादिना प्राप्तस्य पूर्वनिपातस्यापवादोयम्। अत्रोल्लेखस्तु 'द्वन्द्वे घु' इत्यादेरुत्सर्गस्य बाधनार्थम्। दन्तानां राजा

राजदन्तः । अग्रेवणम् । गणपाठादनुप् । दारगवम् । शब्दार्थौ । क्वचिद्व्यत्ययोपि । अर्थशब्दौ । एवं आक्षिभ्रुवम् । शूद्रार्यम् । आद्यन्तौ, अन्तादी । जायापती, जम्पती, दम्पती । जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते । केशश्मश्रु । पद्वन्द्वयोः सामान्यत्वेपीदमत्रत्यबहुलोत्सर्गाणामेव बाधकमित्यश्रोल्लिखितम् । तथा हि । द्वन्द्वे ऋतुनक्षत्रवाचकानां समानाक्षराणामानुपूर्व्येण वक्तव्यम्(ग.) । शिशिरवसन्तौ । अश्विनीभरण्यौ । समानाक्षराणां किम् ? ग्रीष्मवसन्तौ । घ्यक्षरस्य पूर्वनिपात (ग.) । तृणकाष्ठम् । वर्णानामानुपूर्व्येण(ग.) । ब्राह्मणक्षत्रियौ । विट्शूद्रौ । भ्रातुश्च ज्यायस (ग.)। युधिष्ठिरार्जुनौ । एवं भीमार्जुनौ । संख्याया अल्पीयस्याः(ग.) । नवतिशतम् । अभ्यर्हितस्य च(ग.) । मातापितरौ । दीक्षातपसी ।

द्वन्द्वे सु ॥ १ । ३ । ९८ ॥ द्वन्द्वे स्वन्तं पूर्वं प्रयोक्तव्यम् । मुनिगुप्तौ । अनेकप्राप्तावनियमेनैकं स्वन्तं प्राक् प्रयोज्यम् । मुनिपटुगुप्ताः, पटुमुनिगुप्ताः, पटुगुप्तमुनयः । न्यक्संज्ञा लक्षणाद्भुतेन्वर्थत्वाच्च । द्वन्द्वे न कस्यचिदप्राधान्यमित्यन्यक्त्वादप्राप्ते पूर्वनिपाते वचनमिदम् ।

अजाद्यत् ॥ १ । ३ । ९९ ॥ अजादि अदन्तं द्वन्द्वे पूर्वं प्रयोक्तव्यम् । इन्द्रचन्द्रौ । इन्द्राग्नी । अत्र परत्वात्स्वन्तादस्वन्तस्यापि पूर्वनिपात । बहुष्वनियमेन । इभरमाश्वम्, अश्वरमेभम् ।

---

१ पाठान्तरे [illegible] क्रमेण 'समाजभर्तु, द्वन्द्वे घि, वर्णभ्रात्रनुपूर्वं, संख्यायाल्प, म॰र्घम्' इति सूत्राण्येवोक्तान्येतदर्थम् ।

**अल्पाच्तरम्** ॥ १ । ३ । १०० ॥ अल्पाच्तरं शब्दरूपं द्वन्द्वे प्राक् प्रयोज्यम् । धवखदिरौ । बह्वष्वनियमेन । वीणा-दुन्दुभिशङ्खाः । शङ्खदुन्दुभिवीणाः ।

**प्राणितूर्यसेनाङ्गानां द्वन्द्व एकवत्** ॥ १ । ४ । ७८ ॥ प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां च द्वन्द्व एकार्थवद्भवति । पादौ च पाणी च पाणिपादम् । अर्थग्रहणाद्विशेषणानामप्येकवद्भावः। मार्दङ्गिकपाणविकम्। रथिकपादातम् । सेनाङ्गेषु बहुत्वे एव। नेह, रथिकपादातौ । हस्त्यश्वादौ सेनाङ्गत्वेपि परत्वात्पशुविभाषा वक्ष्यते । समाहारत्वादेकत्वे सिद्धेपि एकत्ववचनं नियमार्थम् ।(१) समाहार एवैषां यथा स्यान्नैवेतरेतरयोगः ।

**चरणानामनूक्तौ** ॥ १ । ४ । ७९ ॥ चरणं कठादिप्रोक्तोऽध्ययनविशेषः । तद्यदाध्येतृषु पुरुषेषु वर्तते तदेह गृह्यते । चरणानां द्वन्द्व एकवद्भवत्यनुवादे । स्थेणोर्लुङन्तयोः प्रयोगे चेयमिष्यते* । उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् । अनूक्तिग्रहणात्प्रथमोपदेशे न । उदगुः कठकालापाः ।

**अध्वर्युक्रतुरनप्** ॥ १ । ४ । ८० ॥ अध्वरमिच्छन्ति अध्वर्यवो यजुर्वेदविदः । येषां यजुर्वेदविहितशाखासु लक्षणं प्रयोगश्च तेषामध्वर्युक्रतूनामनपुंसकलिङ्गानां द्वन्द्व एकवद्भवति । पौण्डरीकातिरात्रम् । अध्वर्युक्रतुः किम्? उद्भिद्बलभिदौ । एतौ सामवेदविहितौ । अनप् किम्? राजसूयवाजपेये । दर्शपौर्णमासावित्यत्र [illegible] न, दधिपयआदित्वात्प्रतिषेधात् ।

---

(१) प्राण्यङ्गत्वेन प्राणित्वा'दप्राणिजाते'रित्यस्याप्राप्त्यां वचनम् ।

**अधीत्याऽदूराख्यानाम्** ॥ १ । ४ । ८१ ॥ अध्ययनेन निमित्तेनाऽदूरनाम्ना द्वन्द्व एकवद्भवति । क्रममधीते क्रमकः । एवं वार्तिक । क्रमकवार्तिकम् । क्रमाध्ययनस्यासन्न वार्तिकाध्ययनम् । अधीत्या किम् ? आढ्यदरिद्रौ । अदूराख्याना किम् ? याज्ञिकवैयाकरणौ । पक्षे तु एकत्वमपि भवति ।

**अप्राणिजातेः** ॥ १ । ४ । ८२ ॥ अप्राणिजातिवाचिनां द्वन्द्व एकवद्भवति । आराशस्त्रि । अप्राणीति किम् ? गौपालिशालङ्कायना । गोत्र च चरणै सहेति जाति । जाते किम् ? हिमवद्विन्ध्यौ । द्रव्यजातीनामेव ग्रहणान्नेह, रूपरसगन्धस्पर्शौ । गमनागमने । जातेरविवक्षाया न । बदरामलकानि तिष्ठन्ति ।

**भिन्नलिङ्गो नदीदेशोऽग्रामोऽपुरम्** ॥ १ । ४ । ८३ ॥ पुरभिन्नग्रामवर्ज्याना नदीदेशवाचिना भिन्नलिङ्गाना द्वन्द्व एकवत् । नदी, उद्ध्येरावति । देश , कुरवश्च कुरुजाङ्गल च कुरुकुरुजाङ्गलम् । भिन्नलिङ्ग किम् ? गङ्गायमुने । मद्रकेकया । नदीदेश किम् ? कुक्कुटमयूर्यौ । कैलाशगन्धमादने । अग्राम किम् ? जाम्बवशाल्किन्यौ । अपुरमिति किम् ? मथुरापाटलिपुत्रम् । अग्राम इति प्रसज्यप्रतिषेध । तेन यत्र पुरग्रामयोर्द्वन्द्वस्तत्रापि नैकत्वम् । नासौर्यैकैतवौ पुरग्रामौ ।

**क्षुद्रजीवाः** ॥ १ । ४ । ८४ ॥ एषा द्वन्द्व एकवत् । दशमशकम् । क्षुद्रजीवा अकङ्काला[1] येषा स्व नास्ति शोणितम् । नाञ्जलिर्यत्सहस्रेण केचिदा नकुलादपि । १ । बहुवचननिर्दे-

(१) कङ्काल —अस्थिपञ्जरम् ।

शास्त्र द्वयोर्द्वन्द्वे । यूकालिक्षौ ।

**येषां च द्वेषः शाश्वतिकः ॥ १ । ४ । ८५ ॥** तेषां द्वन्द्व एकवत् । श्ववराहम् । अहिनकुलम् । शाश्वतिक इति किम् ? गोपालशालङ्कायनाः केनचिन्निमित्तेनाकलहायन्त । 'वा तरुमृगे'-ति प्राप्तं विभाषया मा भूदिति चकारेणावध्रियते । अश्वमहिषम् । काकोलूकम् ।

**वर्णेनार्हद्रूपायोग्यानाम् ॥ १ । ४ । ८६ ॥** येन रूपेणार्हन्त्यमवाप्यते तदिह नैर्ग्रन्थ्यमर्हद्रूपम् । वर्णेन कारणेन शूद्रत्वात् येऽर्हद्रूपस्यायोग्यास्तेषां द्वन्द्व एकवत् । रजकतन्तुवायम् । कुलालवरूटम् । चण्डालमृतपा इत्यत्र तु न, दधिपयआदित्वान्निषेधात् । वर्णेनेति किम् ? मूकवधिराः । एते करणदोषेणायोग्याः । अर्हद्रूपायोग्यानां किम् ? ब्राह्मणक्षत्रियौ ।

**गवाश्वादीनि च ॥ १ । ४ । ८७ ॥** गणपाठोक्तानि गवाश्वादीन्येकवदेव भवन्ति । गवाश्वम् । अत्र पशुविभाषाप्राप्तौ वचनम् । कुब्जवामनम् । स्त्रीकुमारम् । अत्र जात्यविवक्षायामेकवत्त्वम् । दर्भपूतीकम् । तृणविकल्पे प्राप्ते वचनम् । चाद्गणपाठोक्तान्येव । नेह, गोश्वौ, गोश्वम् ।

**वा तरुमृगतृणधान्यव्यञ्जनपश्वऽश्ववडवपूर्वापराधरोत्तरपक्षिणः ॥ १ । ४ । ८८ ॥** तरुमृगतृणधान्यव्यञ्जनपशुविशेषवाचिनामश्ववडवपूर्वापराधरोत्तर इत्येषां, पक्षिविशेषाणां च द्वन्द्व एकवद्वा । प्लक्षन्यग्रोधं, प्लक्षन्यग्रोधाः । आरण्या मृगाः—रुरुपृषतं, रुरुपृषताः । कुशकाशं, कुशकाशाः । व्रीहियवं, व्रीहियवाः ।

( २ ) द्वेषो--वैरं, न तु सहानवस्थान, तेनेह न, छायातपौ ।

दधिघृतं, दधिघृते । ग्राम्याः पशवो—वृष्णिस्तभं, वृष्णिस्तभाः । अश्ववडवम्, अश्ववडवौ । अश्ववडवग्रहणं पर्यायनिवृत्त्यर्थं च । पूर्वापरं, पूर्वापरे । अधरोत्तरम्, अधरोत्तरे । तित्तिरिकपिञ्जलं, तित्तिरिकपिञ्जलाः । सेनाङ्गफलक्षुद्रजीवतरुमृगतृणधान्यपक्षिणां प्रकृत्यर्थबहुत्वे एकवद्भाव इष्टः । तेनेह न, रथिकाश्वारोहौ । बदरामलके । अत्र जातिरप्राणिनामिति प्राप्यते । अप्राणिजातेरित्यत्राबहुवचनान्तविग्रहस्येदमेव ज्ञापकम् । यूकालिक्षे । प्लक्षन्यग्रोधौ । रुरुपृषतौ । इत्यादि । वेति योगविभागोयं द्वन्द्वमात्रे कृतो भवेत् । पूर्वो विधिस्तु नित्यार्थस्तुल्यजात्यर्थ उत्तरः॥ इह मा भूत्, प्लक्षयवाः । हंसपृषताः ।

**विरोधि चानाश्रये ॥ १ । ४ । ८९ ॥** आश्रयो द्रव्यम् । अनाश्रयवाचिनां विरोधिनां द्वन्द्व एकवद्वा । सुखदुःखम् । सुखदुःखे । विरोधि किम्? कामक्रोधौ । अनाश्रये किम्? सुखदुःखौ ग्रामौ ।

**न दधिपयआदीनि ॥ १ । ४ । ९० ॥** एतानि द्वन्द्वरूपाणि नैकवद्भवन्ति । दधिपयसी । ब्रह्मप्रजापती । इध्माबर्हिषी । निपातनात्पूर्वस्य दीत्वम् । येन केनचित्प्राप्तौ प्रतिषेधोयम् । वाङ्मनसे । अत्र वेति योगविभागात्प्राप्तम् । चण्डालमृतपादयश्च (ग.) ।

**अर्थतावत्त्वे च ॥ १ । ४ । ९१ ॥** अर्थो द्रव्यम् । वृत्त्यवयवार्थानामियत्तावगमे द्वन्द्वो नैकवन्नियम्यते । द्वादश इमे मार्द-

(१) वृष्णि —मेष. । स्तभ —अज ।

ङ्किकपाणविकाः ।

**वा समीपे ॥ १ । ४ । ९२ ॥** अर्थानामेतावत्त्वस्य समीपे द्वन्द्व एकवद्वा नियम्यते । उपदशं दन्तोष्ठम् । उपदशाः दन्तोष्ठाः । अत्र अः सान्तः ।

**आनङ् द्वन्द्वे ॥ ४ । ३ । १३८ ॥** ऋतो विद्यायोनिसम्बन्धादित्यनुवर्तते । विद्यायोनिसम्बन्धानामृदन्तानां द्वन्द्वे पूर्वस्यानङादेशो भवति द्यौ परतः । विद्यासम्बन्धे–नेष्टोद्गातारौ । योनिसम्बन्धे– मातापितरौ । नकारोच्चारणं 'रन्तोऽणुः' इति प्रतिषेधार्थम् । ऋदन्तानामिति किम्? पितृपितामहौ । विद्यायोनिसम्बन्धानामिति किम्? कर्तृकारयितारौ । सम्बन्धग्रहणं किम्? पितृभ्रातरौ । मण्डूकप्लुत्या पुत्रे वेत्यतः पुत्रे इत्यनुवृत्य पुत्रेपि धाद्वृकारान्तस्यानङ् । मातापुत्रौ ।

**देवताद्वन्द्वे ॥ ४ । ३ । १३९ ॥** देवतावाचिना च द्वन्द्वे धावानङ् । इन्द्रासोमौ । सूर्याचन्द्रमसौ । द्वन्द्व इति वर्तमाने पुनर्ग्रहणं सहदाननिर्देशाद्यर्थम् । तेनेह न, शिववैश्रवणौ । अत्र न सहदाननिर्देशः शास्त्रे । लोकविज्ञातसाहचर्याणां परिग्रहार्थं वा पुनर्वचनम् ।

**सोमवरुणेऽग्नेरीः ॥ ४ । ३ । १४० ॥** सोमवरुणयोः परतोऽग्नेस्त्वीकारादेशो भवति देवताद्वन्द्वे । " स्तुंत्सोमौ चाग्ने "। अग्नीषोमौ । अग्नीवरुणौ । गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययादिह न षत्वमीकारादेशश्च । अग्निगुणसोमगुणौ अग्निसोमौ मनुष्यौ ।

(१) सात्पदाद्योरिति निषेधेमारम्भ ।

**ऐपीत्** ॥ ४ । ३ । १४१ ॥ ऐभाजि द्यौ अग्नेरिकारादेशो भवति देवताद्वन्द्वे । अग्निश्च वरुणश्च देवते अस्य आग्निवारुणं कर्म । एवमाग्निमारुतम् । देवतार्थेऽणि त्ये उभयो पदयोरैपि कृते ईदानडोरपवादोयम् । विष्णौ प्रतिषेधो वक्तव्यः * । आग्नावैष्णवम् । ऐपीति किम् ? आग्नेन्द्रं । द्योरैपि प्राप्ते नेन्द्रस्येति प्रतिषेधो वक्ष्यते ।

**दिवो द्यावा** ॥ ४ । ३ । १४२ ॥ दिवो द्यावा इत्ययमादेशो भवति द्यौ देवताद्वन्द्वे । द्यौश्च नक्तं च द्यावानक्ते । द्यावाभूमी । अनेकाल्त्वात्सर्वादेशः ।

**दिवसश्च पृथिव्याम्** ॥ ४ । ३ । १४३ ॥ दिवो दिवस इत्ययमादेशो भवति द्यावा च पृथिव्यां द्यौ परतो, देवताद्वन्द्वे । उच्चारणार्थेनाकारेण निर्देशो रित्वबाधनार्थः । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

**उषासोषसः** ॥ ४ । ३ । १४४ ॥ उषस उषासा आदेशो भवति देवताद्वन्द्वे । उषश्च नक्तं चोषासानक्ते ।

**मातरपितरौ वा** ॥ ४ । ३ । १४५ ॥ मातरपितराविति वा निपात्यते । पक्षे आनङि मातापितरौ ।

**द्वन्द्वाच्चुदहपो रार्थे** ॥ ४ । २ । १०८ ॥ रार्थः समाहारः । चवर्गदकारहकारपकारान्ताद्रार्थे वर्तमानाद्द्वन्द्वाट्टो भवति । वाक् च त्वक् च वाक्त्वचम् । श्रीसृजम् । वाग्दृषदम् । छत्रोपानहम् । वाग्विप्रुषम् । द्वन्द्वादिति किम् ? पञ्चानां त्वचां समाहारः पञ्चत्वक् । इति द्वन्द्वसमासः ।

---

( १ ) वीप्सयाग्नेर्न्द्र कल्माह, आग्नमामिति ।

## अथ सान्तप्रकरणम् ।

ऋक्पूरब्धूःपथोऽनक्षे ॥ ४ । २ ।७० ॥ ऋक् पुर् अप् धुर् पथिन् इत्येवमन्तेभ्यः अः सान्तो भवति, अक्षसम्बन्धी चेद्धूःशब्दो न भवेत् । अ अनक्षे इत्यत्र शकन्ध्वादित्वात्पररूपं द्रष्टव्यम् । सामान्येन विधानमेतत् । अर्धर्चम् । अनृचो माणवो ज्ञेयो बह्वृचश्चरणे स्मृत इति केचित् । तेनेह न । अनृकं साम । बह्वृकं सूक्तम् । ललाटपुरम् । स्फटिकापं सरः । राजधुरा । मोक्षपथः । अनक्षे किम् ? अक्षधूः । दृढधूरक्षः ।

द्व्यनगेरीदपः ॥ ४ । ३ । २०२ ॥ द्विशब्दादनवर्णान्ताच्च गेः परस्याप्शब्दस्य ईदादेशो भवति । प्राक् 'परस्यादेः' इतीकारः, पश्चादः सान्तः । द्विर्गता आपो यस्मिन्निति द्वीपः । अन्तःशब्दस्य सविधिणत्वेषु गिसंज्ञोक्ता । अन्तरीपम् । समीपम् । नीपम् । वीपम् । अनगेः किम् ? प्रापम् । परापम् । समापम् ।

देशेऽनोरुः ॥ ४ । ३ । २०३ ॥ अनोः परस्याप उकारादेशो भवति देशाभिधाने । अनूपो देशः । देशे किम् ? अन्वापं वनम् । कूप इत्यादीनि तु पृषोदरादित्वात्साधूनि ।

प्रत्यन्ववात्सामलोम्नः ॥ ४ । २ । ७१ ॥ प्रत्यन्ववपूर्वात् सामान्तात्लोमान्ताच्च अः सान्तो भवति । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् । तिष्ठद्गुप्रभृतय इति षसो, बसो वान्यपदार्थे कार्यः । टसे तु परत्वात्पो वेति विकल्पः । तेन पक्षे प्रतिसाम इत्याद्यपि । कृष्णो-

दक्पाण्डुपूर्वाया भूमेरत्य इष्यते * । गोदावर्याश्च नद्याश्च संख्यायाः * । कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विगोदावरम् । पञ्चनदम् । चात्, सप्तभूमः प्रासादः । क्वचिदन्यत्रापीष्यते * । ऊर्णनाभः । वर्षरात्रः ।

अजीवेऽक्ष्णः ॥ ४ । २ । ७२ ॥ अजीवेर्थे योऽक्षिशब्दस्तदन्तादः सान्तो भवति । कमलस्याक्षि कमलाक्षीव वा, कमलाक्षम् । एवं गवाक्षम् । कटाक्षः ।

स्त्रीधेनुवाग्दारात् पुंसनडुद्मनोगोभ्यः ॥ ४ । २ । ७३ ॥ स्त्रीधेनुवाग्दारपूर्वेभ्यो यथासंख्यं पुंसऽनडुह्मनोगोभ्यः अः सान्तो भवति । स्त्री च पुमांश्च स्त्रीपुंसौ । बसे स्त्रीपुंसः । द्वन्द्वयसाभ्यामन्यत्र न । परिशिष्टेभ्यो द्वन्द्वे एव । धेन्वनडुहौ । वाङ्मनसम् । दारगवम् ।

ऋचः सामयजुर्भ्याम् ॥ ४ । २ । ७४ ॥ अः सान्तः । द्वन्द्वे एव । ऋक्सामे । ऋग्यजुषम् ।

नञ्विसूपत्रिभ्यश्चतुरः ॥ ४ । २ । ७५ ॥ नञादिभ्यः परश्चतुर इत्यत्यान्तो निपात्यते । बसे एव । अदृश्यानि चत्वार्यनेनेति अचतुराः । विचतुराः । संख्येति बसे, उपचतुराः । त्रिचतुराः ।

नक्तंरात्रिमहोभ्यो दिवम् ॥ ४ । २ । ७६ ॥ नक्तंदिवम् । रात्रिन्दिवम् । अहर्दिवम् । अहःशब्दयोगे दिवाशब्दो रात्रिपर्यायः शब्दशक्तिस्वाभाव्यात् ।

द्वित्रिपुरुपादायुषः ॥ ४ । २ । ७७ ॥ द्वित्रिपुरुषेभ्यः

परस्यायुषः अः सान्तो निपात्यते। द्व्यायुषम्। रसादन्यत्र न। द्वयोरायुर्द्व्यायुः। पुरुषस्यायुः पुरुषायुषम्। तासे एवान्यत्र न। तेन द्वन्द्वे—पुरुषायुषी।

**जातमहद्वृद्धादुक्षः** ॥ ४। २। ७८ ॥. जातमहद्वृद्धेभ्यः पर उक्ष इति ससान्तो निपात्यते यसे। जातश्चासावुक्षा च जातोक्षः। महोक्षः। वृद्धोक्षः। नेह, जातस्योक्षा जातोक्षा।

**सरजसोर्वष्ठीवपदष्ठीवाक्षिभ्रुवोपशुनगोष्ठश्वाः** ॥४।२।७९॥ एते अत्यान्ता निपात्यन्ते से। सरजसम्। हसादन्यत्र न। सरजः सलिलम्। ऊरू चाष्ठीवन्तौ च ऊर्वष्ठीवम्। अः सान्ताष्टिखं च निपात्यते। पादौ चाष्ठीवन्तौ च पदष्ठीवम्। सान्तष्टिखं पादस्य पद्भावश्च निपात्यते। अक्षिभ्रुवम्। द्वन्द्वे एवैते। शुनः समीपमुपशुनम्। हसेऽत्र अः सान्तष्टिखाभावो जिश्च निपात्यते। गोष्ठे श्वा गोष्ठश्व।

**पल्यराजहस्तिभ्यो वर्चसः** ॥ ४। २। ८० ॥ अः सान्तस्तासे संभवति। पल्यवर्चसम्। राजवर्चसम्। हस्तिवर्चसम्। गोब्रह्मवर्चसादिभ्योपि वक्तव्यम् *। गोवर्चसम्। ब्रह्मवर्चसम्।

**तमसोऽवसमन्धात्** ॥ ४। २। ८१ ॥ अवसमन्धेभ्यः परात्तमसः अ सान्तो भवति षसे वसे च। अवतमसम्। संतमसम्। अन्धतमसम्।

**निसः श्रेयसः** ॥ ४। २। ८२ ॥ अः सान्तः। निश्चितं श्रेयो निःश्रेयसम्। न बमे इति केचित्। निश्चितं श्रेयोनेनेति निःश्रेयस्कम्।

**श्वसो वसीयसश्च ॥ ४ । २ । ८३ ॥** श्वस परात्वसीयस श्रेयसश्च अ सान्तो भवति । वसुमच्छब्दाद्विन्मतोरुगिति ईयसि मतोरुपि कृते वसीय प्रशस्तवाचक । श्वोवसीयस कुलम् । श्व श्रेयसमस्तु । मयूरव्यंसकादित्वात्स ।

**तमसान्ववाद्रहसः ॥ ४ । २ । ८४ ॥** अ सान्त । तमरहसम् । अनुरहसम् । अवरहसम् ।

**प्रतेरुरस ईपः ॥ ४ । २ । ८५ ॥** प्रते परादुरस ईबर्थवृत्तेर सान्तो भवति । उरसीति प्रत्युरसम् । विभक्त्यर्थे हस । अथवा विग्रहवाक्ये ईबन्ताद सान्तो भवेत् । प्रतिष्ठितमुरसीति । तिकुमाद्य इति पसे, प्रत्युरसम् ।

**द्विस्तावात्रिस्तावानुगवम् ॥ ४ । २ । ८६ ॥** एते निपात्यन्ते । द्विस्तावतीति विगृह्य द्विस्तावा । एव त्रिस्तावा वेदि । मयूरव्यंसकादित्वात्स । अ सान्त, पुवद्भावाभावश्च चात्र निपात्यते । अन्यत्र तु न द्विस्तावती परिखा । अनुगव यानम् । आयामिनेति हस । यथा गौरायतस्तथा यानमप्यायतमित्यर्थ । आयामादन्यत्र न । अनुगु ।

**न स्वतिरिमः ॥ ४ । २ । ८७ ॥** स्वातिरिभ्य परस्य सान्ता न भवन्ति । सर्व सान्तोऽनेन निषिध्यते । सुसखा । सुगौ । अतिसखा । अतिगौ । किंराजा । स्वाङ्गाद्देक्षिमक्षम इति प्राप्तस्य सान्तस्य स्वक्ष इत्यादौ नानेन प्रतिषेध, स्वती पूजार्थे इति प्रातिपदोक्तग्रहणात् । तेनेह च न—अतिक्रान्तो राजानमातिराज । पूजार्थे सुसहचरितस्यातेरग्रहणात् ।

**नञः** ॥ ४ । २ । ६७ ॥ नञः परस्य सान्तो न भवति । असखा । अगौः । इहापि प्रतिपदोक्तस्य षसस्य ग्रहणम् । तेन अराजको देशः । अनृचो माणवकः ।

**पथो वा** ॥ ४ । २ । ६८ ॥ नञः परो यः पथिशब्दस्तदन्ताद्वा सान्तः । अपथम्, अपन्थाः । इहापि नञ्षसस्यानुवृत्तेरन्यत्र न । अपथं वनम् । इति सान्तप्रक्रिया ।

## अथानुब्विधिः ।

**द्यावनुप्** ॥ ४ । ३ । १२० ॥ अधिकारोयम् । द्यावित्यधिकारः प्राग् गोरित्यविकारात् । अनुबधिकारस्तु प्रागानङः ।

**कायाः स्तोकादेः** ॥ ४ । ३ । १२१ ॥ स्तोकादिभ्यः परस्याः काया अनुब् भवति द्यौ परतः । स्तोकान्तिकदूरार्थकृच्छ्रं क्तेनेति ग्रहणम् । स्तोकान्मुक्तः । कतिपयान्मुक्तः । अत्र मुक्तापेतेति सूत्रमपवाद्य परत्वात्स्तोकान्तिकेति सः । स्तोकादेः किम् ? वृकभयम् । ब्राह्मणाच्छसी इति तु रूढिवशादेव सिद्धं गोशब्दवत् । षे कृति बहुलमिति वानुप् ।

**भाया ओज सहोम्भस्तमोञ्जसः** ॥ ४ । ३ । १२२ ॥ ओजआदिभ्यो भाया अनुब् भवति । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् । अञ्जसाकृतम् । साधनं कृतेति षसः ।

**खौ मनसः** ॥ ४ । ३ । १२३ ॥ खुविषये मनसः परस्या भाया अनुप् । मनसागता । खौ किम् ? मनोदत्ता ।

**आज्ञायिनि** ॥ ४ । ३ । १२४ ॥ मनसो भाया अनुब्भ-

वत्याज्ञायिनि घौ । मनसा आजानातीत्येवंशीलो मनसाज्ञायी । पुंसानुजो जनुपान्ध इत्यनुब् वक्तव्यः *। पुंसा हेतुना करणेन वानुजो पुंसानुजः । साधनं कृतेति पसः । यदा तु पुमांसमनुजात स्तदा पुमनुज एव । जनुषा जन्मनान्धो जनुषान्धः । अत्र प्रकृत्यादिभ्य उपसंख्यानमिति भा । भा गुणोक्तचेति पसः ।

टव्यात्मनः ॥ ४ । ३ । १२५ ॥ आत्मनः परस्या भाया अनुब्भवति डडन्ते घौ । आत्मनापञ्चः । प्रकृत्यादिभ्य उपसंख्यानमिति भा । अत्र सविधेरिदमेव ज्ञापकम् । गम्यमानकरणापेक्षया वा भा । आत्मना कृतः पञ्च आत्मनापञ्चः । जनार्दनस्त्वात्मचतुर्थ एवेत्यत्र तु वसः । अन्यपदार्थत्वमत्र व्यपदेशिवद्भावाच्छिलापुत्रकवत् ।

ङेः खौ पराच्च ॥ ४ । ३ । १२६ ॥ खुविषये परात्मशब्दाभ्यां परस्य ङेरनुब्भवति । प्रतिपदोक्तस्य ङेर्ग्रहणम् । परस्मैभाषा । परस्मैपदम् । आत्मनेभाषा । आत्मनेपदम् । तादर्थ्येऽवुक्तः । तादर्थ्ये इदमेव सज्ञापकम् ।

ईपोऽद्धलः ॥ ४ । ३ । १२७ ॥ अदन्ताद्धलन्ताच्च मृद ईपोऽनुब्भवति खौ । अरण्येमाषका । दपदिमाषकाः । खाविति पसोऽत्र । गविष्ठिर. । गवियुधे. ष्ठिर इति षत्वं निपात्यते । उच्चारणसामर्थ्यादेवानुप्च । न त्ववादेशे कृते हलन्तत्वादनुप्, अन्तरङ्गस्यापि विधेर्बहिरङ्गेणोपा बाधितत्वात् । अन्यथा नद्यादिषु यणादेशे हलन्तत्वादनुप् प्रसज्येत । एवं युधिष्ठिर । असौ—हृदिस्पृक्, दिविस्पृगित्यत्र पे कृतीति बहुलत्वादनुप् । अप्सुमतिरिति चानुब्वक्तव्यः * । अद्यावपि । अप्सु भवो अप्सव्य ।

**कारे प्रायः** ॥ ४ । ३ । १२८ ॥ यूथे गृहे क्षेत्रे धान्यादि-वस्तुरक्षानिर्देशार्थं यदवश्य राज्ञे देयं तत्कारः । तद्वाचिनि द्यौ अदन्ताद्धलन्ताच्चेपोनुब्भवति खौ । खुविपये पूर्वेणैव सिद्धे प्रायो-ग्रहणार्थमेतत् ।

**हलि** ॥ ४ । ३ । १२९ ॥ नियमार्थमिदम् । हलादावेव द्यौ नाजादौ । मुकुटेकार्षापणः । समिविमापकः । प्रायोग्रह-णात्क्वचिन्न । यूथपशुः । कारे किम् ? अभ्याहितपशुः । कारा-दन्यस्य देयस्य नामैतत् । अद्धल इत्येव । जङ्घाकार्षापणः । हला-दावेवेति किम् ? अविकटोरणः । कारसंज्ञेयम् ।

**मध्यान्ताद्गुरौ** ॥ ४ । ३ । १३० ॥ मध्यादन्ताच्च गुरौ द्यावीपोऽनुप् । मध्येगुरुः । अन्तेगुरुः । असंज्ञार्थोयं यत्नः । अत एव सः ।

**अकामेऽमूर्द्धमस्तकात्स्वाङ्गात्** ॥ ४ ३ । १३१ ॥ मूर्धम-स्तकवर्जितात्स्वाङ्गादकामे द्यावीपोऽनुप् । कण्ठेकालः । वहेगड्डुः । उदरेमणि । व्यधिकरणत्वेप्यत्र बसः । अमूर्धमस्तकात्किम् ? मूर्ध-शिख । मस्तकशिख । उभयप्रतिषेधात्स्वरूपग्रहणमत्र । तेन शिरसिशिखः । स्वाङ्गात्किम् ? पानशौण्डः । अद्धल इत्येव । अङ्गुलिव्रण । कामे तु मुखकाम । असंज्ञार्थमारम्भः ।

**पे कृति बहुलम्** ॥ ४ । ३ । १३२ ॥ पे बहुलमीपोऽनुब्भ-वति कृदन्ते द्यौ । स्तम्बेरमः । कर्णेजप । बहुलग्रहण सर्वविक-ल्पसंग्रहार्थम् । तेन प्रावृड्वर्षाशरत्कालदिवां जेनुप् * । प्रावृषि-जः । वर्षासुजः । शरदिजः । कालेजः । दिविजः । क्वचिन्न—कुरुचरः ।

मद्रचरः । इनिसिद्धवधातिस्थेषु च न *। स्थण्डिलवर्ती। काम्पिल्यसिद्धः । चक्रबन्धनम् । विषमस्थः । वर्षक्षरशरवराज्ञे द्विधा *। वर्षज, वर्षेजः । क्षरजः, क्षरेजः । शरजः, शरेजः । वरजः, वरेजः । शयवासवासिष्वकालाद् द्विधा * । बिलशयः, बिलेशयः । वनवासः, वनेवासः । ग्रामवासी, ग्रामेवासी । अकालात्किम् ? पूर्वाह्णशयः । बन्धे द्विधा *। चक्रबन्धः, चक्रेबन्धः । स्वाङ्गादिति नित्ये प्राप्ते वचनम् । अद्धल इत्येव । भूमिशयः । गुप्तिबन्धः । ह्रद्ग्रहणे तिकारकपूर्वस्यापि । अवतप्तेनकुलस्थितम् ।

इकालतने कालेभ्यो वा ॥ ४ । ३ । १२३ ॥ इसंज्ञे कालशब्दे तनशब्दे च परौ कालवाचिभ्यो वा ईपोऽलुप् । 'तादौ इः' इति तरतमौ ज्ञेयौ । पूर्वाह्णेतरे, पूर्वाह्णतरे । पूर्वाह्णेतमे, पूर्वाह्णतमे । पूर्वाह्णेतमां, पूर्वाह्णतमाम् । पूर्वाह्णेकाले, पूर्वाह्णकाले । पूर्वाह्णेतने, पूर्वाह्णतने । कालेभ्यः किम् ? शुक्लतरे । अद्धल इत्येव । रात्रितरायां गतः ।

ताया आक्रोशे ॥ ४ । ३ । १२४ ॥ ताया अनुब्भवति षष्ठ्याक्रोशे गम्ये । वृषलस्यभार्या । आक्रोशे किम् ? मोक्षमार्गः । असूयाविरहे दासकुलमित्यपि । ताया इति योगविभागात्— वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वनुप् *। वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । देवानांप्रियादिषु च *। देवानांप्रियः । दिवोदासः । अमुष्यापत्यमामुष्यायणः । आमुष्यपुत्रिका । आमुष्यकुलिका । शुन सौ शेपपुच्छलाङ्गूलेषु* । शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः ।

**पुत्रे वा ॥ ४ । ३ । १३५ ॥** पुत्रे यौ ताया वानुब्भवत्याक्रोशे । दास्या पुत्रः, दासीपुत्रः ।

**ऋतो विद्यायोनिसंबन्धात् ॥ ४ । ३ । १३६ ॥** विद्यासंबन्धिभ्यो योनिसंबन्धिभ्यश्च ऋकारान्तेभ्यस्ताया अनुप् । होतुरन्तेवासी । मातुःपुत्रः । विद्यायोनिसम्बन्धात्किम् ? कर्तृपुत्रः । होतृगृहम् । नात्र विद्यायोनिद्वारकः संबन्धो दृश्यते ।

**वा स्वसृपत्योः ॥ ४ । ३ । १३७ ॥** ऋकारान्तेभ्यो विद्यायोनिसम्बन्धेभ्यस्ताया अनुब्वा स्वसृपत्योः परतः । मातृष्वसा, मातुःष्वसा, मातुःस्वसा । दुहितृपतिः, दुहितुःपतिः ।

इत्यनुप्सविधिः ।

---

## साश्रिता विशेषविधयः ।

**इरूपकल्पचेलड्ब्रुवगोत्रमतहते प्रोऽनेकाचः ॥ ४ । ३ । १५५ ॥** उक्तपुंस्कात्परो य ईत् स्त्रीत्यस्तदन्तस्यानेकाचः प्रो भवति इरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु परतः । इ—कुमारितरा । कुमारितमा । कुमारिरूपा । कुमारिकल्पा । तसादाविति पुंवद्भाव ईकारादन्यत्र सावकाशोनेन बाध्यते । कुमारिचेली । कुमारिब्रुवा । कुमारिगोत्रा । कुमारिमता । कुमारिहता । चेलट् पचादौ पठितः । ब्रूञः से ब्रुव इतीह निपात्यते । चेलड्ब्रुवगोत्राः कुत्सनार्था इति कुत्स्य कुत्सनैरिति सः । मतहताभ्यां विशेषणं विशेष्येणेति सः । अनेकाचः किम् ? स्त्रीतरा । अत्र वा मोरिति वक्ष्यमाणेन विकल्पेन स्त्रितरेत्यपि । उक्तपुंस्कात्किम् ? बदरीतरा ।

-अनुक्तपुंस्कादपि क्वचिदिष्यते लक्ष्मितरा। तन्त्रितरा। ईदनुवृत्तिः किम्? गुप्ततरा। स्त्रीत्यः किम्? ग्रामणीतरा।

वा मोः ॥ ४ । ३ । १५६ ॥ मुसंज्ञस्य वा मो भवति ज्ञादिषु। अनेकाच ईदन्तस्य पूर्वेणैव पुरस्तादपवादेन नित्यः मः। अनेन तु शेषादेकाच ईदन्तस्य ऊदन्तस्य च सर्वस्य विकल्पो ज्ञेयः। स्त्रीतरा, स्त्रितरा। वामोरूतरा, वामोरुतरा। उक्तपुंस्कादनूरिति निवृत्तम्। एकार्थे इति वर्तते। तेन स्त्रिया हृतः स्त्रीहृत इत्यत्र मो न। कृत्संज्ञकस्य मोर्नेत्येके। लक्ष्मीतरा।

उगितश्च ॥ ४ । ३ । १५७ ॥ उगितश्च परस्य मोर्वा मो भवति ज्ञादिषु। श्रेयसितरा, श्रेयसीतरा। चात्पक्षे पुंवत्। श्रेयस्तरा। व्यवस्थितविभाषयाऽञ्चतेर्नित्यम्। प्राचितरा।

हृदयस्य हृल्लेखयाऽण्लासेषु ॥ ४ । ३ । १६१ ॥ हृदयस्य हृवादेशो भवति लेखादिषु परतः। हृदयं लिखतीति हृल्लेखः। हृदयाय हितं हृद्यम्। ( ३ । ४ । ५ ) प्राण्यङ्गेति वक्ष्यते यः। हृदयस्य भावो हार्दम्। ( ३ । ४ । १२० ) युवादिषु हृदयादेशो इति पाठादण् वक्ष्यते। अणि घञि वा हृल्लासः। लेखेत्यण्णन्तग्रहणम्। घञन्ते तु नेष्यते। एवं च लेखग्रहणं ज्ञापकं–घ्यधिकारे त्यग्रहणे स्वरूपग्रहणं, न तदन्तविधिः।

वा स्यण्रोगशोके ॥ ४ । ३ । १६२ ॥ हृदयस्य वा हृत्,

---

( १ ) घञन्तलेखस्यानभिधानादण्णन्तत्वादेव हृल्लेख इत्यस्य सिद्धौ लेखग्रहणं व्यर्थं सज्ज्ञापयति, भवत्येषा परिभाषा, घ्यधिकारे त्यग्रहणे तदन्तग्रहणं नास्तीति। एतस्याः फलं तु 'ङस्यक्त्य' इति सूत्रेण कुमारी माद्यन्निरूपेत्यत्र पूर्वपदस्य माभावो बोध्यः।

ष्यण्रोगशोकेषु परतः । सौहार्दं, सौहृदय्यम् । अत्र ब्राह्मणादित्वात् हृत्सिन्धित्वति पदद्वयस्यैप् । हृद्रोगः, हृदयरोगः । हृच्छोकः, हृदयशोकः । हृदयसमानार्थेन हृच्छब्देनाप्युभयसिद्धौ प्रयासोयमन्येष्वप्युत्तरपदेषु हृत्प्रयोगो न स्यादित्येतदर्थः ।

**पादस्य पदाज्यातिगोपहतेषु ॥ ४ । ३ । १६३ ॥** पादस्य पद इत्ययमादेशो भवति आज्यादिषु परतः । पादाभ्यामजति अतति गच्छति वेति पदाजिः, पदातिः, पदगः । (उणादौ) 'अज्यतिभ्यां पादे' इतीण्त्ये वाक्सः । केवलेन वाजिना साधनं कृतेति पसः । अत एव निपातनादजेर्वीभावाभावः । पदोपहतः । प्रकृत्यन्तरेणापि सिद्धे पादशब्दस्यात्र विषये प्रयोगो मा भूदिति प्रयासः ।

**पद्ये ॥ ४ । ३ । १६४ ॥** पादस्य पदादेशो भवति ये परतः । पादं विध्यन्ति पद्याः शर्कराः । तादर्थ्ये तु (४ । २ । ३२) 'पाद्यार्घ्ये' इति निपातनान्न पदादेशः । पादार्थमुदकं पाद्यम् । सामर्थ्याच्चदन्तस्य न । द्वाभ्या पादाभ्यां क्रीतं द्विपाद्यम् । पादाभ्यां चरतीति तु पर्पादौ पाद' पदिति पाठाद्दृटा सिद्धम् । पदिकः ।

**हिमकापिहतौ ॥ ४ । ३ । १६५ ॥** पादस्य पदादेशो भवति हिमकापिहतिषु । पद्धिमम् । पत्कापी । पद्धतिः । णिनि तदन्तस्यापि । परमपत्कापी ।

**ऋचः शे ॥ ४ । ३ । १६६ ॥** ऋचः पादस्य शे परे पद्भवति । पादं पादं शंसति पच्छो गायत्रीं शंसति । ऋचः

१ विध्यत्यकरणेनेति (३।६।१६४) सूत्रेण यः ।

किम्? पादशः कार्षापणं ददाति।

**वा निष्कघोषमिश्रशब्दे** ॥ ४ । ३ । १६७ ॥ एषु पादस्य वा पद्भवति। पन्निष्कः, पादनिष्कः। पद्घोषः, पादघोषः। पन्मिश्रः, पादमिश्रः। पच्छब्दः पादशब्दः।

**उदकस्योद् धोश्च खौ** ॥ ४ । ३ । १६८ ॥ उदकस्योद इत्ययमादेशो भवति धौ धुभूतस्य चोदकस्य खुविषये। उदमेघः। उदवासः। उदवाहनः। उदधिः। उदबाहुः। लोहितोदा नदी। खौ किम्? उदकपर्वतः। उदधिर्घट इति तूदकं धीयतेऽस्मिन्नित्युपमानाद्भविष्यति।

**पेषमि** ॥ ४ । ३ । १६९ ॥ उदकस्योदः। उदकेन पिनष्टि उदपेषं पिनष्टिः।

**वैकहलि पूर्ये** ॥ ४ । ३ । १७० ॥ तुल्यजातीयेनासहायो यो हल् तदादौ धौ पूर्ये उदकस्योद वा भवति। उदकेन पूरयितव्यो घट उदघटः, उदकघटः। एकहलीति किम्? उदकस्थाली। पूर्ये किम्? उदकगिरिः। अखाविप्राप्ते विभाषेयम्।

**मन्थौदनसक्तुविन्दुवज्रभारहारवीवधगाहे** ॥ ४ । ३ । १७१ ॥ एषु परत उदकस्योद वा भवति। अपूर्योर्थोयं यत्नः। उदकेन मन्थः उदमन्थः, उदकमन्थः। इत्यादि।

**इकः प्रोऽङ्याः** ॥ ४ । ३ । १७२ ॥ अङ्यन्तस्येगन्तस्य वा प्रो भवति धौ। ग्रामणिपुत्रः, ग्रामणीपुत्रः। अलाबुकर्कन्धुदृक्षुफलम्। अत्र पूर्वपूर्वस्य प्रादेशे उत्तरेण सह सः। इकः किम्?

(१) उदकं धीयतेऽस्मिन्निति विग्रहेऽधिकरणे किस्य।

दासीपुत्रः । व्यवस्थितविभाषया ञिसंज्ञकेषुवां न । काण्डीभूतम् । श्रीकुलम् । भ्रूकुलम् । भ्रुकुंसादीनां तु भवत्येव । क्वचिदन्यदेव । तेनाकारश्चान्तादेशः । भ्रकुंसः, भ्रुकुंसः । भ्रूकुंसः । एवं भ्रकुटिः, भ्रुकुटिः, भ्रूकुटिः ।

**घे ञ्यस्य पुत्रपत्योर्जिः** ॥ ४ । ३ । ९ ॥ अपत्यार्थाणः स्त्रियां ञ्यादेशो वक्ष्यते इति । तदन्तस्य पुत्रे पत्यौ च घौ जिर्भवति षसे ।

**जेः** ॥ ४ । ३ । २३४ ॥ जेर्दीर्भवति घौ । करीषगन्धेरपत्यं स्त्री कारीषगन्ध्या । तस्याः पुत्रः कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । 'इकः प्रोऽङ्च्याः' इति प्रादेशस्तु न, ग्रामणिकुलादौ सावकाशस्य तस्य परदीत्वेन बाधनात् ।

**त्वे ङ्यापोः क्वचित्खौ च** ॥ ४ । ३ । १७३ ॥ त्वे परतो ङ्यन्तस्यावन्तस्य च क्वचित्प्रो भवति, खौ च घौ । अजत्वम्, अजात्वम् । रोहिणित्वम्, रोहिणीत्वम् । त्वे छान्दसः प्रयोग इत्यपरे । खौ घौ, भरणिमित्रः । शिलवहः । शिंशपस्थलम् । क्वचिद्ग्रहणान्नेह-नान्दीकरः । नान्दीघोषः । लोपिकापिण्डम् । क्वचिद्ग्रहणं बहुलार्थम् ।

**इति चैका** ॥ ४ । ३ । १७४ ॥ एका इत्यस्य प्रो भवति इति घौ च । एकस्या आगतम् एकमयम् । एकत्वम् । गुणवाचकस्य तु त्वतलोर्गुणवचनस्येत्यनेनैव प्रतिषेधादत्र द्रव्यवाचकस्य ग्रहणम् । एकदुग्धम् । एकप्रियः ।

**मालेषीकेष्टकानां भारितूलचिते** ॥ ४ । ३ । १७५ ॥

मालादीनां म्रो भवति यथाक्रमं भार्यादिषु परेषु । मालां बिभर्तीति मालभारी । इषीकतूलम् । इष्टकचितम् । क्वचिदित्यनुवृत्तेस्तदन्तानामपि । उत्पलमालभारिणी । मुञ्जेषीकतूलम् । पक्वेष्टकचितम् ।

**सत्यागदास्तोः कारे ॥ ४ । ३ । १७९ ॥** सत्यागदास्तूनां मुम् भवति कारशब्दे यौ । सत्यङ्कारः । अगदङ्कारः । अस्तुङ्कारः ।

**रात्रेः कृति प्रभाचन्द्रस्य ॥ ४ । ३ । १८० ॥** रात्रिशब्दस्य वा मुम् भवति कृति यौ । रात्रिञ्चरः, रात्रिचरः । रात्रिमाटः, राज्याटः । असाते विकल्पोयम् । खिति कृति तु पूर्वनिर्णयेन खित्यझेरिति नित्यमेव मुम् वक्ष्यते । रात्रिमन्यमहः ।

**सहस्य सः खौ ॥ ४ । ३ । १८६ ॥** सहस्य सादेशो भवति खुविषये यौ परतः । साश्वत्थम् । सशिंशपम् । खौ किम्? सहकृत्वा ।

**ग्रन्थान्तेऽधिके ॥ ४ । ३ । १८७ ॥** ग्रन्थान्तेऽधिके च वर्तमानस्य सहस्य सो भवति । ग्रन्थान्ते—सकल ज्योतिषमधीते । कलासहचरितो ग्रन्थोऽपि कला । हेऽकाले इत्यसाते विधिः । माषेण सह ( अधिकः ) समाषः कार्षापणः । वा नीच इति विकल्पे प्राप्ते विधि ।

**द्वितीयेऽनुपाख्ये ॥ ४ । ३ । १८८ ॥** द्वयो· सहयुक्तयोर्न्यग्भूतो द्वितीय । स एवाप्रत्यक्षोऽनुपाख्य । साग्निः कपोतः । सराक्षसीका शाला । अग्निराक्षस्यौ हि प्रत्यक्षेणानुपलभ्यमाने कपोतादिभिरनुमीयमानत्वादनुपाख्ये । अनुमीयमाने इत्यर्थः ।

मनुपाख्ये किम्? सहच्छात्त्रः सच्छात्त्रो वोपाध्यायः।

**समानस्य स ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ४ । ३ । १९२ ॥** समानस्य सो भवति ज्योतिःप्रभृतिषु परतः। सज्योतिरित्यादि। समानस्येति योगविभागादन्येष्वपि। तेन सधर्म्मा। सपक्षः। सोदरः। समाने तीर्थे भवः सतीर्थ्यः।

**सब्रह्मचारी ॥ ४ । ३ । १९३ ॥** सब्रह्मचारीति निपात्यते चरणे गम्यमाने। समानो ब्रह्मचारी, समाने ब्रह्मणि आगमे व्रतं चरतीति वा सब्रह्मचारी।

**वोदर्ये ॥ ४ । ३ । १९४ ॥** समानस्य वा सो भवति उदर्ये यौ। समानोदरे शयितः सोदर्यः, समानोदर्यः। 'समानोदरे शयित' इति वक्ष्यते यः।

**दृग्दृशदृक्षवतौ ॥ ४ । ३ । १९५ ॥** एषु परतः समानस्य सो भवति। सदृक्। सदृशः। वतुरुत्तरार्थः।

**छकारकेऽन्यस्य दुक् ॥ ४ । ३ । २०४ ॥** अन्यस्य दुगागमो भवति छे कारके च परतः। अन्यस्येदमन्यस्मिन्भवं वा अन्यदीयम्। आयनेयीति छस्येयः। अन्यस्य अन्यो वा कारकः अन्यत्कारकः।

**अताभास्थस्याशीराशास्थास्थितोत्सुकोतिरागे ॥ ४ । ३ । २०५ ॥** आशीरादिषु परतस्तु अताभास्थस्यैवान्यस्य दुग् भवति। अन्या आशी अन्यदाशी। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यद्रागः। अता-

भास्थस्य किम्? अन्यस्याशीः अन्याशीः । अन्येनास्थितः अन्यास्थितः ।

**वार्थे** ॥ ४ । ३ । २०६ ॥ अन्यस्य वा दुग्भवत्यर्थे घौ । अन्योन्यस्मै वार्थो अन्यदर्थः, अन्यार्थः । अताभास्थस्येत्येव । तेनान्यस्यान्येन वार्थो अन्यार्थः ।

**कत् कोः पेचि** ॥ ४ । ३ । २०७ ॥ पसे कोः कद्भवत्यजादौ घौ । कुत्सितोऽजः कदजः । कदन्नम् । पे किम्? किमो राजा । अचि किम्? कुपुरुषः । योगविभागात् त्रिशब्दे चापीष्यते । कुत्सितास्त्रयः कत्त्रयः । किमो वा त्रौ कद्वक्तव्यः * । के त्रयः कत्त्रयः ।

**रथवदयोः** ॥ ४ । ३ । २०८ ॥ पसे कोः कद्भवति रथवदयोः परतः । कद्रथः । कद्वदः ।

**तृणे जातौ** ॥ ४ । ३ । २०९ ॥ समुदयेन जात्यभिधाने कोः कद्भवति तृणे घौ । कत्तृणा जातिः । तस्या अवयवः कत्तृणम् । जातौ किम्? कत्तृणानि ।

**का पथ्यक्षयोः** ॥ ४ । ३ । २१० ॥ कोः का भवति पथ्यक्षयोः परतः । कुत्सितः पन्थाः कापथः । काक्षम् । पे इति निवृत्तम् । तेनाकारान्तेनाक्षशब्देन बसः, 'स्वाङ्गाट्टे' इति कृतसान्तेनाक्षिशब्देन वा बसः । पथशब्दोप्यकारान्तोऽस्ति । तस्य, कापथम् ।

**ईषदर्थे** ॥ ४ । ३ । २११ ॥ ईषदर्थेऽपि कोः का भवति । ईषत्कटुकं काकटुकम् । कालवणम् । अजादावपि परत्वात्कादेशः । काम्लम् ।

**पुरुषे वा ॥ ४ । ३ । २१२ ॥** पुरुषे घौ कोः का भवति वा । कुत्सितः पुरुषः कापुरुषः, कुपुरुषः । अप्राप्ते विकल्पोयम् । ईषदर्थे तु पूर्वनिर्णयेन नित्यमेव ।

**कव उष्णे ॥ ४ । ३ । २१३ ॥** कोः कवं का च वा भवति उष्णे घौ । कवोष्णम् कोष्णम् । पक्षे कत्कोरिति कत् । कदुष्णम् । अनीषदर्थे कदुष्णमेव ।

**पृषोदरादीनि यथोपादिष्टम् ॥ ४ । ३ । २१४ ॥** पृषोदरप्रकाराणि शब्दरूपाणि यथार्थे उपदिष्टानि तथैव साधूनि भवन्ति । यथा तेषु वर्णनाशागमविकाराः शिष्टैः प्रयुक्तास्तथैव तेषां साधुत्वमित्यर्थः । पृषदुदरं यस्याः पृषोदरा कन्या । तस्यात्र खम् । महित्थः । सखम् । स्वे ङ्यापोरिति प्रः । वारिवाहको बलाहकः । वारिशब्दस्य वः परस्य चादेर्लत्वम् । एवं जीवनस्य मूतो जीमूतः । मह्यां रौतीति मयूरः । शवस्य शयनं श्मशानम् । ऊर्ध्वं खमस्य उदूखलः । पिशिताशः—पिशाचः । ऊर्ध्वकर्ण उलूकः । मोहनस्य खस्य माला मेखला । षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च । धाशब्दे तु वा षष उत्वम् । वयसि दन्तस्य दतृ । षड् दन्ता अस्य षोडन् । षट् च दश च षोडशः । षड्भिः प्रकारैः षोढा, षड्धा वा । दिक्शब्देभ्यस्तीरस्य तारभावः । दक्षिणतारम् । उत्तरतारम् । आकृतिगणोयम् ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धूनां तथार्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥१॥

कर्णे लक्षणस्याऽविष्टाष्टपञ्चाभिन्नच्छिन्नच्छिद्रस्रुवस्व-

स्तिकस्य ॥ ४ । ३ । २१८ ॥ विष्टादीन्वर्जयित्वा चिह्नविशेषवाचिनो दीर्घभवति कर्णे घौ । दात्रामिव कर्ण यस्य दात्राकर्ण । द्व्यङ्गुलाकर्ण । लक्षणस्य किम् ? शोभनकर्ण । इह तत्त्वाख्यानमेव, न चिह्नविशेष । एव लम्बकर्ण । अविद्धकर्ण । अविष्टादे किम् ? विष्टकर्ण । अष्टकर्ण । पञ्चकर्ण । भिन्नकर्ण । छिन्नकर्ण । छिद्रकर्ण । स्रुवकर्ण । स्वस्तिककर्ण ।

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ४ । ३ । २१९ ॥ क्वन्तेषु नह्यादिषु परत पूर्वपदस्य दीर्घभवति । उपानत् । उपावृत् । प्रावृट् । स्वावित् । अतीरुक् । तुराषाट् । परीतत् । क्वौ किम् ? उपनहनम् । तिकारकयोर्दीर्घत्वमिष्यते । तेनेह न, मलरुक् ।[1]

गिरिवने किंशुलुककोटराद्यो: खौ ॥ ४ । ३ । २२० ॥ यथासख्य गिरिवनयो परत किंशुलुकादीना कोटरादीनां च दीर्घभवति खौ । किंशुलुकागिरि । अञ्जनागिरि । वन पुरगेति णत्वे, कोटरावणम् । पुरगावणम् । किंशुलुककोटराद्यो किम् ? नन्दनवनम् ।

वले ॥ ४ । ३ । २२१ ॥ वले त्ये परत पूर्वस्य दीर्घभवति खौ । आसुतीवल । रज कृष्यासुतिपरिषदो वल इति मत्वर्थे वक्ष्यते वल ।

मतौ वह्वच्छरादेरनजिरादेः ॥ ४ । ३ । २२२ ॥ अ-

---

१ उपनह्यतीत्युपानत् । उपवर्तत इत्युपावृत् । प्रवर्षन्ति प्रावृट् । स्वमात्मानं विध्यतीति स्वावित् । अतिरोचने इति अतीरुक् । तुर सहते इति तुराषाट् । परितनोतीति परीतत् ।

जिरादीन्वर्जयित्वा बह्वचः शरादीनां च दीर्घभवति खौ मतौ परतः। पुष्करावती । शरावती । शर, वंश, धूम, अहि, कपि, मणि, हनु, मुनि, शुचि इति शरादिः । बह्वच्छरादेः किम् ? इक्षुवती । मधुवती । अनाजिरादेः किम् ? अजिरवती । चक्रवाकवती । खावेव । नेह, वलयवती ।

**इको वहेऽपीलोः** ॥ ४ । ३ । २२३ ॥ वहे घौ खौ इगन्तस्य दीर्घभवति, न तु पीलोः । मुनीवहम् । इकः किम् ? पिण्डवहम् । पीलोस्तु पीलुवहम् । अपील्वादेरिति वक्तव्यम्* । दारुवहम् ।

**गेः काशे** ॥ ४ । ३ । २२४ ॥ इगन्तस्य गेः काशे घौ दीर्घभवति । नीकाशम् । इकः किम् ? प्रकाशः ।

**घञ्यऽमनुष्ये प्रायः** ॥ ४ । ३ । २२६ ॥ घञन्ते घौ गेः प्रायो दीर्घभवत्यमनुष्योभिधेये । अपामार्गः । नीवारः । प्रासादः । अमनुष्ये किम् ? निषादः । प्रायोग्रहणान्नेह, प्रसादः । निवेशः । प्रकाशः । वेशादिपूभयम् । प्रतिवेशः, प्रतीवेशः । गेः किम् ? चन्दनसारः ।

**खावष्टनः** ॥ ४ । ३ । २२७ ॥ खुविषये अष्टन्शब्दस्य दीर्घभवति घौ । अष्टापदः । अष्टाबाहुः । अष्टाविटपः । खौ किम् ? अष्टगुणः सिद्धः । अष्टनः कपाले हविषि वक्तव्यम्* । अष्टाकपालं हविः । संस्कृतार्थे आगतस्याणः 'तस्योबनपत्ये' इत्युव्वक्ष्यते । गवि च युक्ते * । अष्टभिर्गोभिर्युक्तमष्टागवम् ।

चितेः कपि ॥ ४ । ३ । २२८ ॥ चितेर्दीर्घभवति कपि प-
रतः । द्विचितीकः ।

विश्वस्य वसुराटोः ॥ ४ । ३ । २२९ ॥ विश्वावसुः ।
विश्वाराट् । नेह, विश्वराजौ ।

नरे खौ ॥ ४ । ३ । २३० ॥ खुविषये विश्वस्य दीर्घभवति
नरे खौ । विश्वानरः । खौ किम् ? विश्वनरो राजा ।

ऋषौ मित्रे ॥ ४ । ३ । २३१ ॥ ऋषावभिधेये विश्वस्य
दीर्घभवति मित्रे खौ । विश्वामित्रो नाम ऋषिः । ऋषौ किम् ?
विश्वमित्रः सुजनः ।

अन्यस्यापि ॥ ४ । ३ । २३२ ॥ कस्य ? यस्य शिष्टै-
र्दीर्घत्वं प्रयुक्तम् । यथा—शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु
दीर्घभवति । श्वादन्तः । इत्यादि । एकादश । केशाकेशी ।
अद्यापि, । पूरुषः पुरुषो वा ।

कुस्तुम्बुरुगोष्पदास्पदाश्चर्यावस्करापस्करापरस्परवि-
ष्किरमस्करमस्करिप्रतिष्कशमष्कण्वहरिश्चन्द्रपारस्करप्रभृती-
नि च ॥ ४ । ३ । ११६ ॥ एते शब्दाः ससुट्का निपात्यन्ते ।
कुस्तुम्बुरु धान्याकतृणजातिः । तत्फलान्यपि कुस्तुम्बुरूणि ।
जातेरन्यत्र कुतुम्बुरूणि । कुत्सितानि तिन्दुकीफलानीत्यर्थः ।
सेवितेऽसेविते प्रमाणे च गोष्पदम् । सेविते, गावः पद्यन्ते य-
स्मिन्देशे स गोष्पदः । सेवितत्वप्रतिषेधेऽसेविते, न विद्यते
गवां पदमस्यामगोष्पदा अरण्यानी । प्रमाणे, गोष्पदपूरं वृष्टो
देवः । एतेषु किम् ? गोपदम् । आस्पदं प्रतिष्ठायाम् ।

अन्यत्र आपदम्। **आश्चर्यमद्भुतेर्थे** । आश्चर्यमाकाशेऽनिबन्धनानि नक्षत्राणि न पतन्ति । आचर्यं वृत्तमन्यत्र। **अवस्करो वर्चस्कः** । कुत्सितं वर्चो वर्चस्कम् । तत्सम्बन्धाद् देशोपि वर्चस्कः । अवकरोन्यत्र । **अपस्करो रथाङ्गे** । अपकरोन्यत्र। **अपरस्पर इति क्रियासातत्ये**। अपरस्परा[1] सार्था गच्छन्ति । सततं गच्छन्तीत्यर्थः । अन्यत्र, अपरे च परे च अपरपराः । **विष्किरः शकुनौ, वा सुडागमः** । विष्किरः शकुनिर्विकिरो वा । **मस्करमस्करिणौ वेणुपरिव्राजकयोः** । अन्यत्र मकरो ग्राहः, मकरी समुद्रः । **प्रतिष्कश इति निपात्यते सहायश्चेत्** । प्रतिकशोन्यत्र । **प्रस्कण्वहरिश्चन्द्रौ ऋषी चेत्** । अन्यत्र प्रकण्वो देशः, हरिचन्द्रो माणवकः । **पारस्करादीनां च खौ सुडागमो निपात्यते** । पारस्करो देशः । कारस्करो वृक्षः । रथस्या नदी। किष्कुः प्रमाणम् । किष्किन्धा गुहा । तद्बृहतोः करपत्योश्चोरदेवतयोस्तलः च । तस्कर । बृहस्पति । अन्यत्र तत्करो, बृहत्पतिः । अजस्तुद कास्तीर च नगरम् । अन्यत्र अजतुदं कातीर च ।प्रातुम्पतौ गवि कर्तरि । प्रतुम्पतिर्गौः । अन्यत्र प्रतुम्पति . स्त्री । आकृतिगणोयम् ।

**प्रायाच्चिचिचित्तयोः** ॥ ४ । ३ । ११७ ॥ प्रायात्परयोश्चिचिचित्तयोः सुड् भवति । प्रायश्चिचिः । प्रायश्चित्तम् ।

इति साश्रिता विशेषविषयः ।

---

१ किं किं दशाऽऽदि विग्रहः ।

## सरूप परिशिष्टम्।

स्वाभाविकत्वादऽभिधानस्यैकशेषानारम्भः ॥ १ । १ । १०० ॥
उक्तमेतल्लिङ्गादौ। ननु जात्यभिधाने एकशब्देनानेकव्यक्त्यभिधानं स्यान्न द्रव्याभिधाने, द्रव्यस्य व्यावृत्ताभिधानबुद्धिलिङ्गत्वात्। तन्न, निवृत्तशब्दस्यार्थप्रत्यायनेऽवाशिष्टशब्दवृत्तिवदेकस्यानेकत्रापि वृत्तिसंभवात्। स्वरूपाणां द्वन्द्वनिवृत्त्यर्थोऽपि नैकशेषोऽनभिधानादेव तथा सिद्धेः। यथा द्वौ च द्वौ च द्वे इति न भवति। विरूपशब्दानां समानार्थानामपि न, वृद्धयूनोः प्रसङ्गः, जीवति वंश्ये तु वृद्धेन द्वयमभिधानादजीवति च द्वन्द्वानभिधानात्। यथा गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। यत्र त्वभिधानं तत्र स्यादेव। यथा गर्गगार्ग्यौ। स्त्रीपुंसोरपि तथैव स्यात्, सामान्याभिधाने पुंसा द्वयोरभिधानात्। यथा कठश्च कठी च कठौ। उभयधर्मप्राधान्ये तु नदनदीपतिरित्यपि। एवं भ्रातृपुत्रयोरपि स्वसृदुहितृभ्याम्। नपश्चानपा, प्रश्नादौ सामान्यतया प्रयोगे नप एव संभवात्। यथा शुक्लमिदम्। पितुर्मात्रा, श्वशुरस्य श्वश्र्वाश्च न, जात्यभिधानात्। त्यदादिशेषश्च न, अन्यापेक्षया त्यदादेः पूर्वापेक्षया परस्य च सामान्यार्थपरत्वाल्लाघवार्थमेकप्रयोगे तदपेक्षणात्। यथा, देवश्च स च तौ। स च यश्च यौ। ग्राम्यपशुसंघेष्वतरुणेषु स्त्रीति च न वक्तव्यं, लिङ्गस्यानुपदेशाल्लोकाश्रयेण तत्सिद्धेः। एव क्रोष्टुशब्दार्थे, पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्नाद्यर्थं वा नादेशवचनं न्याय्यं, यस्य यत्र प्रयोगस्तस्य तत्र लोकाश्रयेण निर्धारणात्। तथापि मन्निर्धारणे सर्वं निर्धारितं न स्यात्।

चतुर्षु समासेषु, हसः पूर्वपदार्थप्रधानः सञ्शिश्च प्रायेण, उन्मत्तगङ्गमित्यादौ तद्व्यभिचारात्। षसे उत्तरपदार्थप्रधानतापि प्रायशो, निस्त्रिंशादौ तदपवादात्। बसेऽन्यार्थप्रधानतापि प्रायेण, त्रिदशादौ तद्व्यभिचारात् । द्वन्द्वः पूर्वोत्तरपदार्थप्रधान इत्यप्युत्सर्गवचो; दन्तोष्ठादौ तदनुपलब्धेः ।

अवयवावयविनोस्तादात्म्यादवयववाचको यः शब्दः सोवयविवाचकोपि संभवतीति पृथगेकदेशिना समासो न करणीयः। यथा पूर्वकायः अर्धपिप्पली वा। अत्र कायस्य पूर्वं पूर्वकायः, पिप्पल्या अर्धमर्धपिप्पलीति च यथा तथा पूर्वः कायः—पूर्वकायः, अर्धा पिप्पली-अर्धपिप्पलीति च वचनेप्यऽर्थबोधो भवति, लोके तथाप्यर्थाश्रयणात् । अत एव 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे, अर्धं नपुंसकम्' इत्यादि वचनं नार्थकृत् स्यात् ।

द्वन्द्वे घुवल्लिङ्गम् ॥ १ । ४ । १०२ ॥ द्वन्द्वे पूर्वोत्तरपदानां प्राधान्याल्लिङ्गविधिराशङ्क्येत । अत उक्तं-घुवल्लिङ्गं द्वन्द्वे भवति । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तदपवाद च,-

अश्ववडवौ पूर्ववत् ॥ १ । ४ । १०३ ॥ इतरेतरयोगे द्वन्द्वे एव । अश्ववडवौ इति निर्देशेन सिद्धे पूर्वग्रहणमर्थातिदेशार्थम्। तेन, अश्ववडवावित्यपि। अन्यथा वचनान्तरं न स्यात् ।

पसे बसे च लिङ्गनिर्देशो न कृतो, यत्र यदर्थप्राधान्यं तत्र लोकाच्चिह्लिङ्गार्थसंमत्ययात् । तत एवात्र परवत्पूर्ववद्वेति लिङ्गं वक्तुं न शक्यते, निष्कौशाम्बिरयं, संज्ञाविधिरयमित्यादौ परपूर्वत्वानियमात् । तत एवोत्सर्गेण लिङ्गविधिर्लोकाश्रयादेव । अन्यथा कतिचिल्लिङ्गनिर्देशेऽप्यसर्वसंग्रहात् । इति सस्य परिशिष्टम् ।

**स नप् ॥ १ । ४ । ९३ ॥** यस्यैकवद्भाव उक्तः स नप्भवति । द्वन्द्वे रसे चैकवद्भाव उक्त समाहारत्वादिति तत्रैव नप्त्वम् । द्वन्द्वे, दन्तोष्ठम् । रसे, द्विनावम् । पञ्चाग्नि । अजाद्यतष्टाबित्यतो दूरानुवृत्तेरकारान्ताद्रात् 'रात्' इति ङीत्य उक्तः । षण्णगरी । वावन्त इति व० । पञ्चखट्वी, पञ्चखट्वम् । पात्रादिभ्यः प्रतिषेधश्च व० । पञ्चपात्रम् । त्रिभुवनम् । द्वन्द्वे धुवलिङ्गापवादार्थं वचनमिदम् । वाच्यप्रकरणादन्यत्र कामचारेण लिङ्गम् । अत एव नपुंसकस्यापि धु इत्यस्य 'धौ ण' इति पुंसा निर्देशो न दोषाय ।

**एकविभक्ति ॥ १ । ३ । ९४ ॥** वोक्त न्यगित्यतो न्यगनुवर्तते । एका नियता विभक्ती यस्य तत्पदमपि से न्यक्संज्ञं भवति ।

**परम् ॥ १ । ३ । ९५ ॥** 'एकविभक्ति' इत्यनेन विहितन्यक्सञ्ज्ञं परं प्रयोक्तव्यम् । न्यक्त्वात्पूर्वमिति पूर्वनिपाते प्राप्ते वचनमिदम् । यथा निष्कौशाम्बि. । अत्र 'निरादय' क्रान्ताद्यर्थे कया' इति वचनेन षस' । वोक्तमत्र निरादय इति, तत एवास्य पूर्वत्वम् । किंतु कयैवेति नियमादेका विभक्ती नियता । अतोस्य परनिपात एव । वाक्यानियमवत्पदानियमो न युक्त इति वचनमिदम् ।

**सुः पूजायां न गिति ॥ १ । ४ । ७ ॥** सुः शब्दः पूजार्थे गितिसंज्ञो न भवति । इति गिनिमित्तक षत्व येन केनचित् प्राप्त न भवेत् । तिनिमित्तस्य सस्यापि प्रतिषेधे प्राप्ते प्रादिलक्षण सः । सुस्थितम् । एवमग्रेपि ।

**अतिक्रमे चातिः ॥ १ । ४ । ८ ॥** न गिति । चात्पूजार्थे च । अतिसिक्तम् ।

**पदार्थसंभावनानुज्ञागर्हासमुच्चयेपिः ॥ १ । ४ । ९ ॥** न गिति । अप्रयुज्यमानस्य पदस्यार्थः पदार्थः । सामर्थ्याविष्करणं संभावनम् । अभ्युपगमोऽनुज्ञा । गर्हा निन्दा । एकत्रानेकस्य नियोजनं समुच्चयः । एष्वर्थेष्वऽपिर्गितिसञ्ज्ञो न भवति । पदार्थे, पयसोपि स्यात् । बिन्दुर्मात्रा वा । संबन्धेत्र ता उक्ता । सभावने, अपि स्तुयाद्राजानम् । अनुज्ञायाम्, अपि स्तुहि । अपि स्तुयाद्वृषलम् । समुच्चये, अपि सिञ्च, अपि स्तुहि ।

**अधिपरी अनर्थकौ ॥ १ । ४ । १० ॥** गितिसञ्ज्ञौ न । कुतोध्यागतः ? कुतः पर्यागतः । अत एव 'प्राग्धोस्ते' इति प्रयोगनियमोपि नैषाम् ।

**वा कृञ्यधिः ॥ १ । ४ । ११ ॥** करोतावधिर्वा गितिसञ्ज्ञो भवतीश्वरेर्थे । तेन तिपसे पक्षे सति क्त्वाया प्यादेश । तमधिकृत्य, तमधिकृत्वा । सूत्रपञ्चकमेतत्तिपसे यत्वविनामे चोपयोजनीयम् ।

सङ्ख्यार्थे एकादीनि प्रसिद्धानि । दशतोमे से सति विशेषविधिः —

**द्व्यष्नः संख्यायामबाशीत्योः प्राक्छतात्, त्रेस्त्रयः ॥ ४ । ३ । ९९ ॥** आन्महत इति वर्तते । द्व्यष्नोराकारान्तादेशो भवति संख्याया धौ । द्वौ च दश च द्वादश । एवं द्वाविंशतिः । अष्टौ च दश चाष्टादश । अष्टाविंशति । अष्टात्रिंशत् । अत्रैव त्रेस्तु त्रयम् । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । एषामेव किम् ? चतुर्दश । तदपि शतात्प्रागेव । नेह, द्वौ च शतं च द्विशतम् । अष्ट-

शतम्। त्रिशतम्। द्व्याधिकं वा शतं द्विशतम्। अधिकस्यात्र शाकपार्थिवादिवत् खम्। एवं द्विसहस्रम्। अशीतौ बसे च नैतत् स्यात्। द्व्यशीतिः । अष्टाशीतिः । त्र्यशीतिः । बसे, द्वौ वा त्रयो वा द्वित्राः । अष्टदशाः । त्रिदशाः । संख्याबादिति ड सान्तः । शतात्प्रागेव चत्वारिंशदादौ परतस्तु,—

**वा चत्वारिंशदादौ** ॥ ४ । ३ । ६० ॥ द्व्यष्नोरात्, त्रेस्तु त्रयः । द्वाचत्वारिंशत्, द्विचत्वारिंशद्वा । अष्टाचत्वारिंशत्, अष्टचत्वारिंशद्वा । त्रयश्चत्वारिंशत्, त्रिचत्वारिंशद्वा । एवं पञ्चाशत्षष्ट्यादौ च । एकादयो दशान्ता मूलशब्दाः । ततो दशसंख्याया वर्गे सति विंशत्यादयो भवन्ति । तत एव ते वृत्त्या साधिता बोध्याः । तत्सिद्ध्यर्थं च,—

**पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्** ॥ ३ । ४ । ५८ ॥ एते निपात्यन्ते । तदस्य परिमाणमित्यनुवर्तनात्तच्छब्दस्य क्रमसंनिवेशेऽर्थे च स्वीकारात् पञ्च परिमाणमस्य क्रमसन्निवेशस्येति पङ्क्तिः। द्वौ दश परिमाणमस्य विंशति । अत्र द्वेर्विभावः शतिश्च त्यः। एवं त्रयस्त्रिंशदादि । रूढिषु वृत्तिर्व्युत्पत्त्यर्थमेव, नावयवार्थोऽभिनिवेशमर्हति ।

**ये कडाराः** ॥ १ । ३ । १०४ ॥ यसे कडारादयः शब्दा वा पूर्वं प्रयोज्या । कडारश्चासौ भद्रश्च कडारभद्रो, भद्रकडारः । 'विशेषणं विशेष्येणेति' यसे वोक्तत्वाद्विशेषणस्यैव पूर्वनिपाते प्राप्ते वचनम् । कडार, गडुल, कूट, काण, खञ्ज, कुण्डादयोऽत्र गृह्यन्ते । इति षसपरिशिष्टम् ।

यन्यौ बे ॥ ४ । ३ । १२० ॥ बसे बन्धुशब्दे यौ घ्यस्य जिर्भति। 'जेः' इति यौ दीत्वमुक्तम्। पाणिक्या बन्धुयस्याः सा पाणिकीबन्धुः। बे किम्? षसे कारीषगन्ध्याबन्धुः।

प्रोष्ठैण्यजात् पदः ॥ ४ । २ । १२१ ॥ 'स्वाङ्गाद्वे' इत्यतो बे इत्यनुवर्तते। एभ्यः पादस्य पद्भावः अः सान्तश्च निपात्यते बसे। प्रवृद्धोष्ठः प्रोष्ठो गौः। तस्येव पादावस्य प्रोष्ठपदः। एणीपदः। अजपदः। बे एव। नेह, प्रोष्ठस्य पादाः प्रोष्ठपादाः।

चतुःशारेरश्रिकुक्षेः ॥ ४ । २ । १२२ ॥ चतुःशारिपूर्वाभ्यामश्रिकुक्षिभ्यां यथाक्रममः सान्तो भवति बसे। चतस्रोऽश्रयो यस्य स चतुरश्रः। शारिरिव कुक्षिरस्य शारिकुक्षः।

नञ्दुःसोः सक्थिहलेर्वा ॥ ४ । २ । १२३ ॥ विषमत्वाद्यथासंख्यं नेह। असक्थः, असक्थिः। महद्धलं हलिः। अहलः, अहलिः। एवं दु सुभ्याम्। बसे एव। नेह, सक्थ्नोऽभावोऽसक्थि। सक्थीति केचित्।

प्रजामेधादस् ॥ ४ । २ । १२४ ॥ नञ्दुःसोः, बसे। अप्रजा राजा। सुप्रजा, दुःप्रजाश्च। एवममेधाः, सुमेधा, दुर्मेधाः। इति बसपरिशिष्टम्।

इष्टेऽविहितलक्षणे हसे यत्र कथमपि सिद्धिर्न, तत्र 'शि' इति योगविभागेन निर्वाह्यम्। षसे तु 'साधनं कृता' इति, इवादियोगविभागाद्वा। रूपान्तरविधिस्तु पृषोदरादित्वादूह्यः। यद्वन्द्वयोरुत्सर्गेण सर्वनिर्वाहो भवति। अनिर्णीतः सविधिः 'सुप्सुपा' इत्यनेन साध्यते। द्वन्द्वस्यादावन्ते च श्रूयमाणं पदं प्रत्येकमभिसंबध्यते। इति सर्वसपरिशिष्टम्।

## अथ द्विरुक्तप्रक्रिया.

सर्वस्य द्वे ॥ ५ । ३ । १ ॥ 'पदस्य' इति वक्ष्यतेऽमे । तत प्रागधिक्रियते एतत् । यदग्रे वक्ष्यते तस्य सर्वस्य स्थाने द्वित्वं भवेदित्यर्थ ।

वीप्साभीक्ष्ण्ये ॥५।३।३॥ वीप्सार्थेऽभीक्ष्णताया च वर्तस्य सर्वस्य द्वे भवत । क्रियागुणाभ्यामनेकत्र युगपद्व्याप्तुमिच्छा वीप्सा । चैत्य चैत्य नमस्कुरुते । आभीक्ष्ण्य पुन पुनर्भृशार्थश्च पचति पचति । भोज भोज गच्छन्ति । क्रियायामेवाभीक्ष्णता स्यादिति नेह, देवदत्त इति । 'धार्यङि' त्यत्र वेति व्यवस्थित विभाषार्थमानीय यङन्तस्याभीक्ष्ण्येयपि द्वित्वपरिहार कृत । अतो भृशाद्यर्थेपि सति बोभूयते इत्येव ।

परेर्वर्जने ॥ ५ । ३ । ४ ॥ द्वे भवत । परि परि त्रिगर्तेभ्यो वृष्टो देव । तान्परिवर्ज्य इत्यर्थ । परेरसे वावचनम् । इति 'पर्यपाङि' ति वा हसाभावे उदाहरणमिदम् । पक्षे परि त्रिगर्तेभ्य इत्यपि । हसे तु नैतद्द्वित्वम् । परित्रिगर्तम् ।

---

१ इतो नव सूत्राणि सूत्रपाठे नोपलभ्यन्ते बहूनि सूत्रपाठपुस्तकान्यवलोकितानि किंतु कुत्रापि नोपलब्धानि । पुण्यपत्तनगतराजकीयपुस्तकालये लब्धे सप्तशतवर्षप्रमाणसमयप्राचीनलिखितेपि पुस्तके एतानि सूत्राणि नोपलब्धानि । न्यासमहावृत्तौ च नैव सन्ति । तत्पुस्तकान्यपि यथान्यत्रावलोकितानि । किंतु यावान् पाठ एतस्मिन् पुस्तके परिभ्रष्टः स्तावानेव सर्वेषु पुस्तकेषु खण्डितपाठो लब्ध । अतो ज्ञायते यच्चिरादेव पाठस्य भ्रंशः पुस्तकाज्जातमिति । स्वस्थाने यद्यप्यलभ्यमानानि नवैतानि सूत्राणि तथापि महावृत्तावेव स्थलान्तरेषूद्धृतानि लब्ध्वास्माभिरत्र समावेशितानि ।

( प्रोपोत्सं पादपूरणे ॥ ५ । ३ । ५ ॥ सर्वस्य द्वे भवतः । प्रप्रणम्य जिनं भक्त्या संसंश्रित्याभिधागमम् । उपोपपाद्यते धूना-मुदुत्कृष्टा मया स्थितिः ॥ १ ॥ अनायासार्थेपि न्यायसिद्धो द्विःप्रयोगो भवितुमर्हति । 'प्रियसुखयोर्वाऽकृच्छ्रे' इत्यत्र वा प्रियसुखयोरुपलक्षणत्वे, अकृच्छ्रे इति योगविभागे वा स्वीकृतेऽपि तन्निर्वाहो न दुष्यति ) ।

सामीप्येऽधोऽध्युपरि ॥ ५ । ३ । ५ ॥ अधोधो नारकावासाः । अध्यधि ग्रामम् । उपर्युपरि स्वर्गपटलानि । सामीप्यं हि देशकृतं कालकृतं च यथासंभवम् । यथा स्वर्गपटलेषु देशकृतमेव संभवति । तेन तिर्यगवस्थितिः समवस्थितिश्च तेषां व्युदस्यते ।

वाक्यादेर्बोध्यस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥ ५ । ३ । ६ ॥ परगुणानामसहनमसूया । ज्ञानिन् ज्ञानिन्, वृथा ते ज्ञानम् । संमतिः पूजा । देव देव, भवानेव देवानां देव उत्तमः । कोपे, जाल्म जाल्म, पश्यामि त्वाम् । स्ववचसा निन्दनं कुत्सनम् । वीर वीर, धिक् त्वाम् । भयोत्पादनं भर्त्सनम् । चोर चोर, दण्डयिष्यामि त्वाम् । अन्ते मध्ये वा न स्यादिति आदि-ग्रहणम् । ततो नेह, शोभसे माणवक । बोध्यस्य किम् ? धी-रोसि । वीप्साद्यर्थे एकस्य द्वित्वे,—

---

१ पाठग्रहणादेवन्युत्र न कुत्राप्युपलभ्यम् । तत एव स्वाभिप्रेतमिदमस्ति ।

२ 'सामीप्याभावाद् द्वित्वानुपपत्तिरिति चेन्न, अन्तरस्याविवक्षितत्वात् । यथा-नुदरा कन्येति । मुख्यार्थाभेदेनाध्यवसानं सामीप्यमिति वा । इति भगवानकलङ्क-देवस्तत्त्वार्थवार्तिके समाख्यौ । 'सामीप्येऽधोऽध्युपरि' इति च तेनैव द्विरार्थं सूत्र-मुद्धृतम् ।

एको बवत् ॥ ५ । ३ । ७ ॥ तेन 'सुपो धुमृदोः' इति सुप उप्, स्त्र्युक्तपुंस्कादिति पुंवद्भावश्च । उत्तरत्रापि बातिदेशस्येदं प्रयोजनं कल्पनीयम् । एकैकं दद्यात् । एकैकस्या चतुर्भ्यो ज्ञानेभ्यो यौगपद्यम् ।

आबाधे ॥ ५ । ३ । ८ ॥ आबाधे द्योत्ये बवत् । गतगतः स कथमायास्यति । चिराद्विरहेण पीड्यमानः कश्चिदेवं ब्रूयात् ।

यवदुत्तरे ॥ ५ । ३ । ९ ॥ वक्ष्यमाणेषु द्विरूपेषु यवत्कार्यं भवति । तेन सुबुप्पुंवद्भावौ स्याताम् ।

प्रकारे गुणोक्तेः ॥ ५ । ३ । १० ॥ प्रकारः सादृश्यम् । तस्मिन् द्योत्ये गुणाभिधेयस्य द्वे भवतः । पण्डितपण्डिता । बाधिकारे त्विह न स्यात्, पाचकपाचिका, 'न वुहत्कोङ' इति प्रतिषेधात् । उत्तरतो वाऽपकर्षे तु जातीयोऽपि वा वक्ष्यते । पटुजातीयः । अनेकेषु प्रकारता संभवेदितीह न, शुक्लो गुणः । अत्र गुणशब्देन केवलगुणवचनो द्रव्यविशेषणीभूतश्च गृह्यते ।

प्रियसुखयोर्वाऽकृच्छ्रे ॥ ५ । ३ । ११ ॥ अप्रयासेन प्रवृत्तौ प्रियसुखयोर्वा द्वे भवतः । प्रियप्रियेण, प्रियेण वा ददाति । सुखसुखेन, सुखेन वा जैनेन्द्रमधीते । अकृच्छ्रे किम्? प्रियो याति । सुखो गतः । प्रीणातीति प्रियः । सुखयतीति सुखः । क्रियाविशेषणत्वे एवाकृच्छ्रता द्योत्येत, न द्रव्यविशेषणत्वे इत्यर्थः ।

यथास्वे यथायथम् ॥ ५ । ३ । १२ ॥ यथास्वेऽर्थे यथायथमिति निपात्यते । यथाशब्दस्य द्वे रूपे भवतोऽन्तेऽम्भावश्च स्यादित्यर्थः । यो य आत्मा यो य आत्मीयो वा यथास्वम् ।

यावद्यथेति वीप्सार्थे ह्रसः । शब्दान्तरेण सिद्धे इदं वचनं किमर्थम्? एवं तर्हि अत्रैवास्य प्रयोगः स्यादित्यन्वाख्यातम् । सर्वे ज्ञाता यथायथ, यथास्वभाव यथात्मीय वेत्यर्थः ।

**द्वन्द्वं रहस्यादौ** ॥ ५ । ३ । १२ ॥ द्वि ओ इति विवक्षाया रहस्याद्यर्थे सति द्वित्वं, सुबुप्, पूर्वोत्तरपदयोरिकारस्याम्भावोऽत्वं च निपात्यते । रहोत्राभिधानम् । द्वन्द्वं मन्त्रयते । रहसि द्वौ द्वौ मन्त्रयेते इत्यर्थः । मकारार्थेनादिना ये मर्यादादयोर्था गृह्यन्ते ते विपयस्त्वेनाश्रिताः । मर्यादा पूर्ववदवस्थितिः । द्वन्द्वं स्वर्गपटलानि स्थितानि । पृथगवस्थाने, द्वन्द्व स्थिताः । द्विवर्गसंबन्धेन भिन्ना इत्यर्थ । अभिव्यक्तौ, द्वन्द्व सूर्याचन्द्रमसौ । वीप्सायां, द्वन्द्वं वृक्षमूलान्युपसर्पति । वृत्तिविशेषे, द्वन्द्व समस्यते । एव युद्धाद्यर्थेपि यथायोग्यं प्रयोगपरिपाटी ।

संभ्रमेऽसकृदपि न दोषाय । जिन जिन जिन । अहिरहिरहिः । आधिक्यद्योतनायापि द्वित्व युक्तयुक्तम् । एप तवाञ्जलिरेप तवाञ्जलि । वापकर्पात्, कर्मव्यतिहारे सर्वनाम्नो द्वित्वं सवच बहुलम् । इतरेतरम् । तेनैवान्यपरयो पूर्वस्य सर्वविभक्तीना सुरादेशश्च । अन्योन्यम् । अन्योन्यस्मै । परस्परम् । परस्परस्मै । स्त्रीनपोर्विभक्त्या वाऽऽम्भावश्च । अन्योन्याम्, अन्योन्य वा नार्यौ भोजयतः कुले वा ।

इति द्विरुक्तप्रक्रिया ।

दिभ्य उ० । महानाम्नीश्चरति माहानाम्निकः । तत्सहचरितं व्रतं चरतीत्यर्थः । अवान्तरदीक्षादिभ्यो डिन्व० । अवान्तरदीक्षां चरति अवान्तरदीक्षी । देवव्रती । संज्ञायामण् व०। चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी । अथ मासोस्य ब्रह्मचर्यस्य मासिकमिति कथमिति चेद्, मासं भूतं भावि वेत्यर्थे सिद्धः ।

**तस्य दक्षिणा यज्ञाख्यात्** ॥ ३ । ४ । ८८ ॥ तस्येति तासमर्थाद्यज्ञाख्यात् त्यो भवति दक्षिणेत्यर्थे । अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । तस्येदमित्यणोपवादः । अकालार्थं चास्य ग्रहणम् । अन्यथा कालाधिकारादेकाहादिभ्य एव यज्ञेभ्यः स्यात् ।

**तत्र दीयते भववत्** ॥ ३ । ४ । ८९ ॥ तत्रेतीप्समर्थात्कालाद्दीयते इत्यर्थे भव इव त्यो भवति । मासे भवं मासिकम् । एवं मासे देयं मासिकम् । एवं प्रावृषेण्यम् । हैमनम् । 'तत्र दीयते' इति योगविभागश्च कर्तव्यः । यज्ञाख्यादिति पूर्ववाक्येन तत्संबन्धादग्निष्टोमे दीयते आग्निष्टोमिकमन्नमित्याद्यपि सिध्येत् ।

इति कालाधिकारः । ठञ् तु वर्तते ।

---

**व्युष्टादेरण्** ॥ ३ । ४ । ९० । इत कालेभ्य इति नापेक्ष्यते । तत्र दीयते इति त्वनुवर्तते । व्युष्टे दीयते वैयुष्टम् ।

**तेन यथाकथाच-हस्ताभ्यां णयौ** ॥ ३ । ४ । ९१ ॥ यथासंख्य णयौ । यथाकथा च दीयते याथाकथाचम् । अनादरदत्तमित्यर्थः । हस्तेन दीयते हस्त्यम् ।

**जय्यलभ्यकार्यसुकरम्** ॥ ३ । ४ । ९२ ॥ कालेभ्य इत्यनुवर्ततेऽत्र । भासमर्थात्कालवाचिनष्ठञ्भवति जय्याद्यर्थे । मासेन जय्यो लभ्यः कार्यं सुकरो वा मासिको हस्ती पटः प्रासादः प्रसादश्च ।

**संपादिनि** ॥ ३ । ४ । ९३ ॥ पुनः कालाधिकारो निवृत्तः । भासमर्थाट्ठञ् । वस्त्रयुगेण संपादि ( शोभते ) वास्त्रयुगिकं शरीरम् ।

**कर्मवेशाद्यः** ॥ ३ । ४ । ९४ ॥ तेन संपादिनि । ठञोऽपवादो यः । कर्मणा संपादि कर्मण्यं शौर्यम् । वेशेन संपद्यते वेश्या । नेपथ्येन शोभते इत्यर्थः ।

**तस्मै प्रभवति संतापादेः** ॥ ३ । ४ । ९५ ॥ संतापाय प्रभवति सांतापिकः । सान्नाहिकः । सांपरायिकः ।

**योगाद्यश्च** ॥ ३ । ४ । ९६ ॥ चाट्ठञ् । योगाय प्रभवति योग्यो, यौगिकः ।

**कर्मण उकञ्** ॥ ३ । ४ । ९७ ॥ कर्मणे प्रभवति कार्मुकम् ।

**समयस्तदस्य प्राप्तम्** ॥ ३ । ४ । ९८ ॥ समयः प्राप्तोऽस्य सामयिकम् । प्राप्तकालमित्यर्थः ।

**ऋतोरण्** ॥ ३ । ४ । ९९ ॥ ऋतुः प्राप्तोऽस्य आर्तवं पुष्पम् ।

**कालाद्यः** ॥ ३ । ४ । १०० ॥ कालः प्राप्तोऽस्य काल्यं शीतम् ।

**प्रकृष्टे ठः** ॥ ३ । ४ । १०१ ॥ कालादेव । प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणम् । केचिट्ठञिति पठन्ति । तेन कालिकी मैत्री ।

**प्रयोजनम्॥ ३। ४। १०२॥** अर्हत्पूजा प्रयोजनमस्य आर्हत्पूजिकः। ऐन्द्रमहिकः।

**वैशाखाषाढषष्टिकैकागारिकडाकालिकट्॥ ३। ४। १०३॥** एते निपात्यन्ते। विशाखा प्रयोजनमस्येति वैशाखो मन्थः। अत्रार्थेऽण् निपात्यते। आषाढो दण्डः। अत्राप्यण्। षष्टिरात्रेण पच्यन्ते ( इत्यत्र कः रात्रस्य च खम् ) षष्टिका नाम व्रीहयः। असंज्ञाया न, षष्टिरात्रेण पच्यन्ते मुद्गाः। एकागारं प्रयोजनमस्येति चौरे ठञ्। ऐकागारिकश्चौरः। अन्यत्र वाक्यमेव। ऐकागारिकडिति टित्त्वान्ङी। ऐकागारिकी चौरी। समानकालशब्दस्य आकाल आदेशः इकण् च त्य आद्यन्तोपाधिविशेषे सार्थे च। समानकालावाद्यन्तावस्य आकालिको बलाहकः। आकालिकी विद्युत्। प्रादिलक्षणे से तु य आकालशब्दस्ततष्ठञ् ठश्चेष्यते। आकालिका आकालिकी वा विद्युत्।

**छोऽनुप्रवचनादेः॥ ३। ४। १०४॥** ठञोपवादः। अनुप्रवचन प्रयोजनमस्येति अनुप्रवचनीयम्।

**समापनात्सादेः॥ ३। ४। १०५॥** ठञोपवादश्छ.। तर्कसमापन प्रयोजनमस्येति तर्कसमापनीयम्। स्वर्गादिभ्यो यो च०। स्वर्ग्यम्। पुण्याहवाचनादिभ्य उप्व०। तादर्थ्यात्ताच्छब्द्य वाश्रित्य तत्प्रयोजनमस्येति पुण्याहवाचनम्। श्रद्धादिभ्योण् व०। श्रद्धा प्रयोजनमस्येति श्राद्धम्। ठञोवधि. पूर्णः।

---

## अथ भावकर्मार्थाः ।

तदर्हं वत् ॥ ३ । ४ । १०६ ॥ इप्समर्थादर्हतीत्यर्थे वद्भवति । उत्तरत्र क्रियाग्रहणं गुणभूतमपि सिंहावलोकनेनेह संबध्यते । तेन यत्र क्रियाऽर्हतेः कर्तृत्वेन विवक्षिता तत्रैवायं वत् । विधिमर्हति विधिवद्देवं पूजयति ।

तेन क्रियातुल्ये ॥ ३ । ४ । १०७ ॥ क्रिया तुल्यास्य क्रियातुल्यम् । भासमर्थात् क्रियातुल्येऽर्थे वद्भवति । क्षत्रियेण तुल्यं क्षत्रियवद्युध्यते ।

तत्रेव ॥ ३ । ४ । १०८ ॥ मथुरायामिव मथुरावत्स्रुघ्ने प्रासादः ।

तस्य ॥ ३ । ४ । १०९ ॥ देवदत्तस्येव देवदत्तवज्जिनदत्तस्य वनम् । पुवद्येति वचनान्नात्र स्त्रीपुंसयोर्नुक् । स्त्रीवत् ।

भावे त्वत्तलौ ॥ ३ । ४ । ११० ॥ तासमर्थाद्भावेऽर्थे त्वत् तल् च स्याँ भवतः । अश्वस्य भावोऽश्वत्वम् । अश्वता । स्त्रीपुंसादित्यनास्याविधिर्मा भूदिति तित्करणम् ।

आ च त्वात् ॥ ३ । ४ । १११ ॥ ब्रह्मणस्त्व इति वक्ष्यते । आ एतस्माद्यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र त्वत्तलावधिक्रियेते ।

पृथ्वादेर्वेमन् ॥ ३ । ४ । ११२ ॥ तस्य भाव इत्यर्थे । यावचन ध्वादेरित इत्यणो, गुणवचनेभ्यष्ष्यणो, वयोवाचिभ्यस्त्वञः समावेशार्थम् । त्वत्तलौ त्वाधिकारात् । पृथोर्भावः प्रथिमा, पार्थवं, पृथुत्व, पृथुता । अत्र,

टेः ॥ ४।४।१४३॥ भस्य टेः खे भवतीष्ठेमेयस्सु। इति टिखम्।

ऋरोऽनादेर्वे: ॥ ४।४।१५१॥ प्रो थि। अनादेर्वेः ऋकारस्य रेफादेशो भवतीष्ठेमेयस्सु परतः। इति रादेशः।

**वर्णदृढादेष्यण् ३।४।११३।** इमश्च वा। वर्णशब्देन गुणोपसर्जनेन द्रव्ये वर्तमानाना ग्रहणम्। शैत्यं, शीतिमा, शीतत्वं, शीतता। दार्ढ्यं द्रढिमा, दृढत्वं, दृढता। वक्ष्यमाणगुणोक्त्यैव सिद्धे इमज्ञापणार्थमेतत्।

**गुणोक्तिब्राह्मणादिभ्यः कर्मणि च ॥ २।४।११४॥** भावे च। उक्तिरिति कर्मणि क्तिः। गुण उक्तिर्यस्येति गुणोक्तिः। गुणोपि वर्णवद्द्रव्यवृत्तिः। जडस्य कर्म भावो वा जाड्यम्। ब्राह्मणादिराकृतिगणः। ततोऽञ्चुञादिप्राप्तौ वचनम्। ब्राह्मण्यम्। अर्हतो नुम् च (ग०)। आर्हन्त्यम्। सर्ववेदादिभ्यः स्वार्थे (ग०)। सार्ववैद्यम्। त्रैलोक्यम्। चातुर्वर्ण्यम्। वीरात्तेजसि यः (ग०)। वीरस्य तेजो वीर्यम्। विरोधे णः (ग०)। वैरम्। टित्करण ङ्यर्थम्। सामग्री। हलो ह्रत इति यखम्।

**यथातथयथापुरयोः क्रमेण ॥ ५।२।३५॥** नञ उत्तरयोरनयो क्रमेण द्वयोरैभ्भवति। अयथातथा भावोऽयाथातथ्यमाऽऽयथातथ्य वा। अयाथापुर्यमायथापुर्य वा।

**नञ्से चतुरसङ्गतलवणवटयुधकतरसलसेभ्यः ॥ ३।४।११५॥** नियमार्थम्। नञ्से चतुरादिभ्य एव भावक-

१ अनुशतिकादेः ॥ ५।२।२५॥ इत्युभयपदयोरैभ्यत्र।

मर्थास्त्याः । आचतुर्यम् । इत्यादि । नेह, अपटुत्वम् । आ च त्वादित्यारम्भसामर्थ्यात्त्वत्तलोर्न निवृत्तिः ।

**स्तेयसख्ये** । ३ । ४ । ११६ ॥ निपात्येते । स्तेनस्य भावः कर्म वा स्तेयम् । सख्यम् । **दूतवणिग्भ्यां यो व०** । ब्राह्मणादित्वाष्ट्यण् च । दूत्यं, दौत्यम् । वणिज्या । स्वभावात्स्त्रीत्वम् ।

**कपिज्ञातेर्ढण्** ॥ ३ । ४ । ११७ ॥ कपेर्भावः कर्म वा कापेयम् । ज्ञातेयम् । त्वत्तलावपि ।

**पत्यन्तपुरोहितादेर्ण्यः** ॥ ३ । ४ । ११८ ॥ भावकर्मणि । त्वत्तलौ च । बार्हस्पत्यम् । पौरोहित्यम् । **राजन्नसे ( ग० )** । से तु ब्राह्मणादित्वाद् ष्यण् । सौराज्यम् ।

**वयोवाक्कुमाणिजात्युद्रात्रादिभ्योञ्** ॥ ३ । ४ । ११९ ॥ वयोवाचिभ्यः, कुमारस्य भावः कर्म वा कौमारम् । प्राणिजातेः, माहिषम् । उद्गात्रादेः, औद्गात्रम् ।

**हायनान्तयुवादिभ्योऽण्** ॥ ३ । ४ । १२० ॥ भावकर्मणि एव । द्वैहायनम् । अन इति टिखाभावत्वेन यौवनम् । युवतेरपि भस्य ह्यढे इति पुंवत् । **श्रोत्रियस्य यखम्** । ( ग० ) । श्रौत्रम् । **हृदयादसे ( ग० )** । हार्दम् । से तु, अहृदयत्वम् । पुरुषादसे । पौरुषम् । से तु, राजपौरुष्यम् ।

**घ्यादेरिकः** ॥ ३ । ४ । १२१ ॥ घ्यादेरिगन्तान्मृदोऽण्

---

१ इगन्तत्वादणि प्राप्ते । २ प्राणिजातित्वादञि प्राप्ते । ३ यदि पौर्वोऽण् क्रियेत तर्हि प्रायोनपत्येणीन इति टिखाभावे सति हस्तिनो भावो हास्तमिति न स्यात् । ४ घुनालादयो ये ब्राह्मणादेौ च पठ्यन्ते तेभ्यष्ट्यण् च । ५ मनोज्ञादित्वाद्वुञि प्राप्ते ।

भवति । पृथोर्भावः कर्म वा पार्थवम् । एवं शौचम् । पैत्रम् । वैश्वकमित्यत्र तु द्वन्द्वकृतो वुञ् । काव्यमिति च ब्राह्मणादित्वात् । ष्यादेरिति किम् ? पाण्डुत्वम् ।

**योङो रूपोत्तमाद्वुञ्** ॥ ३ । ४ । १२२ ॥ त्रिप्रभृतीनामन्त्यमुत्तमम् । रु उपोत्तमं यस्य तस्माद्योङो मृदो वुञ् भवति । औपाध्यायकं कर्म भावो वा । आचार्यकम् । सहायाद्वा व० । साहायकं, साहाय्यं वा । रूपोत्तमात् किम् ? क्षत्रियत्वम् ।

**द्वन्द्वमनोज्ञादेः** ॥ ३ । ४ । १२३ ॥ द्वन्द्वात्, भारतबाहुबलिका । मनोज्ञादेः, मानोज्ञकम् ।

**वृद्धचरणात् श्लाघात्याकारावेते** ॥ ३ । ४ । १२४ ॥ वृद्धाच्चरणाच्च मृदो वा वुञ् भवति श्लाघात्याकारावेतेषु विषयभूतेषु द्योत्येषु । श्लाघः स्मयः । अत्याकारः पराधिक्षेपः । अवेतः अवगतः । गार्गिकया श्लाघतेऽत्याकुरुते वा । गार्गिकामवेतः । काठिकया श्लाघतेऽत्याकुरुते वा । काठिकामवेतः ।

**होत्राभ्यश्छः** ॥ ३ । ४ । १२५ ॥ होत्रा ऋत्विजः । तद्विशेषाच्छो भवति । ब्राह्मणाच्छंसिनो भावः कर्म वा ब्राह्मणाच्छंसीयम् । मैत्रावरुणीयम् । बहुत्वेन निर्देशः स्वरूपनिरासार्थः ।

**ब्रह्मणस्त्वः** ॥ ३ । ४ । १२६ ॥ होत्रावाचिनो ब्रह्मणस्त्वो भवति । ब्रह्मत्वम् । पुनरारम्भात्तलादेर्निवृत्तिः । जातिवाचिनस्तु तलपि । ब्रह्मता । इति वुणधिकारसमाप्तिर्भावकर्मसमाप्तिश्च ।

---

१ विश्वं च ना च विनरो । तयोर्भावः ।

## अथ पाञ्चमिकाः ।

**धान्यप्ररोहणे खञ् ॥ ३ । ४ । १२७ ॥** तस्येत्यनुवर्तते । प्ररोहन्त्यस्मिन् धान्यानीति प्ररोहणं क्षेत्रम् । तासमर्थाद्धान्यविशेषवाचिनो मृदः खञ् भवति प्ररोहणे क्षेत्रेभिधेये । प्रियङ्गूणां प्ररोहणं प्रैयङ्गवीणं क्षेत्रम् । गौधूमीनम् । धान्यानामेव । नेह, तृणानां प्ररोहणं चत्वरम् ।

**व्रीहिशालेर्ढञ् ॥ ३।४।१२८ ॥** खञोपवादः । व्रैहेयम् । शालेयम् ।

**यवयवकषष्टिकाद्यः ॥ ३।४।१२९ ॥** यव्यम् । यवक्यम् । षष्टिक्यम् ।

**वा तिलमाषोमाभङ्गाणुभ्यः ॥ ३।४।१३० ॥** खञ् । यश्च । तैलीनं, तिल्यम् । माषीणं, माष्यम् ।

**सर्वचर्मणः कृतः खश्च ॥ ३।४।१३१ ॥** खञ्च । सर्वश्चर्मणा कृतः सर्वचर्मीण, सार्वचर्मीणः ।

**यथामुखसंमुखस्य दर्शनः ॥ ३।४।१३२ ॥** खः । दृश्यतेऽस्मिन्निति दर्शनो दर्पणादिः । मुखस्य सदृशो यथामुखम् । समं मुखमस्य ( प्रतिबिम्बस्य ), समं मुखं वा संमुखम् । अत एव समशब्दान्तस्य खम् । यथामुखं दर्शनो यथामुखीनः । सम्मुखस्य दर्शनः सम्मुखीनः ।

---

१ सर्व-शब्दस्य कृतशब्देनान्वयाच्चर्मणा सह सो न प्राप्नोति, तथापि वचनबलान्निपात्यते । २ निपातनादेव 'अव्ययादृश्ये' इति हसप्रतिषेधो न । ३ कर्मणि ता ।

**पथ्यङ्गकर्मपत्रपात्रमाप्नोति सर्वादेः ॥ ३ । ४ । १३३ ॥** सर्वादेरिवन्तात् पथिन् अङ्ग कर्म पत्र पात्र इत्येवमन्तान्मृद खो भवत्याप्नोतीत्यर्थे । सर्वपथानाप्नोति सर्वपथीनमुदकम् । सर्वाङ्गीण । इत्यादि ।

**आप्रपदम् ॥ ३ । ४ । १३४ ॥** प्रपद पदस्योपरि गुल्फ पदाग्र वा । तत्पर्यन्त प्राप्नोति आप्रपदीन कम्बल ।

**सर्वान्नीनानुपदीनायानयीनागवीनाद्यश्वीनाः ॥३।४।१३५॥** अर्थविशेषे निपात्यन्ते । सर्वान्न नि भक्षयति सर्वान्नीनो भिक्षु । पदसदृशमनुपदम् । अनुपद बद्धा अनुपदीना उपानत् । अयानय नेयोऽयानयीन शार । स्वस्या दिशि फल्कशिरोगत इत्यर्थ । गो प्रत्यर्पणपर्यन्त य कर्म करोति स आगवीन । अद्य श्वो वा विजनिष्यते अद्यश्वीना गौ । आसन्नप्रसवेत्यर्थ । केचित्प्रसवार्थ नेच्छन्ति । तेन, अद्यश्वीनो वियोगो मरण वेत्यपि ।

**परोवरपरम्परपुत्रपौत्रमनुभवति ॥ ३।४।१३६ ॥** ख । पराश्चावराश्च अनुभवति परोवरीण । निपातनादस्योत्वम् । परान्परतरांश्चानुभवति परम्परीणः । परपरतरयो परम्परादेशो वचनबलात् । पुत्रपौत्राननुभवति पुत्रपौत्रीण ।

**अवारपारात्यन्तानुकामं गामी ॥ ३।४।१३७ ॥** अवारम्य पार गामी अवारपारीण पोत । विगृहीताद्विपरीताच्च । अवा

१ यथार्थ इस । २ अय प्रदक्षिण गमनमऽनय प्रसव्यम् । सव्यप्रसव्यगा मिनो पदानो यस्मिन्परैरसमावेश स अयानय । मयूरव्यसकादित्वात्स ।

रीणः । पारीणः । पारावारीणः । अत्यन्तं गामी अत्यन्तीनः । अनुकामं गामी अनुकामीनः ।

**समां समां विजायते** ॥ ३।४।१३८ ॥ समा संवत्सरः । समां समां समायां समायां वा विजायते समांसमीना वडवा । प्रतिवर्षं प्रसूयते इत्यर्थः । उच्चारणसामर्थ्यात्समांसमाभावः ।

**अनुग्वलंगामी** ॥ ३।४।१३९ ॥ अनुगु अलं गच्छति अनुगवीनः ।

**यखावध्वनः** ॥ ३।४।१४० ॥ अध्वानमलं गच्छति अध्वन्यः, अध्वनीनः । अत्र, 'येऽङ्कै' इति,

**खेऽध्वनः** ॥ ४।४।१५८ ॥ प्रकृतिभावः । इति च टिलाभावः ।

**छश्चाभ्यमित्रात्** ॥ ३।४।१४१ ॥ यखौ च । अमित्रमभीति हसः । अभ्यमित्रमलं गच्छति अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः ।

**गौष्ठीनाश्वीनकौपीनशालीनव्रातीनसाप्तपदीनहैयङ्गवीनम्** ॥३।४।१४२॥ एते निपात्यन्तेऽर्थविशेषेषु । भूतपूर्वो गोष्ठो गौष्ठीनो देशः । घटोपचारोऽत्र तत् । अश्वस्यैकाहेन गन्तुं शक्यन्ते इति आश्वीनानि पञ्चदशयोजनानि । कूपावतरणमर्हतीति कौपीनं पापमिन्द्रियं च । तत्सम्बन्धाद्वस्त्रमपि । शालाप्रवेशमर्हतीति शालीनोऽप्रगल्भः । अनियतवृत्तयः शरीरायासेन जीवन्ति ये ते संघा व्राताः । व्रातकर्मणा जीवन्ति व्रातीनाः । सप्तभिः पदैरवाप्यते साप्तपदीनं सख्यम् । अर्ह

१ अर्थ,भवे इत्य-, 'तिङ्वादयः' इति पक्षे वा । २ कालस्यानुक्रमनुगतो वा यथाक्रमम् । अत्रार्थे तत्र दृष्टं यत्र नियम्यतेऽथार्थे बाध्ये ।

आदित्वादन्ये तु सासपदीन मित्रम् । ह्योगोदोहस्य विकारो हैयङ्गवीन घृतमभिनवम् । तत्रायर्थे त्वणेव । अत्र ह्योगोदोहस्य हियङ्गुभावः खञ् च ।

भूतपूर्वे चरट् ॥ ३ । ४ । १४३ ॥ ङ्याम्मृद । आढ्या भूतपूर्वा आढ्यचरी । 'तसादौ' इति पुवत् ।

ताया रूप्यश्च ॥ ३ । ४ । १४४ ॥ तान्तान्ङ्याम्मृदो भूतपूर्वे रूप्यो भवति चरट् च । देवदत्तस्य भूतपूर्वो देवदत्तरूप्यो गौ, देवदत्तचरो वा ।

पाकमूले पीलुकर्णादिभ्यः कुणजाहौ ॥ ३।४।१४५ ॥ तासमर्थेभ्य पील्वादिभ्य पाके, कर्णादिभ्यो मूलेर्थे च क्रमेण कुणो जाहश्च त्यो भवत । पीलूना पाक पीलुकुणः । कर्कन्धुकुण । कर्णस्य मूल कर्णजाहम् । शृङ्गजाहम् ।

पक्षात्ति ॥३।४ । १४६ ॥ मूलेर्थे । पक्षस्य मूल पक्षति ।

तेन वित्तश्चुञ्चुचणौ ॥ ३।४।१४७॥ न्यायेन वित्त प्रतीतो न्यायचुञ्चु न्यायचण ।

विनञ्भ्यां नानाञो न सह ॥ ३।४।१४८ ॥ असहार्थे वर्तमानाभ्या विनञ्भ्या नानाञौ त्यौ यथासंख्य स्वार्थे भवत । विना । अित्वादैप्, नाना ।

वेः शालशङ्कटौ ॥ ३।४।१४९ ॥ स्वसाधनक्रियावचनाद्वेरेतौ त्यौ भवत स्वार्थे । विसृष्टे शृङ्गे विशाले, विशङ्कटे । एते रूढि-

शब्दा कथंचिद्व्युत्पाद्यन्ते। रूढौ क्रिया व्युत्पत्त्यर्थैव केवलम्। तेन विशाले गौः। विशाल यश।

**संप्रोदश्च कटः ॥ ३।४।१५० ॥** च्याट्टे। संकटम्। प्रकटम्। उत्कटम्। विकटम्। **अलाबूतिलोमाभङ्गाभ्यस्तार्थे रजस्युपसंख्यानम्।** अलाबूना रजः अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्।

**कुटारश्चावात् ॥ ३।४।१५१ ॥** स्वसाधनक्रियावचनादवाद्वेः कुटारत्त्यो भवति कटश्च स्वार्थे। अवकृष्टः अवकुटार, अवकट। **गोष्ठादयस्त्याः स्थानादिषु पशुनामभ्यो व०।** गवा स्थानं गोगोष्ठम्। अजागोष्ठम्। **समूहे कटः।** अवीना समूहः अविकटः। **विस्तारे पटः।** अवीना विस्तारः अविपटः। **द्वित्वे गोयुगः।** उष्ट्रगोयुगम्। **षट्त्वे षड्गवम्।** हस्तिना षट्त्व हस्तिषड्गवम्। **संस्कृते शल्यः।** पिठरे संस्कृतं पिठरशल्यम्। **विकारे स्नेहे तैलः।** इङ्गुदीना स्नेह इङ्गुदीतैलम्। **प्ररोहणे शाकटशाकिनौ।** मूलाना प्ररोहण क्षेत्र मूलशाकट, मूलशाकिनम्।

**नते नासिकायाः खौ टीटनाटभ्रटाः ॥ ३।४।१५२ ॥** नासिकानतवाचिनोऽवादेते त्या भवन्ति खौ स्वार्थे। नासिकायाः पर्नृत्वे सामानाधिकरण्यम्। यथा, अवनता नासिका अवटीटा, अवनाटा, अवभ्रटा। सवन्धमानत्तिकाया वैयधिकरण्यम्। यथा, नासिकाया अवनमनम् अवटीटम्, अवनाटम्, अवभ्रटम्। तद्योगात्पुरुषोऽपि अवटीटः। एवमग्रेष्वर्थद्वयं स्यात्।

नेर्बिडबिरीसौ ॥ ३।४।१५३ ॥ नते नासिकायाः खौ । निबिडा, निबिरीसा । निबिडाः केशा इति तूपमानात् ।

केनौ चिक् ॥ ३ । ४ । १५४ ॥ नते नासिकायाः खौ नेरेव केनौ भवतो नेस्तु चिकादेशः । निनता नासिका चिक्का, चिकिना । पुरुषोपि चिक्कः, चिकिनः ।

पिटे चिः । ३ । ४ । १५५ ॥ नेश्चिरादेशो भवति पिटे त्यै। पिटश्चेरनेनैव वचनेन स्यात् पूर्वविषये । निनता नासिका चिपिटा । तद्योगात् पुरुषश्चिपिटः । क्लिन्नस्य चिलिपिलौ लश्च चक्षुषीति व० । क्लिन्नं चक्षुः । एव चिल्लं, पिल्लम् । चुलादेशश्च व० । चुल्लम् । पुरुषोपि चिल्लः, पिल्लः, चुल्लः ।

उपत्यकाधित्यके ॥ ३ । ४ । १५६ ॥ पर्वतमुपासन्ने देशे उपात्, पर्वतमारूढे देशे त्वधेस्त्यकस्त्यो निपात्यते इत्वाभावश्च स्त्रीलिङ्गे खौ । उपत्यका पर्वतासन्नभूमिः । अधित्यका पर्वतोपरिदेशः ।

कर्मठः ॥ ३ । ४ । १५७ ॥ कर्मणि घटते कर्मठः ।

तदस्य संजातं तारकादिभ्य इतः ॥ ३ । ४ । १५८ ॥ तारका अस्य संजातास्तारकितं नभः । पुष्पिता लता । गर्भादप्राणिनि ( ग ) । गर्भिताः शालयः । प्राणिनि तु गर्भिणी गौः ।

प्रमाणे द्वयसट्दघ्नञ्मात्रटः ॥ ३ । ४ । १५९ ॥ तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् । द्वयसट्दघ्नटौ ऊर्ध्वमाने, मात्रट् पुनरविशेषेण । प्रमाणार्थे ये

शब्दाः प्रसिद्धास्तेभ्यस्त्यस्य ध्वंसनं व० । वितस्तिः प्रमाणमस्य वितस्तिः । राच्च ध्वसनं व० । द्विसमम् । डट् स्तोमे व०। पञ्चदशाहानि परिमाणमस्य पञ्चदशः स्तोमः । छन्दसि पूर्वमेव सिद्धमच्छन्दोविषयार्थमेतत् । शन्शतोर्डिनिर्व० । पञ्चदशाहोरात्राः परिमाणमेषां पञ्चदशिनोऽर्धमासाः । द्वात्रिंशिनो देवेन्द्राः । त्रयस्त्रिंश इत्यपि । विंशतेश्च । विंशिनो भवनेन्द्राः । प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रड् व० । समं प्रमाणमस्य सममात्रम् । पञ्चमात्राः पुरुषाः । वत्वन्तात्स्वार्थे द्वयसड्मात्रटौ बहुलं व०। तावदेव तावद्द्वयसं, तावन्मात्रम् ।

पुरुषहस्तिनोरण् च ॥ ३।४।१६० ॥ तदस्य, प्रमाणे । चाद्द्वयसडाद्यश्च । पुरुषः प्रमाणमस्य पौरुष, पुरुषद्वयसम् । हास्तिनं, हस्तिद्वयसम् । प्रायोनपत्ये इति टिखाभाव. । प्रमाणाद् ध्वंसनं च । पुरुष. प्रमाणमस्य पुरुषः । द्विपुरुषं जलम् । द्विहस्तिनी नदी । नान्तत्वान्ङी ।

यत्तदेतेभ्यः परिमाणे वतुः ॥ ३ । ४ । १६१ ॥

आ सर्वनाम्न. ॥ ४।३।१९७ ॥ सर्वनाम्न आकारोन्तादेशो भवति दृग्दृशदक्षवतुषु परतः । यत्परिमाणमस्य यावान् । तावान् । एतावान् । प्रमाणेनुवर्तमानेपि परिमाणग्रहण द्वयसडादीनामबाधनार्थम् । यद्द्वयसम् । यावन्मात्रम् ।

---

१ प्रमाणाद् ध्वसन राच्च डट् स्तोमे शन्शतोर्डिनिः ।
प्रमाणपरिमाणाभ्या सख्यायाश्चापि संशये ॥ १ ॥

२ प्रमाणपरिमाणयोर्भेदाद्वत्वन्तादपि द्वयसडादय. स्यु. ।

**इदमो वो घः ॥ ३।४।१६२ ॥** इदमो वतुर्भवति वस्य च घः । इद परिमाणमस्येति घस्येयादेशे,

**किमिदमोः कीश् ॥ ४।३।१९६ ॥** एतयोः की ईश् इत्यादेशौ भवतो दृग्दृशदक्षवतुषु परत । आ सर्वनाम्नोपवादोयम् । शित्वात्सर्वादेशः । 'यस्य ङ्या च' इति ईखे इयान् ।

**किमः ॥ ३।४।१६३ ॥** किमश्च वतुर्वस्य च घो भवति । कियान् ।

**संख्यापरिमाणे डातिश्च ॥ ३।४।१६४ ॥** किम एव । चाद्वतुर्वस्य च घादेशः । का सख्या येषा ते कति, कियन्तो वा ।

**संख्याया अवयवे तयट् ॥ ३।४।१६५ ॥** दशावयवा अस्य दशतयो धर्मः । सप्ततयी नयवृत्ति ।

**उभात् खम् ॥ ३।४।१६६ ॥** तयट. । परस्यादेरिति तखम् । अत एव तयट् । उभाववयवावस्य उभयो मणिः । उभये देवमनुष्याः ।

**द्वित्रिभ्यां वा ॥ ३ । ४ । १६७ ॥** तयटस्तख वा । द्वयं, द्वितयम् । त्रय, त्रितयम् ।

**तदस्मिन्नाधिकमिति शदशान्ताड्डः ॥ ३ । ४ । १६८ ॥** त्रिंशदधिका अस्मिन्निति त्रिश शतम् । एकादश शतम् । एवमेकत्रिंशम् । इतिकरणाद्यत्र लोके विवक्षा । सा तु शतसहस्रयोरेव । संख्याया इत्यनुवृत्तेर्नेह, गोविंशत्यधिका अस्मिन् गोशते इति ।

---

१ अधिके समानजातावेिष्ट शतसहस्रयो । यस्य सख्या तदाधिक्ये ड कर्तव्यो मतो मम ॥ १ ॥ तेनेहापि न, एक दश मापा अधिका यस्मिन्कार्षापणशते इति, समानजात्यभावात् ।

**विंशतेश्च ॥ ३ । ४ । १६९ ॥** डः । विंशतिरधिका अस्मिन्निति विंशम् । चात्तदन्तादपि । एकविंशम् । 'तेर्विंशतेर्डिति' इति तिखे 'एप्यतोऽपदे' इति पररूपम् ।

**संख्याया गुणस्य निमाने मयट् ॥ ३ । ४ । १७० ॥** तदस्य संजातमित्यतस्तदस्येत्यनुवर्तते । गुणो भागः । निमीयते परिवर्त्यते विक्रीयते वा येन तन्निमानं मूल्यम् । गुणस्य निमाने वर्तमानाया वान्ताया: संख्यायास्तार्थे निमेयेमभिधेये मयड् भवति । यवानां त्रयो भागा मूल्यमस्य उदश्विद्भहणस्येति त्रिमयम् । यवानां त्रिगुणमूल्यमित्यर्थः । त्रिमयी शर्करा । संख्याया एव त्यः । नेह, एको भागो निमानमस्योदश्विद्भागस्य । अथवा, वासमर्थायाः संख्याया गुणस्य निमेये वर्तमानाया निमानेभिधेये मयड् भवति । उदश्वितो द्वौ भागौ निमेयस्य यवभागस्य द्विमया यवा उदश्वितः । अत्रार्थे समर्थमुदश्वित् त्यार्थो यवाः ।

**तस्य पूरणे डट् ॥ ४।१।१ ॥** संख्याया इत्यनुवर्तते । एकादशानां पूरण एकादशो जिनः श्रेयान् । द्वादशी तिथिः ।

**नोऽसे मट् ॥ ४।१।२ ॥** वर्णग्रहणे तदन्तविधिः । नान्तायाः संख्याया असे मट् । पञ्चाना पूरणः पञ्चमः । नान्तायाः किम् ? विंशः । असे किम् ? एकादशः ।

**षट्कतिकतिपयचतुरां थुक् ॥ ४।१।३ ॥** एषां डति थुगागमः । अर्थवशादीनन्तत्वेन डटो विपरिणामः । षण्णां पूरणः षष्ठः । कतिथः । अत एव डट् । कतिपयथः । चतुर्थः । चतुरश्छयतावाद्यक्षरस्य खं च व० । तुरीयः । तुर्यः ।

**बहुपूगगणसंघस्य तिथुक् ॥ ४।१।४ ॥** डटि । बहुतिथः । पूगसंघाभ्यामसंख्यात्वेप्यतो वचनाड्डट् । पूगानां पूरणः पूगतिथः । गणतिथः । संघतिथः । बह्वीनां पूरणीति, ङ्यघे इति पुंवद्भावे तिथुक् । बहुतिथी ।

**वतोरिथुक् ॥ ४।१।५ ॥** वत्वन्तस्य डटि इथुग् भवति पूरणे । इयतां पूरण इयतिथः ।

**द्वेस्तीयः ॥ ४।१।६ ॥** डटोऽपवादः । द्वितीयः ।

**त्रेस्तृ च ॥४।१।७॥** चात्तीयः । तृतीयः ।

**शतादिमासार्धमाससंवत्सरात्तमट् ॥४।१।८॥** तस्य पूरणे । डटोपवादः । शततमः । सहस्रतमः । एकशततमः । मासादेरसंख्यात्वेन डट्यप्राप्तेऽतस्तमट् । मासस्य पूरणो मासतमो दिवसः ।

**तेरसंख्यादेः ॥४।१।९॥** पङ्क्त्यादिसूत्रेण कृतो यस्तिस्तदन्तादसंख्यादेस्तमड् भवति । वक्ष्यते विकल्पस्तदपवादोय नित्यार्थ. । षष्टेः पूरणः षष्टितमः । त्यग्रहणात्तदन्तग्रहणं प्राप्तमसंख्यादेरिति प्रतिषिध्यते । तेन,

**विंशत्यादेर्वा ॥४।१।१०॥** तमट् । पक्षे डट् । विंशतितमो, विंशः । एकषष्टितम, एकषष्टः । त्रिंशत्तमस्त्रिंशो वा । शतादेर्नित्यं तमड्विधानादयं विकल्पः शतात्प्राक् सर्वत्र, षष्ट्यादेस्तु सख्यादेः ।

**डटो ग्रहणे कः ॥४।१।११॥** डडिति प्रत्याहारः । पूरणार्थान्मृदः को भवति ग्रहणेर्थे स्वार्थे । द्वितीयं ग्रहणं द्वितीयकं,

व्याकरणस्य । ग्रन्थे एव । अन्यार्थे तु वाक्यमेव । डटो वा उव३० । तेन द्विकं च । त्रिकं, तृतीयकम् । तीयाभावे आदेशाभावः सन्नियोगोपदिष्टत्वात् । तेन गृह्णातीत्युप् च व. । डडन्ताद्वायुक्ताद्ग्रहणे को भवति डटश्च नित्यमुप्। द्वितीयेन गृह्णाति द्विको देवदत्तः । एवं त्रिकः । चतुष्कः ।

**स एषां ग्रामणीः ॥४।१।१२॥** कः । देवदत्तो ग्रामणी ( मुख्यो ) येषां ते देवदत्तकाः ।

**स्वाङ्गेषु प्रसिते ॥४।१।१३॥** कः । दन्तेषु प्रसितो दन्तकः । तत्रासक्त इत्यर्थः । बहुलात्तत्समुदयेऽपि । मुखदन्तकः ।

**तदस्मिन्नन्नं प्राये खौ॥४।१।१४॥** कः । त्रिपुटाः प्रायेण प्रायो वाऽन्नमस्यां त्रिपुटिका पौर्णमासी । प्रायादुपाध्यर्थे विषये वा ईप् । वटकेभ्य इन् व. । वटकिनी । खौ किम् ? अपूपाः प्रायेणान्नमवन्तिषु ।

**कुल्माषादण् ॥४।१।१५॥** पूर्वविषये । कापवादोण् । कुल्माषाः प्रायेणान्नमस्यां कौल्माषी पौर्णमासी ।

**कालप्रयोजनाद्रोगस्य ॥४।१।१६॥** क एव । खावेव । सततं कालोऽस्य सततको रोगः । प्रयोजनं निमित्तं फलं च । काशपुष्पं निमित्तमस्य काशपुष्पकः । शीतं फलमस्य शीतकः ।

**शृङ्खलकोदरिकसस्यकांशकतन्त्रकब्राह्मणकोष्णिकोष्णकशीतकाधिकानुकाभिकाभीकानुपदिपार्श्वकायःशूलिकदाण्डाजिनिकोरकश्रोत्रियसाक्षीन्द्रियक्षेत्रियाः ॥ ४।१।१७ ॥** एते

निपात्यन्तेऽर्थविशेषे । शृङ्खलं बन्धनमस्य शृङ्खलकः, करभ एव । उदरे प्रसक्त औदरिकः, अतिबुभुक्षित एव । अन्यत्र स्वाङ्गत्वात्के उदरकः । सस्येन परियुक्तः सस्यको मणिः । वैगुण्यराहित्येऽयं त्यः । अंशं हरति अंशको दायादः । तन्त्रादचिरेणापहृतस्तन्त्रकः कम्बलः । नूतन इत्येव । ब्राह्मणकोष्णिकोष्णकाः स्वावेव । यत्रा-युधजीविनो ब्राह्मणाः स ब्राह्मणको देशः । अल्पमन्नमस्या-मुष्णिका यवागूः । उष्णं यथातथा करोतीत्युष्णकः शीघ्रकारी एव शीतकः । जड इत्यर्थः । अध्यारूढात्को धुत्वं च स्वार्थे । कर्तरि त्ये, खारीमध्यारूढोऽधिको द्रोणः खार्याम् । कर्मणि त्ये, अध्यारूढाधिका खारी द्रोणेन । अनुकामयते अनुकः । अभिका-मयते अभिकः । अभेर्वा दीत्वनिपातनादभीकः । अनुपदी अनुपद-मन्वेष्टा गवादीनाम् । अत्रेन् त्यः । पार्श्वं पार्श्वेन वान्विच्छति पार्श्वकः । अयःशूलस्तीक्ष्ण उपायः । तेनान्विच्छत्यायःशूलिकः । साहसिकः । अत्र ठण् । दण्डाजिनेनान्विच्छति दाण्डाजिनिको दम्भ-प्रधानः । उत्कण्ठित उत्कः प्रवासी । छन्दोऽधीते, श्रोत्रियः । छन्दसः श्रोत्रादेशो घश्च त्योऽत्र । साक्षाद्द्रष्टा साक्षी । यो दत्त प्रतिग्रहीतृभ्यामन्य उपद्रष्टा । अत्रेन् खौ । इन्द्रस्यात्मनो लिङ्गं, तेन कर्मणा जुष्टं सृष्टं इष्टं दत्तं वा इन्द्रियम् । परक्षेत्रे चिकित्स्यः क्षेत्रियो, रोग एव । जन्मान्तरशरीरं परक्षेत्रमत्र ।

श्राद्धं भुक्तं ठोऽनेन ॥ ४।१।१८ ॥ श्रद्धा प्रयोजनमस्य श्राद्धं कर्म । श्राद्धं भुक्तमनेन श्राद्धिकः ।

**इन् ॥ ४।१।१९ ॥** इन् च । श्राद्धी । समानकाले एव । अद्य भुक्ते श्वो न श्राद्धिकः ।

**पूर्वात् ॥ ४।१।२० ॥** पूर्वं भुक्तमनेन पूर्वी ओदनम् । एव क्रियान्तरसंबन्धेपि । अनेनेति क्रियाक्षिप्यते ।

**सपूर्वात् ॥ ४।१।२१ ॥** पूर्वसूत्रे यत्क्रियापदमध्याहृतं तत्पूर्वात्पूर्वशब्दादनेनेत्यर्थे इन् । भुक्तपूर्वी ओदनम् ।

**इष्टादेः ॥ ४।१।२२ ॥** इष्टमनेन इष्टी यज्ञे । गणिती अङ्केषु ।

**तदस्यास्त्यस्मिन्निति मतुः ॥ ४।१।२३ ॥** इतिकरणाद्यत्रे विवक्षा तत्रैन । हस्तिन अस्यामस्या वा हस्तिमती शाला । **गुणवचनेभ्यो मत्वर्थीयस्योब् व०** । शुक्लो गुणोस्यास्ति शुक्लः पट. । एव कृष्णः । इह द्रव्यमपि ये आहुस्ते एव गुणशब्देन गृह्यन्ते । तेन **रसादिभ्यो मतुर्व०** । रसवान् । स्ववान् । अन्यमत्वर्थनिवृत्त्यर्थमिदम् । कथं तर्हि रूपिणी² अगुणार्थत्वादितिकरणाद्वा । **ममोङ्ञयो मतोर्वोऽयवादेः ॥ ३।३।३१ ॥** इत्युक्तं चातुरर्थिकेषु । **परस्याटेरिति मस्य वः** । तुम्वान् । शर्मावान् ।

---

( १ ) तदन्तविधिना पूर्वेण सिद्धे पुनर्वचनमिद ज्ञापन यदस्तीद परिभाषाद्वय, मृद्ग्रहणे न तदन्तविधि , व्यपदेशिवद्भावो न मृदा इति च ।

( २ ) त्तस्येन्विषयस्य कर्मणीव्यक्तव्येति वचनेन ईप् ।

( ३ ) भूमनिन्दाप्रशसासु नित्ययोगेतिशायने । ससर्गेस्तिविवक्षाया मत्वादिविधिरिष्यते । प्रायोग्रहणाद्भूमाद्यभावेपि विवक्षा चेत । यथा व्याघ्रवान् पर्वत । ( ४ ) दंगरवान्धी ।

गुणवान्। यशस्वान्। झयः, मरुत्वान्। अत्र 'स्वादावघे' इति पदत्वेन जश्त्वे प्राप्ते,

**मत्वर्थे स्तौ॥ १।२।१०७॥** मत्वर्थे त्ये परतः सान्तं तान्तं च भसंज्ञं भवति। इति न स्यात्। तत एव 'वसोर्जि.॥४।४।११८॥' इति भस्य जित्वे विदुष्मान्। अयवादेः किम्? यवमान्। गणोक्तत्वात् खाविति वक्ष्यमाणेनापि प्राप्तो निषिध्यते। द्रुमती। आकृतिगणोयम्। तेन नार्मेत इत्यत्रापि मतुप्। नृमत इदमित्यर्थेणि ऐपि जात आकारो बहिरङ्ग'। तेनात्र वत्वाभावः।

**खौ ॥५।३।३२॥** खौ च मतोर्मस्य वादेशो भवति। ऊर्मीवती। मतौ बह्वच्छरादेरिति साश्रये उक्त दीत्वम्। नद्या मतुरिति चातुरर्थिकोत्र मतुः।

मत्वर्थाच्छैपिकाच्चापि मत्वर्थश्शैपिकस्तथा।
स्वरूपस्त्यविधिर्नेष्टः सन्नन्तान्न सनिष्यते॥

**चर्मण्वदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् ॥ ५। ३। ३३ ॥** एते निपात्यन्ते खौ। चर्मण्वती नदी। चर्मवतीत्यन्यत्र। अत्र नखे नुडागमो अट्कुप्वाडिति णत्वं च तस्य। अष्ठीवान् कायैकदेशः। अस्थ्नोऽष्ठीभावो वत्वं चात्र। अस्थिमानन्यत्र। चक्रीवान् अस्यैत्वम्। चक्रवानन्यत्र। कक्षीवान्। कक्ष्याया जि.। 'हल' इति दीत्वं च। कक्ष्यावानन्यत्र। रुमण्वान् पर्वतः। लवणस्य रुमण्।

---

१-आसनपर्याय आसन्दी-शब्दोस्ति। तदुक्तम्, अन्दुवरी राज आसन्दी भवति। अत एव सिद्धेः सूत्रे निपातनं न कृतम्।

त्वणवानन्यत्र । शब्दान्तरं वा रुमण् । मतोर्नुडर्थे तर्हि ग्रहणम् ।

उदन्वानुदधौ ॥५।२।३४॥ उदकस्य धेयत्वेन यत्र प्रयोगस्तत्रोदकस्योदन्भावो निपात्यते मतौ । उदन्वानुदधिराश्रमो घटो वा । यदा तूदकमस्यास्तीति संबन्धमात्रविवक्षा तदा उदकवान् घटः ।

राजन्वान् सौराज्ये ॥५।३।३५॥ शोभनराजसंबन्धे निपातोयम् । राजन्वान्देशः । राजन्वती पृथ्वी । प्रशंसायामेव । नेह, राजवती प्रजा ।

प्राण्यङ्गादातो वा लः ॥ ४।१।२४ ॥ प्राण्यवयववाचकाद्रान्तान्मत्वर्थे वा लो भवति पक्षे मतुश्च । जटालो, जटावान् । प्राणिन एव । नेह, शिखावान् दीपः । अवयवत्वाभावान्नेह, चिकीर्षावान् । आतः किम् ? हस्तवान् । जन्तुपताषाभ्यां वेष्यते । यूकालः । मूर्छालः ।

सिध्मादेः ॥४।१।२५॥ लो, मतुश्च । सिध्मलः सिध्मवान् । वातदन्तबलललाटानामूङ् च ( ग० ) । वातूलः ।

फेनादिलश्च ४।१।२६॥ चाल्लः, पक्षे मतुश्च । फेनिलं, फेनलं, फेनवदुदकम् । पिच्छादेश्च वा० । पिच्छिलः, पिच्छलः, पिच्छवान् ।

लोमपामादिभ्यां शनौ॥४।१।२७॥ लोमादेः शः ।पामादेर्नः । वानुवृत्तेर्मतुरुभयत्र । लोमा अस्य सन्ति लोमशो, लोमवान् ।

पामनः, पामवान्। अङ्ग कल्याणे (ग०)। कल्याणान्यङ्गान्यस्या अङ्गना। अङ्गवत्यन्या। लक्ष्म्या अच (ग०)। लक्ष्मणः।

**प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ॥४।१।२८॥** वानुवृत्तेर्मतुश्च। प्राज्ञः, प्रज्ञावान्। श्राद्धः, श्रद्धावान्। आर्चः, अर्चावान्। वार्तो, वृत्तिमान्।

**तपःसहस्राभ्यां विनिनौ ॥४।१।२९॥** तपसो विन्, सहस्रादिन्। मतुश्च। तपस्वी, तपस्वान्। सहस्री, सहस्रवान्। अणाऽबाधनार्थं तपोग्रहणम्।

**अण् ॥४।१।३०॥** तपःसहस्राभ्याम्। तापसः। साहस्रः। ज्योत्स्नादिभ्य उप०। ज्यौत्स्नः पक्षः। तामिस्रः।

**सिकताशर्कराभ्याम् ॥४।१।३१॥** अण् मत्वर्थे। सैकतः। शार्करः।

**उसिलौ च देशे ॥४।१।३२॥** उसादेश इल् च त्यो भवति। चादण् मतुश्च। उस् अणमतोरेव वा। सिकता, सिकतिलः, सैकतः, सिकतावान् वा देशः। एवं शर्करा, शर्करिलः, शर्करावान् वा। देशे एव। नेह, सैकतो घटः। शार्करः पिण्डः।

**मधूषसुषिमुष्काद्रः ॥४।१।३३॥** मतुरपि। मधुरो गुडः। ऊषरं क्षेत्रम्। सुषिरो वंशः। मुष्करः पशुः। ऊषः क्षारमृत्तिका। सुषिश्छिद्रं नलिका वा। मुष्कोऽण्डकोशः। खमुखकुञ्जेभ्य उपसंख्यानम्। खं महत्कण्ठविवरमस्य खरः। मुखरः। कुञ्जरः। नगपांसुभ्यां च। नगरम्। पांसुरम्।

**द्युद्रुभ्यां मः ॥ ४।१।३४॥** द्युमः । द्रुमः । रूढार्थाविवक्षाया तु मतुः । द्युमान् । द्रुमान् ।

**केशाद्वो वा ॥ ४।१।३५ ॥** अयं वा सर्वविकल्पार्थः । तेन वक्ष्यमाणौ ठेनावपि । अनुवृत्तवाशब्देन तु मतुसंग्रहः । केशवः, केशवान्, केशिकः, केशी । मणिप्रभृतिभ्यो व० । मणिरस्यास्ति मणिवः । राजीवः । अर्णसः खं च व० । अर्णवः ।

**गाण्डयजकात् खौ ॥ ४।१।३६ ॥** गाण्डीवं गाण्डिवं वा धनुरर्जुनस्य । अजकवं धनुर्महेशस्य । अखौ तु गाण्डीमान् दण्डः ।

**काण्डाण्डादीरः ॥ ४।१।३७ ॥** ठेनोरपवादः । वानुवर्तनान्मतुश्च । काण्डीरः, काण्डवान् वा । अण्डीरः, अण्डवान् वा ।

**रजःकृष्यासुतिपरिषदो वलः ॥४।१।३८॥** रजसो विनि इतरेभ्यश्च मतौ प्राप्ते वचनम् । रजस्वला नारी । कृषीवलः कुटुम्बी । आसुतिर्मद्यसंधानम् । आसुतीवलः । 'वल' इति दीः । परिषद्वलो राजा । परिषदः सामान्येन, इतरेभ्यस्तु खावेव । तेनेह न, रजोऽस्मिन्ग्रामेऽस्ति । योगविभागादन्येभ्योऽपि व० । पुत्रवल ।

**दन्तशिखात्खौ ॥४।१।३९॥** वलः । दन्तावलः । शिखावलः । तदन्तेन सञ्ज्ञागम्यत्वे मतुरपि । शिखावानृपि ।

**ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलवत्सलांशलदन्तुरहस्तिन्गोमिन्स्वामिन्वर्णिन्मलिनमलीमसाः ॥४।१।४०॥** निपात्यन्ते । ज्योत्स्ना चन्द्रप्रकाशः । ज्योतिष्मत्यन्यत्र । तमिस्रा

रात्रि । स्त्रीत्वमतन्त्रमत्र । तमिस्र नभः । शृङ्गिणः शृङ्गवान्वा पशुः । ऊर्जस्वी ऊर्जस्वलश्च बली । वत्सलः साधुस्नेहवान् । अंसलो बली । उन्नतः दन्तो अस्य दन्तुरः । हस्ती जातिविशेषः । गोमी गोमान्वा । स्वामी ईश्वरः । वर्णी ब्रह्मचारी । मलिनमली मसौ शब्दान्तरे । यतो मतुना रूढता न गम्यते ततो नात्र मतुः ।

ठेनावतः ॥४।१।४१॥ छत्रिरङ्गत्री वा । वानुवर्तनान्मतुश्च । छत्रवान् । अत एव । नेह, खट्वावान् । एकाक्षरात्कृतो जातेरीचश्च न तौ अनभिधानादेव । एकाक्षरात्, स्ववान् । कृतः, कारकवान् । जातेः, सिंहवान् । ईवर्थे, दण्डा अस्याः सन्ति दण्डवती शाला । यत्र त्वभिधानं तत्र स्यातामेव । तन्दुली, तन्दुलिकः ।

व्रीह्यादेः ॥ ४।१।४२ ॥ ठेनौ मतुश्च । व्रीहिकः, व्रीही, व्रीहिमान् । प्रयोगनियामकमितिशब्दमनुवर्त्य शिखादिभ्य इन्, यवखदादिभ्यष्ठ, शेषेभ्य उभयं विधेयम् । शीर्षान्नञः (ग० )। अशीर्षिकः अशीर्षी ।

तुन्दादेरिलः ॥४।१।४३ ॥ ठेनौ मतुश्च । तुन्दमस्यास्ति तुन्दिलः, तुन्दिकः, तुन्दी, तुन्दवान् । पिच्छादयोऽपि इलार्थाः । पिच्छिलः । जटाघाटाकालाभ्यः क्षेपे (ग० )। जटिलः ।

एकगोपूर्वाट्ठञ् नित्यम् ॥ ४।१।४४ ॥ ऐकहलिकः । गौसहस्रिकः । नित्यं किम्[1] ठेनौ मतुश्च यथा न स्युः ।

---

[1] इत्यर्थ एते कृतत्र ठञ । पञ्चाद्भ्रमे मनि मत्वर्थीया न प्राप्नोति तथा प्यत्र वचनाद्भवति ।

**निष्काच्छतसहस्रात् ॥ ४।१।४३ ॥** ठञेव। नैष्कशतिकः। नैष्कसहस्रिकः।

**रूप्यहिम्यगुण्याः ॥ ४।१। ४६ ॥** निपात्यन्ते। रूपादाहतप्रशंसयोर्यः। आहतं प्रशस्तं वा रूपमस्य रूप्यः। हिम्यः पर्वतः। गुण्यस्तपस्वी। मतुश्च, नित्यशब्दस्य ठञा सह निवृत्तेः। तेन रूपवान्। हिमवान्। गुणवान्।

**विन्नस्मायामेधास्रजः ॥ ४।१।४७ ॥** ओजस्वी। तेजस्वी। मायावी। मेधावी। मतुश्च। मेधायास्तु व्रीह्यादित्वाट्ठेनौ च। स्रग्वी। 'स्वादावधे' इति पदत्वात् 'क्वित्यस्य कुः' इति कुत्वम्।

**वाचो ग्मिन् ॥ ४।१।४८ ॥** वाग्मी।

**बहुलापिन्यालाटौ ॥ ४।१।४९ ॥** कुत्सायाम्। वाचालो वाचाटो वा बहुभाषी।

**अर्शोऽदेरः। ॥ ४।१।५० ॥** अर्शसः। उरसः। जटाघटाभ्यां सिध्मादित्वाल्लमतू, तुन्दादित्वादिलश्च। जटालो, जटिलो, जटावन्।

**द्वन्द्वोपतापगर्ह्यात् प्राणिनीन् ॥४।१।५१॥** कटककेयूरिणी। अप्राण्यङ्गादेव व०॥ नेह, पाणिपादवती। उपतापो व्याधिः। तेन, कुष्ठी। गर्ह्यात्, ककुदावर्ती। प्राणिनि किम्? पुष्पफलवान् वृक्षः। ठमत्वोर्बाधनार्थत्वादत एव। नेह, कटककण्ठिकावती।

**वातातीसाराभ्यां कुक् ॥ ४।१।५२ ॥** उपतापत्वात्पूर्वेणेनि सति कुगर्थं वचनम्। वातकी। अतीसारकी। पिशाचाच्च व०। पिशाचकी।

**डटो वयसि ॥ ४।१।५३ ॥** डडन्तान्मुट इन्नेव भवति वयसि गम्यमाने । नवमो मास संवत्सरो वास्य नवमी उष्ट्र ।

**सुखादेः ॥४।१।५४॥** इन्नेव । सुखी । मालात्क्षेपे (ग०) । माली । मालवान्-यत्र, माली च ।

**धर्मशीलवर्णान्तात् ॥४।१।५५॥** इन्नेव । तपस्विधर्मी । तपस्विशीली । क्षत्रियवर्णी ।

**पुष्करादेर्देशे ॥ ४।१।५६ ॥** देशेऽर्थे इन्नेव । पुष्करिणी । पद्मिनी । देशसंज्ञा । नेह, पुष्करवान् हस्ती । **बलाद्बाहूरुपूर्वादुप सं०** । बाहुबली । ऊरुबली । **सर्वादेश्च** । सर्वबली । सर्वजीवी । **अर्थाद्वाऽसन्निहिते** । अर्थी, अर्थाभिलाषवानिति । सन्निहिते तु अर्थवान् । **तदन्ताद्वा** । धान्यार्थी । **शृङ्गवृन्दाभ्यामारको व०** । शृङ्गे अस्य स्त शृङ्गारक । **फलबर्हाभ्यामिन** । फलिनो वृक्ष । बर्हिणो मयूर । **हृदयादालुर्वा व०** । हृदयालु । पक्षे ठेन्मतवश्च । **शीतोष्णतृप्रेभ्यः तन्न सहते इत्यालुर्व०** । शीत न सहते शीतालु । उष्णालु । **हिमाच्चेलुर्व०** । हिमेलु । **बलादूलः** । बलूल **वातात्समूहे च** । वातसमूहो वात न सहते वा वातूल । **तः पर्वमरुद्भ्याम्** । पर्वत । मरुत्त ।

**वलादेर्मतुर्वा ॥४।१।५७॥** पक्षे इन् प्रकृत । बलवान्बली वा । एतद्वचनाज्ज्ञायते यदिन्विषये मतुर्न स्यात् ।

**मन्माभ्यां खौ ॥ ४।१।५८॥** इन् खुविषये मत्वर्थे । मन्नन्तात्, चार्मिणी । चर्मण्वतीति त्वर्थविशेषे निपातनादुक्तम् । मान्तात्, भामिनी ।

**तुन्दिवटिवलेर्भः** ॥ ४।१।५९ ॥ विवृद्धा नाभिस्तुन्दिः। सोऽस्यास्ति तुन्दिभः। अत्र 'स्वाङ्गविवृद्धौ' इति प्राप्तौ वचनम्। वटिभः। अत्र मतुप्राप्तौ वचनम्। वलिभः। अत्र पामादित्वान्नमतू अपि। वलिनो, वलिमान्।

**कंशंभ्याम्** ॥४।१।६०॥ भः। कंभः। शंभः।

**वयस्तितुताः** ॥४।१।६१॥ कंशंभ्यामेव। कंवः, कंयः, कंतिः, कंतुः, कंतः। एवं शंव इति।

**ऊर्णाहंशुभंभ्यश्च युस्** ॥ ४।१।६२ ॥ चात्कंशंभ्याम्। ऊर्णायुः। अहंयुः। शुभंयुः। कंयुः। शंयुः।

**सूक्तसाम्नोश्छः** ॥४।१।६३॥ मृदश्छो भवति मत्वर्थे सूक्ते सामनि चाभिधेये सति। मित्रावरुणशब्दोऽस्मिन्नस्ति मैत्रावरुणीयं सूक्तम्। यज्ञीयं साम। मतुठेनामपवादोयम्।

**अध्यायानुवाकयोर्वोप्** ॥४।१।६४॥ मृदश्छो भवत्येतयोर-भिधेययोर्मत्वर्थे, तस्य चोब्वा। कुर्वमुखशब्दोऽस्त्यस्मिन्निति कुर्वमु-खीयः कुर्वमुखो वाऽध्यायोनुवाको वा।

**विमुक्तादिभ्योऽण्** ॥४।१।६५॥ पूर्वस्मिन्विषये। विमुक्तश-ब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायोनुवाको वा।

**घोपदादेर्वुन्** ॥ ४।१।६६॥ पूर्वविषये। घोपदकोध्यायोनुवाको वा। गोषद-घोपदिति च केषांचित्पाठभेदः।

**धनहिरण्ये कामे** ॥ ४।१।६७॥ वुन्। धने कामोभिलाषो धनकः। हिरण्यको देवदत्तस्य। तद्विषयिणीच्छेत्यर्थः।

इति मत्वर्थीयाः।

---

## अथ विभक्तीसंज्ञाः स्वार्थिकाः ।

**किंबहुसर्वनाम्नोऽद्व्यादेः ॥ ४।१।६८॥** किमो बहुशब्दात् सर्वनाम्नश्च द्व्यादिवर्जिताद्वक्ष्यमाणास्त्या भवन्ति । अधिकारोयं ते विभक्त्य इत्यतः प्राक् । वानुवर्तते । द्वितीयस्य प्रतियोगिनोऽसंभवात् ' समर्थात्प्रथमात् इति शब्दौ नानुवर्तेते । बहुरत्र सङ्ख्यार्थः ।

**इदम इश् ॥ ४।१।६९॥** इदम इशादेशो भवति वक्ष्यमाणेषु तसादिषु परतः । शित्वं सर्वादेशार्थम् ।

**एतेतौ र्थो ॥ ४।१।७० ॥** इदमो रेफादौ परत एत आदेशो भवति थादौ त्वित् । इशोपवादोयम् ।

**एतदः ॥ ४।१।७१ ॥** एतदश्च एतेतौ भवतो र्थोः परतः ।

**अश् ॥ ४।१।७२ ॥** एतदोऽश् इत्यादेशो भवति तसादौ त्ये परतः ।

**कायास्तस् ॥ ४।१।७३ ॥** कान्तात्किमादेरद्व्यादेस्तस् भवति स्वार्थे । बहुभ्यो बहुतः । यस्माद् यतः । तस्मात् ततः । अस्माद् इतः । इदम इशिति इश् । एतस्माद् अतः । अशित्यश् । तसि कृतेत्र ' सुपो धुमृदोः ' इति काया उप् । एवं सर्वत्र । द्व्यादेस्तु द्वाभ्यामित्येव । किमस्तसि,

**कुक्वौ तऽयोः ॥५।१।१६३ ॥** किमः कु आदेशो भवति तकारादौ त्ये परतः अकारे तु क इति । कुतः ।

**तसेः ॥ ४।१।७४ ॥** कायास्तसिरित्यादिना विहितस्य तसेः

किंबह्वादिभ्यः परस्य तसादेशो भवति। कुत आगतः। वक्ष्यते विभक्तीसंज्ञा तसादीनाम्। तदर्थमिहादेशोयम्।

**पर्यभिभ्याम् ॥ ४।१।७५ ॥** आभ्यां तस् भवति। परितः। अभितः। **यथासंख्यं सर्वोभयार्थे एवेष्यते।** सर्वतः, उभयत इत्यर्थः। नेह, परिभवति।

**तस्यऽन्तिकस्य कादेः ॥ ४।४।१४० ॥** अन्तिकस्य ककारादेः खं भवति तसि परतः। अन्तिकादऽन्तितः आगतः: **तमे परतस्तादेः कादेश्चान्तिकस्य खं व०।** अतिशयेनान्तिका अन्तमः। अन्तितमः।

**ईपस्त्रः ॥ ४।१।७६ ॥** अह्न्यादेः किमादेरीबन्तात् त्र इत्ययं त्यो भवति स्वार्थे। यस्मिन्निति यत्र। तत्र। बहुत्र। किमिदं-भ्यां तु ईपि,

**इदमो हः ॥ ४।१।७७ ॥** ईबन्तादिदमो ह इत्ययं त्यो भवति। त्रापवादः। इदम इश्। इह।

**किमोऽः ॥ ४।१।७८ ॥** ईबन्तात्किमः अ इत्ययं त्यो भवति। त्रापवादः। 'कुकौ तयोः' इति कादेशे, क। कुत्र इति तु चिन्त्यं त्रापवादत्वादत्यस्य।

**दृश्यन्तेऽन्यतोपि ॥ ४।१।७९ ॥** कामीपं च विहायान्य-विभक्त्यन्तेभ्योपि किमादिभ्यो दृश्यन्ते तसादयः। क? भवद्दी-

---

१ अन्ये बहवो मन्यन्ते कुत्र इति प्रयोगम्।

र्घायुर्देवानांप्रियायुष्मदादिशब्दानां प्रयोगे सति । ततो भवान्, तत्र भवान्, स भवान् वा । इत्यादि । एवमितो गतः । अनेन गतः । इत्यादि च ।

**दैकान्यकियत्तदः काले ॥ ४।१।८० ॥** ईप्समर्थेभ्य एकान्यकियत्तद्भ्यः काले वर्तमानेभ्यो दा इत्ययं त्यो भवति स्वार्थे । त्रापवादः । एकस्मिन्काले एकदा । अन्यदा । कदा । यदा । तदा । काले किम् ? एकत्र ।

**सर्वस्य सो वा दि ॥ ४।१।८१ ॥** सर्वस्य सादेशो वा भवति दात्ये । अत एव दाविधिः । सर्वदा सदा वा ।

**इदमो र्हि ॥ ४ । १ । ८२ ॥** ईबन्तादिदमः काले र्हित्यो भवति । दस्यापवादः । अस्मिन्काले एतर्हि । एतेतौ थोरिति एतादेशः । अकाले तु इह देशे इत्येव ।

**अधुना ॥ ४।१।८३ ॥** इदमोऽधुना च निपात्यते । इदम इश् अधुना-त्ये । ' यस्य ङ्यां च ' इति इकारस्य खम् । अधुना काले ।

**दानीम् ॥ ४।१।८४ ॥** ईबन्तादिदमः काले दानीं च त्यो भवति । अस्मिन्काले इदानीम् ।

**तदः ॥ ४।१।८५ ॥** ईबन्तात्काले एव । तदानीं पूर्वे । तदा इत्यपि ।

**वाऽनद्यतने र्हि ॥ ४।१।८६ ॥** ईबन्ताद्द्व्यादेः किमादेरनद्यतने काले र्हि-त्यो भवति । पक्षे यो यतो विहितः सोपि

भवति । कर्हि, कदा । यर्हि, यदा । अमुर्हि । अमुत्र । अद्यतने तु दा एव ।

**पूर्वान्यान्यतरेतरापरावरोभयोत्तरेभ्योऽह्न्येद्युस् ॥ ४।१।८७॥** ईबन्तेभ्योऽहनि वर्तमानेभ्यः पूर्वादिभ्य एद्युस्त्यो भवति । पूर्वेऽहनि पूर्वेद्युः । अन्येद्युः । अन्यतरेद्युः । द्युश्चोभयाद्वक्तव्यः । उभयद्युरुभयेद्युर्वा ।

**सद्योऽद्यैषमःपरेद्यविपरुत्परारि ॥४।१।८८॥** कालेऽर्थे एते निपात्यन्ते । समानस्य सभावो द्यश्चाहनि । समानेऽहनि सद्य. । इदमोऽश्भावोऽहनि द्य च त्यः । अस्मिन्नहनि अद्य । इदम इश् समसण् च त्यः संवत्सरे । अस्मिन्सवत्सरे ऐषमः । परशब्दादहनि एद्यवि । परस्मिन्नहनि परेद्यवि । पूर्वपूर्वतरयोः परादेश उदाऽऽरि च त्यौ सवत्सरे । पूर्वस्मिन्सवत्सरे परुत् । पूर्वतरे संवत्सरे परारि । परपरतरयोरपि उदारी स्याताम् । परुत् परारि वा दास्यामि ।

**प्रकारे था ॥४।१।८९॥** ईप इति काले इति च निवर्तेते । प्रकारे वर्तमानात्सर्वविभक्त्यन्तादद्व्यादेः किमादेस्था-स्त्यो भवति स्वार्थे । सामान्यस्य भेदको विशेषनिर्देशः प्रकारः । सर्वेण प्रकारेण सर्वथा । यथा ।

**किमिदंभ्यां थम् ॥ ४।१।९०॥** प्रकारे । थापवादोयम् । केन प्रकारेण कथम् । एतेतौ थों । इत्थम् ।

---

१-अथ प्रकारमात्रे त्यो, जातीयस्तु प्रकारवति । यज्जातीयः ।

**ते विभक्तयः** ॥ ४।१।९१॥ ते तसादयस्त्या विभक्तीसंज्ञा भवन्ति। विभक्तीकार्यं यथोदाहरणं द्रष्टव्यम्। इति विभक्तीसंज्ञाः स्वार्थिकाः।

## अथ प्रकृत्यर्थाः स्वार्थिकाः।

**दिक्छब्देभ्यो वाकेभ्योऽस्ताद्दिग्देशयोः** ॥४।१।९२॥ दिशां शब्देभ्यो दिग्देशवृत्तिभ्यो वाकेबुविभक्त्यन्तेभ्योऽस्तादित्ययं त्यो भवति स्वार्थे। 'पूर्वावराधराणां पुरऽवऽधोऽसि, अस्ताति' इत्यादेशा वक्ष्यन्ते। पूर्वा दिग् रमणीया पुरस्ताद्रमणीया। पूर्वो देशो रमणीयः पुरस्ताद्रमणीयः। पूर्वस्या दिशः पूर्वस्माद्वा देशादागतः पुरस्तादागतः। पूर्वस्यां दिशि पूर्वे वा देशे वसति पुरस्ताद्वसति। दिक्छब्देभ्यः किम्? ऐन्द्री रमणीया। दिग्विशेषणत्वेपि नायं शब्दो दिशि रूढः। वाकेभ्यः किम्? पूर्वां दिशं गतः। दिग्देशयो' किम्? पूर्वस्मिन् गुरौ वसति।

**काले** ॥४।१।९३॥ दिग्देशयोरिव काले वर्तमानेभ्योऽपि वाकेबन्तेभ्यो दिक्छब्देभ्योऽस्तात् त्यो भवति। वाकेभ्यो याथासंख्यनिवृत्त्यर्थं योगविभागः। उदाहरणं पूर्ववत्।

**दक्षिणोत्तराभ्यामतस्** ॥ ४।१।९४ ॥ आभ्यां दिग्देशकालेषु यथासंभवं वर्तमानाभ्यां वाकेबन्ताभ्यामतस् त्यो भवति। अस्तातोपवादोयम्। दक्षिणतो रमणीयम्।

**वा परावराभ्याम्** ॥ ४।१।९५ ॥ परतो रमणीयम्। परस्ताद्रमणीयम्।

**अञ्चेरुप्** ॥ ४।१।९६ ॥ अञ्चत्यन्तेभ्यो दिक्छब्देभ्यः परस्यास्तात उब्भवति। प्राची दिशो रमणीयम्। प्रत्यगागतः।

उपर्युपरिष्टात्पश्चात् ॥ ४।१।९७ ॥ अस्तादर्थे निपात्यन्ते एते । ऊर्ध्वस्य उपादेशो रिरिस्तातौ च त्यौ निपात्येते । ऊर्ध्वा दिग्रमणीया उपरि उपरिष्टाद्वा रमणीयम् । अपरस्य परस्य वा पश्चभाव आच्च त्यो निपात्यते । अपरो देशो रमणीयः पश्चाद्रमणीयम् ।

दक्षिणोत्तराधरादात् ॥४।१।९८॥ अस्तादर्थेयमात् । दक्षिणाद् रमणीयम् । दक्षिणाद्रमणीया । दक्षिणादागत । दक्षिणाद्वसति ।' उक्तस्यास्तातोऽपवादोयम् । अधराद्वक्ष्यमाणस्त्वस्तात् स्यादेव ।

वैनोऽदूरेऽकायाः ॥४।१।९९॥ दक्षिणोत्तराधरेभ्यो वा एनो भवति अस्तादर्थेऽदूरे गम्ये । काया पर्युदासाद्वेवऽन्तेभ्य एव । दक्षिणेन रमणीयम् । दक्षिणेन ग्रामे वसति । वावचनाद्यथाप्राप्तं च । अदूरे किम् ? हिमवतो दक्षिणाद्वसति ।

दक्षिणादा ॥ ४।१।१०० ॥ अकायाः । अस्तादर्थे । दक्षिणा रमणीयम् । इह दूरादूरयोर्न विशिष्यापेक्षा, उत्तरत्र दूरग्रहणात् ।

आहि च दूरे ॥ ४।१।१०१ ॥ अकाया दक्षिणात् । अस्तादर्थे । दूरे गम्ये । दक्षिणाहि रमणीयम् । दक्षिणाहि वसति ।

उत्तराच्च ॥ ४।१।१०२ ॥ अकाया दूरे वर्तमानादुत्तरशब्दादा आहि च त्यौ भवतोऽस्तादर्थे । उत्तरा रमणीयमुत्तराहि वा ।

पूर्वावराधराणां पुरऽवऽधोऽसि ॥ ४।१।१०३ ॥ अकाया दूरे इति निवृत्तम् । एषामस्तादर्थेऽसि त्ये परतः क्रमात्पुर् अव् अध्

केचिद्दक्षिणोत्तराधरानानुवर्तयन्ति । दिक्छब्दमात्रादेवेच्छन्ति । अध-स्यन्तादनभिधानादेव न स्यात् ।

इत्यादेशा भवन्ति । असो विधानमप्यनेनैव । पुरो रमणीयम् । पुर आगत । पुरो वसति ।

**अस्ताति ॥ ४।१।१०४ ॥** अस्ताति च परे पूर्वादीना पुरादयो भवन्ति । अस्तात्योऽप्यत एव स्यात् । पुरस्ताद्रमणीयम् ।

**वाऽवरस्य ॥ ४।१।१०५॥** अवादेश । अवस्ताद्रमणीयम् । अवरस्ताद्रमणीयम् ।

**संख्याया विधार्थे धा ॥ ४।१।१०६ ॥** सख्याशब्देभ्य प्रकारेर्थे धा इत्यय त्यो भवति स्वार्थे । विभक्तीयोगस्तु यथासमवम् । प्रकारो हि द्रव्यगुणक्रियाविषयः । अत एव ' अधिकरणविचाले च ' इति न वक्तव्य, द्रव्यादिविधार्थेन गतार्थत्वात् । एक राशिं प्रञ्चधा कुरु । अत्राधिकरण द्रव्य, तस्य विचालः सख्यान्तरापादनम् । स इह संभवति । षोढा द्रव्यम् । बहुधा गुणाः । पञ्चधा करोति । जातीयस्यापवादोयम् ।

**वैकाद् ध्यमुञ् ॥ ४।१।१०७ ॥** पक्षे धा । ऐकध्यमेकधा वा ।

**द्वित्रेर्धमुञ् ॥ ४।१।१०८ ॥** वानुवर्तनाद्धा च । द्वैध द्विधा । धमुञन्तात्स्वार्थे डो व० । पथिद्वैधानि ।

**एधा ॥ ४।१।१०९॥** द्वित्रिभ्यामेव । विधार्थे । द्वेधा । त्रेधा ।

**याप्ये पाशः ॥ ४।१।११० ॥** याप्यन्तेऽपनीयन्ते गुणा अस्मादिति याप्यः कुत्सितः । अत्रार्थे पाश—त्यो भवति स्वार्थे । याप्यो वैयाकरणो वैयाकरणपाशः । यस्य गुणस्य हि भावाद्द्रव्यशब्दविनिवेशस्तत्कुत्सने एव तच्छब्दात् पाश । नेह, चौरो वैयाकरण । याप्या कुमारी कुमारपाशा । " तसादौ " इति पुवद्भाव ।

षष्ठाष्टमाद्भागे ञः ॥ ४।१।१११ ॥ षष्ठो भागः षाष्ठः । आष्टमः । षष्ठोऽष्टमश्च वा, वाधिकारात् ।

मानपश्वङ्गयोः कोपौ च ॥ ४।१।११२ ॥ षष्ठाद्भागे मानविशेषे को भवति, अष्टमात्पश्वङ्गे भागविशेषे विहितस्य ञस्योप्भवति च । षष्ठको भागो मानं चेत् । अष्टमो भागः पश्वङ्गं चेत् । उब्विधानसामर्थ्याद्वा आन्तोपि भवत्येव ।

एकादाकिंश्चासहाये ॥ ४।१।११३ ॥ असहायवाचिनः एकशब्दादाकिन् भवति स्वार्थे, कोपौ च । उप् कस्य । एकाकी एकक एकः । असहाये किम् ? संख्यादिवाचकत्वे मा भूदिति ।

तमेष्ठावतिशायने ॥ ४।१।११४ ॥ सर्वेषां स्वार्थिकत्यानां प्रकृत्यर्थविशेषणत्वमेव । तद्वदतिशायनमतिशयः प्रकर्षः, तदपि प्रकृत्यर्थविशेषणम् । अतिशायनविशिष्टेऽर्थे वर्तमानान्मृद स्वार्थे तमेष्ठौ त्यौ भवतः । सर्वे इमे पटवः । अयमेषामतिशयेन पटुः पटुतमः । आढ्यतमः । कारकतमः । इष्ठे टिखम् । पटिष्ठः ।

मिङः ॥ ४।१।११५ ॥ मिङन्तादतिशयेऽर्थे द्योत्ये मृदस्तमो भवति ।

द्विविभज्ये तरेयसू ॥ ४।१।११६ ॥ द्व्यर्थे विभक्तव्ये प्रयुक्ते सति द्व्याम्मृदो मिङश्च तर ईयसु इत्येतौ त्यौ भवतोऽतिशये द्योत्ये । तमेष्ठयोरपवादः । नेह याथासंख्यमस्वरितत्वात् । अयमनयोराढ्य आढ्यतरः । अयमनयोः पचतितराम् । द्वाविमौ पटू । अयमनयोः पटुतरः ।

**तादी झः** ॥४।१।११७॥ अतिशायनेर्थे चत्वारस्त्यास्तेषु तादी द्वौ तरतमौ झसंज्ञौ भवतः । झसंज्ञाफलं हि—

**किमेमिङ्झिझादामद्रव्ये** ॥ ४।२।२० ॥ किम एकारान्तान्मिङो झिसंज्ञाच्च परो यो झसंज्ञस्त्यस्तदन्तान्मृद आमिति त्यो भवति, न चेद् द्रव्यप्रकर्षविवक्षा । पचतितमाम् । किंतमाम् । पूर्वाह्णेतराम् । उच्चैस्तमाम् ।

**शेषौ गुणवचनादेव** ॥४।१।११८॥ तादी द्वौ मुक्त्वा शेषौ द्वाविष्ठेयसू त्यौ गुणवाचकादेव भवतः । पटिष्ठः पटीयान् । अगुणत्वान्नेह, गोतम. । तादी तु गुणवचनादगुणवचनाच्च सामान्येन ।

**तुरिष्ठेमेयःसु** ॥४।४।१४२॥ तृत्यस्य खं भवतीष्ठेमेय सु परतः । हरिष्ठ । हरीयान् । अयमेषामनयोर्वाऽतिशयेन हर्तेत्यर्थ. ।

**प्रशस्यस्य श्रः** ॥४।१।११९॥ शेषयोरिति विभक्तिपरिणामेनानुवर्तते । प्रशस्यशब्दस्य श्रादेशो भवतीष्ठेयसो. परतः । अतिशयेन प्रशस्यः श्रेष्ठ श्रेयान्वा । अत्र टिखे प्राप्ते,

**नैकाचः** ॥४।४।१५२॥ एकाचो भस्य यदुक्तं तन्न भवतीष्ठेमेय.सु । इति न ।

**ज्यः** ॥४।१।१२०॥ प्रशस्यस्य ज्यादेशोपि भवतीष्ठेयसो । ज्येष्ठ । ईयसौ तु,

**ज्यादीयसः** ॥४।४।१५०॥ ज्यादेशात्परस्येयस आकारादेशो भवति । 'परस्यादेः' इतीयस ईकारस्य स्यात् । ज्यायान् ।

**वृद्धस्य** ॥४।१।१२१॥ वृद्धस्य च ज्यादेशो भवतीष्ठेयसोः । अतिशयेन वृद्धो ज्येष्ठो, ज्यायान् ।

**बाढान्तिकयोः साधनेदौ** ॥४।१।१२२॥ ईयसोः परतः । अयमेषामतिशयेन बाढं जल्पति=साधिष्ठं जल्पति । साधीयः । एवं साधीयान् । अतिशयेनान्तिको नेदिष्ठो, नेदीयान् । तरतमौ तु स्यातामेव ।

**युवाल्पयोः कन्वा** ॥४।१।१२३॥ अतिशयेन युवा कनिष्ठः कनीयान्वा । एवमल्पिष्ठोऽल्पीयान् । कनिष्ठः कनीयान्वा । युवन्शब्दस्य पक्षे,

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यण इक एप् च**॥४।४।१४५॥ एषां यणः खं भवतीकस्त्वेप् इष्ठेमेयःसु । टेस्तु टेरित्येव खम् । यविष्ठो यवीयान्वा । स्थविष्ठः स्थवीयान् । दविष्ठो दवीयान् । ह्रसिष्ठो ह्रसीयान् । क्षेपिष्ठः क्षेपीयान् । क्षोदिष्ठः क्षोदीयान् ।

**प्रियस्थिरस्फिरयादेरः** ॥४।४।१४६॥ प्रियस्थिरस्फिराणामिकारादेर्वर्णसंघातस्य अकारादेशो भवतीष्ठेमेयस्सु । प्रेष्ठः प्रेयान् । स्थेष्ठः स्थेयान् । स्फेष्ठः स्फेयान् ।

**बहुलगुरूरुवृद्धतृप्रदीर्घवृन्दारकाणां बंहिगवर्वर्षित्रब्द्राघवृन्द्राः** ॥४।४।१४७॥ बहुलादीनां बंह्यादय आदेशा भवन्तीष्ठेमेयस्सु । बंहिष्ठो बंहीयान् । गरिष्ठो गरीयान् । वरिष्ठो वरीयान् । वर्षिष्ठो वर्षीयान् । ज्यादेशोयं चादेशो वचनप्रामाण्यात् । त्रपिष्ठ-स्त्रपीयान् । द्राघिष्ठो द्राघीयान् । वृन्दिष्ठो वृन्दीयान् ।

बहोर्भूर्वस्मात् खम् ॥४।४।१४८॥ बहोर्भू इत्यादेशो भवति खं चास्मात् परेषामिष्ठेमेयसाम् । परस्यादेरिति इकारमात्रस्य खम् । भूयान् ।

यिट् चेष्ठस्य ॥४।४।१४९॥ बहोर्भ्वादेशात्परस्येष्ठेकारस्य खे प्राप्ते तदपवादो यिडागमो भवति । इकार उच्चारणार्थः । टित्त्वं स्थाननिर्देशार्थम् । भूयिष्ठः ।

विन्मतोरुप् ॥४।१।१२४॥ विनो मतोश्चोब्भवतीष्ठेयसोः परतः । अतिशयेन स्रग्वी स्रजिष्ठः स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठस्त्वचीयान् ।

प्रशंसायां रूपः ॥४।१।१२५॥ स्याम्मृदो मिङन्ताच्च रूपप्त्यो भवति प्रशंसार्थे द्योत्ये स्वार्थे । प्रशस्तो वैयाकरणो वैयाकरणरूपः । कुमारिरूपा । 'तसादौ' इति पुंवद्भावे प्राप्तेत्र ङ्‍रूपेति प्रः । एवं चौररूपः । पचतिरूपम् ।

आसिद्धौ देश्यदेशीयकल्पाः ॥ ४।१।१२६ ॥ ईषदसिद्धिरासिद्धिः । सिद्धिः परिसमाप्तिः । ईषदपरिसमाप्तौ द्योत्यायां देश्यदेशीयकल्पास्त्या भवन्ति स्वार्थे । ईषदसिद्धः पटुः पटुदेश्यः । पटुदेशीयः । पटुकल्पः । पचतिकल्पम् । पट्वीदेश्या । तसादीनां परिगणनान्न तेनात्र पुंवद्भावः । कल्पस्य तु तसादौ पाठः । अतः पुंवत्त्वे प्राप्ते ङ्‍रूपेति प्रः । पट्विकल्पा ।

वा सुपो बहुः प्राक् तु ॥ ४।१।१२७ ॥ आसिद्धौ सुबन्ताद्बहुत्यो वा भवति, स च प्रागेव स्थाने सुबन्तात् । ईषदसिद्धं कृतं

बहुकृतम्। मृत्त्वे पुनः सुप्। विकल्पपक्षे देश्यादयः। पुनः सुब्ग्रहणं मिङ्निवृत्त्यर्थम्। आसिद्धौ प्रकर्षो नास्तीति प्रकृत्यर्थे प्रकर्षे पुनस्तमादयः। बहुपटुतमः।

प्रकारोक्तौ जातीयः ॥ ४।१।१२८ ॥ पटुप्रकारः पटुजातीयः। उक्तं हि प्रकारमात्रे थाथमौ। अयं तु प्रकारवति। अत एव थाथमन्तादपि जातीयः। कथंजातीयः। यथाजातीयः।

एवात् कः ॥ ४।१।१२९ ॥ इवे प्रतिकृतौ क इति वक्ष्यति। आ इवात् (इवात्प्राक्) कोधिक्रियते।

क्षिसर्वनाम्नोऽक्प्राक्टेः को दः॥ ४।१।१३० ॥ क्षेः सर्वनाम्नो मिङन्ताच्च टेः प्रागऽक्प्रत्ययो भवति ककारस्थैत्तस्य च दः प्रागिवादर्थेषु। उच्चकैः। कस्य च दः। हिरकुत्, हिरुक्। मृदः सुप इत्युभयं वर्तते। क्षसंज्ञे नास्ति विशेषः। सर्वनाम्नो मृदः। विश्वके। युष्मकाभिः। सुपः। त्वयका। पचतकि। अकप्रकरणे तूष्णीमकाम् व.। तूष्णीकामास्ते। शीले को मखं च। तूष्णींशीलः तूष्णीकः।

कुत्साऽज्ञाते ॥ ४।१।१३१ ॥ कः। कुत्सितोऽज्ञातो-वाश्वोऽश्वकः।

अनुकम्पायाम् ॥ ४।१।१३२ ॥ अनुकम्पितो माणवो माणवकः। नीचकैः। याचतके।

---

१ महावृत्तौ सूत्र तु 'कुत्सायाम्' इत्याकारकमेवोपलभ्यते किंतु तद्व्याख्यायां कुत्साऽज्ञातत्वं चेत्युभयार्थसंग्रहः कृतः। अतो ज्ञायते यत् सूत्रमुपरि-लिखिताकारकमेव स्यात्।

**नीतौ च तद्युक्तात्** ॥ ४।१।१३२ ॥ सामोपप्रदानलक्षणेह नीतिर्न दण्डभेदलक्षणा, अनुकम्पासंबन्धात् । पूर्वेणानुकम्प्यमानात्यः । अनेन तु तद्युक्ताद्विधीयते नीतौ गम्यमानायाम् । उत्सङ्गके उपविशक । गुडकाः । एहकि ।

**बह्वचो नृखोर्वा ठः** ॥ ४।१।१३४ ॥ अनुकम्पायां, नीतौ च तद्युक्तान्नित्यं के प्राप्ते मनुष्यनाम्नो वा ठो विधीयते ।

**घेलौ** ॥ ४।१।१३५॥ नृखोरेव । अनुकम्पितो देवदत्तो देविको देवदत्तको देवियो देविलः । उत्तरभागस्य कथं खम् ?

**ठाचि द्वितीयात्परोऽचः** ॥४।१।१३९॥ प्रकृते ठेऽजादौ च त्ये प्रकृतेर्द्वितीयादचः परः सर्वो नाश्यते । इत्युत्तरभागस्य खम् ।

**अद्वु वोपादेः** ॥ ४।१।१३६ ॥ उपशब्दादेर्मृदोऽड वु इत्येतौ त्यौ च वा भवतः पूर्वविषये । अनुकम्पित उपेन्द्रदत्त उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः ।

**जातिनाम्नः कः** ॥ ४।१।१३७ ॥ बह्वचोऽबह्वचो वा नृखोः । सिंहकः । अनुकम्पायां नीतौ च तद्युक्तादेव । अनेन घादीनां बाधा ।

**घोः खं चाजिनस्य** ॥४।१।१३८॥ अजिनान्तान्नृखोर्मृदोऽनुकम्पायां नीतौ च तद्युक्तात्कत्यो भवति घोश्च खम् । अनुकम्पितो व्याघ्राजिनो व्याघकः ।

**शेवलसुपरिविशालवरुणार्यमादेस्तृतीयात्** ॥४।१।१४०। शेवलादेर्नृखोर्मृदस्तृतीयादचः परः सर्वो नाश्यते ठाचि परतः ।

बहुकृतम्। मृत्त्वे पुनः सुप्। विकल्पपक्षे देश्यादयः। पुनः सुब्ग्रहणं मिङ्निवृत्त्यर्थम्। आसिद्धौ प्रकर्षो नास्तीति प्रकृत्यर्थे प्रकर्षे पुनस्तमादयः। बहुपटुतमः।

**प्रकारोक्तौ जातीयः॥ ४।१।१२८॥** पटुप्रकारः पटुजातीयः। उक्तं हि प्रकारमात्रे थाथमौ। अयं तु प्रकारवति। अत एव थाथ-मन्तादपि जातीयः। कथंजातीयः। यथाजातीयः।

**एवात् कः॥ ४।१।१२९॥** इवे प्रतिकृतौ क इति वक्ष्यति। आ इवात् (इवात्प्राक्) कोधिक्रियते।

**क्षिसर्वनाम्नोऽक् मावटेः को दः॥ ४।१।१३०॥** क्षेः सर्व-नाम्नो मिङन्ताच्च टेः प्रागऽक्प्रत्यो भवति ककारश्चेत्तस्य च दः प्रागि-वादर्थेषु। उच्चकैः। कस्य च दः। हिरकुत्, हिरुक्। मृदः सुप इत्युभयं वर्तते। क्षसंज्ञे नास्ति विशेषः। सर्वनाम्नो मृदः। विश्वके। युष्मकाभिः। सुपः। त्वयका। पचतकि। अक्प्रकरणे तूष्णीम-काम् व.। तूष्णीकामास्ते। शीले को मखं च। तूष्णींशीलः तूष्णीकः।

**कुत्साऽज्ञाते[1]॥ ४।१।१३१॥** कः। कुत्सितोऽज्ञातो वाश्वोऽश्वकः।

**अनुकम्पायाम्॥ ४।१।१३२॥** अनुकम्पितो माणवो माणवकः। नीचकैः। याचतके।

---

१ महावृत्तौ सूत्रं तु 'कुत्सायाम्' इत्याकारकमेवोपलभ्यते किंतु तद्व्या-ख्यायां कुत्साऽज्ञातत्वे चेत्युभयार्थसंग्रहः कृतः। अतो ज्ञायते यत् सूत्रमुपरि-लिखिताकारकमेव स्यात्।

**नीतौ च तद्युक्तात् ॥ ४।१।१३३ ॥** सामोपप्रदानलक्षणेह नीतिर्न दण्डभेदलक्षणा, अनुकम्पासंबन्धात् । पूर्वेणानुकम्प्यमानात्त्यः । अनेन तु तद्युक्ताद्विधीयते नीतौ गम्यमानायाम् । उत्सङ्गके उपविशक । गुडकाः । एहकि ।

**बह्वचो नृखोर्वा ठः ॥ ४।१।१३४ ॥** अनुकम्पायां, नीतौ च तद्युक्तान्नित्यं के प्राप्ते मनुष्यनाम्नो वा ठो विधीयते ।

**घेलौ ॥ ४।१।१३५॥** नृखोरेव । अनुकम्पितो देवदत्तो देविको देवदत्तको देवियो देविलः । उत्तरभागस्य कथं खम् ?

**ठाचि द्वितीयात्परोऽचः ॥४।१।१३९॥** प्रकृते ठेऽजादौ च त्ये प्रकृतेर्द्वितीयादचः परः सर्वो नाश्यते । इत्युत्तरभागस्य खम् ।

**अडवू वोपादेः ॥ ४।१।१३६ ॥** उपशब्दादेर्मृदोऽड वु इत्येतौ त्यौ च वा भवतः पूर्वविषये । अनुकम्पित उपेन्द्रदत्त उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः ।

**जातिनाम्नः कः ॥ ४।१।१३७ ॥** बह्वचोऽबह्वचो वा नृखोः । सिंहकः । अनुकम्पायां नीतौ च तद्युक्तादेव । अनेन घादीनां बाधा ।

**घोः खं चाजिनस्य॥४।१।१३८॥** अजिनान्तान्नृखोर्मृदोऽनुकम्पायां नीतौ च तद्युक्तात्कत्यो भवति घोश्च खम् । अनुकम्पितो व्याघ्राजिनो व्याघ्रकः ।

**शेवलसुपरिविशालवरुणार्यमादेस्तृतीयात् ॥४।१।१४०॥** शेवलादेर्नृखोर्मृदस्तृतीयादचः परः सर्वो नाश्यते ठाचि परत. ।

द्वितीयादचः परस्य खे प्राप्ते वचनम् । अनुकम्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः, शेवलदत्तकः । कथं शेवलेन्द्रदत्तकः शेवलिक इति ? अकृतवद्व्यूहत्वात् । अकृतवद्व्यूहो नाम अन्तरङ्गपरिभाषाया अव्यापारः । अत्र खप्रपञ्चः—

चतुर्थादनजादौ च नाशः पूर्वपदस्य च ।
अनिमित्ते तथैवेष्ट उवर्णान्तादिलस्य च ॥

चतुर्थान्नाशः । बृहस्पतिदत्तको बृहस्पतियः । अनजादौ च नाशः । देवदत्तको देवकः । पूर्वपदस्य नाशोऽनजादौ ठजादौ च । दत्तिको, दत्तकः । अनिमित्ते च नाशः पूर्वोत्तरपदयोः । सत्यभामा । सत्या । भामा । विष्णुगुप्तः । विष्णुर्गुप्तो वा । उवर्णान्तादिलस्य च नाशः । 'परस्यादेः' इतीकारमात्रस्यैव । भानुदत्तः । भानुलः । उगन्तादियेलयोः खं, व० प्रकृत्या च । भानुयः । भानुलः । अत्र खे कृते भत्वादोकारादिविधिर्न भवति प्रकृतिवद्भावात् ।

अल्पे ॥ ४।१।१४१ ॥ कः । अल्पमन्नमन्नकम् । सर्वनामादौ त्वगेव । त्वयका । उच्चकैः । पचतकि ।

ह्रस्वे ॥ ४।१।१४२ ॥ कः । ह्रस्वः पटः पटकः ।

कुटीशमीशुण्डाभ्यो रः ॥ ४।१।१४३ ॥ कस्यापवादो रः । ह्रस्वा कुटी कुटीरः । शुण्डारः ।

कुत्वा डुपः ॥ ४।१।१४४ ॥ कापवादः । ह्रस्वा कुतूः कुतुपः । स्नेहभाजनविशेषश्चर्ममयः ।

**कासूगोण्यास्तरट् ॥ ४।१।१४५ ॥** कापवादः । ह्रस्वा कासू कासूतरी । गोणीतरी ।

**वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे ॥ ४।१।१४६ ॥** तनुत्वार्थे द्योत्ये एभ्यस्तरट् त्यो भवति । तनुर्वत्सो वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।

**किंयत्तदो निर्धारणे द्वयोरेकस्य डतरः ॥ ४।१।१४७॥** द्वयोरेकस्य निर्द्धारणे गम्यमाने निर्द्धार्यमाणवाचिभ्यः किंयत्तच्छब्देभ्यो डतरत्यो भवति । भवतोः कठः कतरो भवति । यतरः । ततरः । महाविकल्पाधिकाराद्वाक्यमपि साधु । को भवतोः कठः । एकस्य किम् ? नेह, कौ भवतां काञ्चीपुरकौ । एकस्याग्रहणे हि द्वयोरिति शब्दस्य निर्द्धारणमित्यर्थः स्यात् । निर्द्धारणे किम् ? द्वयोर्ग्रामयोः कः स्वामी ।

**वा बहूनां जातिप्रश्ने डतमः ॥ ४।१।१४८ ॥** एकस्यनिर्धारणे । जातिविषये प्रश्नविषये च किमो डतमस्त्यो भवति ।' इतरेभ्यस्तु जातिविषये एव । वावचनमुत्सर्गस्याकः प्रापणार्थम् । को भवता कठ', कतमो वा । महाविभाषया वाक्यमपि । को

---

१ यस्य गुणस्य भावाद्द्रव्ये शब्दविनिवेशस्तस्यैव तनुत्वेय त्यो भवेत् । यथा वत्सस्य तनुत्व यौवनप्राप्ति । यौवने उपचीयमाने वत्सत्व तनु भवति । उक्ष्णस्तनुत्वं तस्मादपि परस्य वयस प्राप्ति । उक्षा तरुण । अश्वस्य तनुत्व विजातीयादुत्पत्तिस्तस्य । ऋषभो भारवह । तस्य तनुत्वमसमर्थता ।

२—साकोऽपि किम कादेशे इदमेव रूप स्यात् ।

भवता कठ. । यको भवता वैयाकरणो यतमो वा । बहूना किम् ? द्वयोर्जातिप्रश्ने डतर एव । किमोस्मिन्विषये उत्तरमपीच्छन्ति ।

**एकाच ॥ ४।१।१४९ ॥** डतरडतमौ । जातिप्रश्ने इति नानुवर्तते । सामान्येनैव विधिरत्र । एकतरो भवतोर्देवदत्तः । एकतमो भवता देवदत्त । उत्सर्गस्याको निवृत्त्यर्थं योगविभागः । महाविकल्पाद्यथापूर्वमपि । इति श्रा इवीया ।

**इवे प्रतिकृतौ कः ॥४।१।१५०॥** इवार्थं सादृश्यम् । प्रतिकृतिः प्रतिबिम्बम् । प्रतिकृतिविषये य इवार्थस्तद्वृत्तेर्मृदस्को भवति स्वार्थे । अश्व इवायमश्वक । अश्वप्रतिकृतिरित्यर्थः । प्रतिकृतौ किम् ? अश्व इवाय शीघ्रो गौ ।

**खौ ॥४।१।१५१॥** इवार्थे गम्ये मृद. को भवति खुविषये । अश्व इवायमश्वक सञ्ज्ञा चेत् । अप्रतिकृत्यर्थ आरम्भोयम् ।

**उस्मनुष्ये उपमेये ॥४।१।१५२॥** उपमेयत्वेन मनुष्येभिधेये खौ चाखौ च विहितस्य कस्योस् भवति । कुक्कुट इव कुक्कुटो मनुष्यः । चञ्चेव चञ्चा मनुष्य । "युक्तवदुसि लिङ्गसंख्ये" । मनुष्ये किम् ? अश्वकः पाषाणः । देवपथादेराकृतिगणस्यायं प्रपञ्चः ।

**जीविकार्थेऽपण्ये ॥४।१।१५३॥** विक्रीयते यत् तत्पण्यम् । जीविकार्थं यदपण्य तस्मिन्नुपमेयत्वेनाभिधेये कस्योस् भवति । वासुदेव इवाय वासुदेवो देवलकानाम् । इवे प्रतिकृताविति कस्योस् । विशाखजीविकार्था देवप्रतिकृतय एवमुच्यन्ते ।

**देवपथादिभ्यः ॥४।१।१५४॥** इवे प्रतिकृतौ, खौ, इति चागतस्य कस्योप् । देवपथ इव देवपथः । [1]शतपथः । उष्ट्रग्रीवा ।

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ नाशः कृता देवपथादिषु ॥

अर्चासु, अर्हन् । चित्रकर्मणि, दुर्योधनो नटः । ध्वजेषु, तालः ।

**वस्तेर्ढञ् ॥४।१।१५५॥** प्रतिकृताविति निवृत्तम् । इवार्थे वस्तिशब्दाड्ढञ् भवति । यस्मिन्प्रदेशे मलमुपसंप्राप्तं बहिर्निष्क्रामति स प्रदेशो वस्तिः । वस्तिरिव वास्तेयी नली ।

**शिलाया ढः ॥४।१।१५६॥** शिलेव शिलेयं दधि । योगविभागात्केचिड्ढञमपीच्छन्ति । शैलेयम् ।

**शाखादेर्यः ॥४।१।१५७॥** शाखेव शाख्यम् । मुखमिव मुख्यम् ।

**द्रव्यं भव्ये ॥४।१।१५८॥** द्रव्यमिति निपात्यते भव्येऽर्थे । भव्यविशेषे इवार्थे वर्तमानाद् द्रुशब्दाद्यस्त्यो निपात्यते । ओरेप्, यित्ये इति च । द्रुरिव द्रव्यं कार्षापणम् । इष्टार्थक्रियाहेतुरित्यर्थः । अयं राजा द्रव्यम् । आत्मवानित्यर्थः । भव्ये किम् ? द्रु इवायं पुरुषो, न चेतयते ।

---

[1]–मत्स्याश्च पुष्पाणि च तारकाश्च चन्द्रार्धचन्द्राश्च पतन्निपथ । इत्यादयश्चौपम्यार्थे देवपथादेराकृतिगणत्वात्सिद्धा बोद्धव्या- ।

कुशाग्राच्छः ॥४।१।१५९॥ कुशाग्र इव सूक्ष्मत्वेन कुशाग्रीय ।

सात्तद्विषयात् ॥४।१।१६०॥ इवार्थविषयात्साच्छो भवति । अत एव इवार्थे सो भवतीति ज्ञाप्यते । सुप्सुपेति सविधिरत्र । काकतालीयम् । तालशाखाग्रे काक प्राप्तस्ताल च पतितम् । पतता च तेन तालेन स काको हत । इद चित्रीकरणम् । तथा देवदत्तो वृक्षं श्रित, । तत्राशनिश्च पतित । तत्र देवदत्तस्याशनेश्च समागम काकतालसमागमसदृश । काकवधसदृशश्च देवदत्तवध । इति समागमसादृश्ये सविधानम् । वधसादृश्ये त्वविधिः । एवमन्धकवर्तकीयम् । पुरुषव्याघ्र इत्यत्र तु समुदायो नेवार्थविषय । अतोऽत्र न–च्छ. ।

शर्करादिभ्योण्॥४।१।१६१॥शर्करेव शार्करम् । कपालिकेव कापालिकम् । ह्रत्यद इति कुतो नात्र पुवत् ? न मुङ्हृत्कोड इति प्रतिषेधात् ।

अङ्गुल्यादेष्ठण् ॥४।१।१६२॥ अङ्गुलीव आङ्गुलिकम् ।

वैकशालायाष्ठः ॥४।१।१६३॥ पक्षे ठण् । एकशालेव एकशालिक, ऐकशालिक ।

कर्कलोहिताट्टीकण् ॥४।१।१६४॥ कर्क शुक्लोश्व । कर्क इव कार्कीक । लौहितीकी ।

पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ४ ।२।१ ॥ नानाजातीया अनियतवृत्तयोऽर्थकामपरा सघा पूगा । तद्वाचिनो मृदो ञ्यो

भवति स्वार्थे । लोहध्वज एव लौहध्वज्यः । शैब्यः । वक्ष्यते द्रिसंज्ञैषां त्यानाम् । द्रेर्बहुष्विति उसि लोहध्वजाः । शिबयः । ग्रामण्यर्थपूर्वत्वे तु न । देवदत्तो ग्रामणीरेषां देवदत्तकाः ।

व्रातच्फञोरस्त्रियाम् ॥ ४।२।२ ॥ उक्तमपत्यार्थेषु । ञ्यो भवति स्वार्थे । व्राते, व्रैहिमत्यः । बहुत्वे व्रीहिमतः । 'वृद्धे कुञ्जादिभ्यो च्फञ्' कौञ्जायन्यः । कौञ्जायनाः । स्त्रियां तु नेह, व्रीहिमती । कौञ्जायनी ।

शस्त्रजीविसंघाञ्ञ्यड्वाहीकेष्वविप्रराजन्यात् ॥ ४।२।३ ॥ वाहीकेषु यः शस्त्रजीवी संघस्तद्वाचिनो मृदो ञ्यड् भवति स्वार्थे । कौण्डीवृस्यः । कुण्डीवृसाः । स्त्रीत्वे टित्त्वान्ङी । हलो द्वत इति यलम् । कौण्डीवृसी । विप्रराजन्यात्तु नेह, गौपालव्यः । राजन्याः । राजन्येपि केचन विशेषे प्रतिषेधमिच्छन्ति । अशस्त्रजीवित्वान्नेह, मल्लाः । असंघत्वान्नेह, वागुरः । अवाहीकत्वान्नेह, शबरः ।

वृकाट्टेण्यण् ॥ ४।२।४॥ शस्त्रजीविसंघत्वे एव, स्वार्थे एव । वार्केण्यः । वृकाः । स्त्रिया वार्केणी ।

दामन्यादेश्छः ॥४।२।५॥ शस्त्रजीविसंघेभ्यो दामन्यादिभ्यः स्वार्थे छो भवति । दामनीयः । दामनयः । शस्त्रजीविनां षड्वर्गाः । तत्र षष्ठस्त्रिगर्तवर्गः । सोप्यत्रैव पठ्यते । कौण्डोपरथीयः ।

पर्श्वादेरण् ॥४।२।६॥ शस्त्रजीविसंघत्वे एव । पार्शवः । पर्शवः ।

अभिजिद्विदभृत्तोऽणो यञ् ॥४।२।७॥ अणन्ताभ्यामाभ्यां यञ् भवति स्वार्थे । अभिजितोऽपत्यमित्यर्थेऽणि यञि चाभिजित्यः ।

चैद्‌भृत्यः। ततो युवार्थविवक्षायां तु 'यञिञोः' इति फणि आभिजित्यायनः।

**शिखाशालाशम्पूर्णाश्रियां मतोः ॥४।२।८॥** एतेषां मतोर्योऽण् तदन्तेभ्यो यञ् भवति स्वार्थे। शिखावतोऽपत्यं शैखावत्यः। शैखावताः।

**ते द्रयः ॥४।२।९॥** ञ्यादयो द्रिसंज्ञा भवन्ति। तत्प्रयोजनं हि बहुत्वे त्यस्योप्‌युक्तम्।

**संख्यायाः पादशतेभ्यो वीप्सादण्डत्यागे वुन् खं च ॥४।२।१०॥** संख्यादेः पादशतान्ताद्वुन् भवति तत्सन्नियोगे खं च, वीप्सायां दण्डे त्यागे वा गम्यमाने। यस्य ङ्यां चेति अखे तु 'परेचः' स्थानिवद्भावात् पादः पदिति न स्यात्। द्वौ द्वौ पादौ भुङ्क्ते द्विपदिकां भुङ्क्ते। हृदर्थे रसः। वृत्त्या वीप्सार्थगतौ न द्वित्वम्। द्विशतिकां भुङ्क्ते। द्विपदिका दण्डितः। द्विशतिकां वा। द्विपदिकां द्विशतिकां वा व्यवसृजति। वुन्नन्तं स्वभावतः स्त्रियाम्। बहुत्वनिर्देशादन्यत्र च। द्विमोदकिकाम्।

**स्थूलादिभ्यः प्रकारोक्तौ कः ॥४।२।११॥** स्थूलकः। माषकः।

**क्तादनत्यन्ते ॥४।२।१२॥** भिन्नकम्। अत्यन्तभेदे तु भिन्नमेव।

**न सामेः ॥४।२।१३॥** सामीत्यर्धे। सामिकृतम्। अत्र न कः। पर्यायग्रहणमिति केचित्। अर्धकृतम्। पदान्तरेणार्धादिना

ज्ञापितत्वात्सुतरा कनिषेधेपीद वचनं स्वार्थे को भवत्ययमिति सूचनार्थम् । तेन, अवच्छिन्नकम् ।

**बृहतिका ॥४।२।१४॥** आच्छादने निपातोयम् । बृहतिका शाटी । अन्यत्र न क । बृहती औषधिः ।

**खोऽलं कर्मपुरुषात् ॥४।२।१५॥** आभ्या खो भवति स्वार्थे । अल कर्मणे अलकर्मीण. । अल पुरुषाय अलपुरुषीण ।

**अपडक्षाशितंग्वधिभ्योः ॥ ४।२।१६॥** अपडक्षीणो देवदत्त । पितृपितामहपुत्राणा षडक्षीणि न पश्यतीत्यर्थ । आशिता गावो यत्रेति आशितङ्गवीनमरण्यम् । अत एव कर्तरि क्तो मुम् च । पुण्ये अधीति पुण्याधीन सर्वम् । 'ईश्वरेऽधिना' इतीप् गितिसज्ञाप्रतिषेधश्च । नित्योय ख उत्तरत्र वाग्रहणात् ।

**वाऽञ्चेरदिक्स्त्रियाम् ॥ ४।२।१७॥** अञ्चत्यन्तादादिक्स्त्रिया वर्तमानान्मृद खो वा भवति स्वार्थे । प्राक् प्राचीनो वा । अर्वाग् अर्वाचीन वा । स्त्रीत्वे दिगर्थे तु न । प्राची दिक् । दिग्ग्रहणान्नेह, प्राचीना शाला ।

**जातेश्छो बन्धुनि ॥४।२।१८॥** बध्यतेस्मिञ्जातिरिति बन्धु ज्जात्यधिकरण द्रव्यम् । तदर्थद्योतने जातेश्छो भवति । क्षत्रियजातीय । जातीयेन सिद्धे बसस्य केवलस्य प्रयोगो मा भूदिति ग्रहणम् । कथ तर्हि दुर्जातिस्तव पुत्रस्येति ? चिन्त्यमेतत् । बन्धुनि किम् ? ब्राह्मणजाति शोभना ।

**वेवे स्थानान्तात् ॥ ४।२।१९ ॥** स्थानान्तान्मृद इवार्थे वा छो भवति । पितु स्थानमिव स्थानमस्य पितृस्थानीय, पितृस्थानो

वा । ईनुपमानपूर्वस्य द्युखमुक्तम् । पुनर्वाग्रहणेनानन्तरस्य नित्यत्वं द्योत्यते । इवे किम् ? गवां स्थानं गोस्थानम् । मृद्ग्रहणे तदन्तविधेः प्रतिषेधार्थमन्तग्रहणम् ।

किमेमिङ्ङिझ्झादामद्रव्ये ॥ ४।२।२० ॥ उक्तमेतत् । मिङो झिसञ्ज्ञकस्य च प्रसञ्ज्ञकान्तस्य मृद आम् भवत्यद्रव्येऽर्थे । द्वाविमौ किं पचतः ? अयमनयोः किंतरां पचति । एवं किंतमाम् । पूर्वाह्णेतरां भुङ्क्ते । मिङो झात्, पचतितराम् । पचतितमाम् । झेर्झात्, उच्चैस्तराम् । उच्चैस्तमाम् । अद्रव्ये किम् ? उच्चैस्तरो वृक्षः ।

ञिणोऽण् ॥ ४।२।२१ ॥ ञिण्भिविधाविति भावे ञिण् । तदन्तादण् भवति स्वार्थे । कृद्ग्रहणेन तिकारकपूर्वस्यापि । साङ्कोटिनम् । 'प्राग्वतेऽनपत्येणीन' इति टिखप्रतिषेधः ।

व्यात्स्त्रियाम् ॥४।२।२२॥ स्त्रियामित्यधिकृत्य कर्मव्यतिहारे णो वक्ष्यते । तदन्तात्स्वार्थेऽण् भवति स्त्रियाम् । व्यात्युक्षी । 'पदे य्वोरैयौच्' इत्यस्य 'न ञे' ( ५।२।११ ) इति प्रतिषेधे आद्यैचेव ।

विसारिणो मत्स्ये ॥ ४।२।२३ ॥ अण् स्वार्थे । विसारी एव वैसारिणो मत्स्यश्चेत् । अन्यत्र विसारी तैलबिन्दुः स्यात् ।

संख्याया ध्वम्यावृत्तौ कृत्वस् ॥४।२।२४॥ ध्वर्थः क्रिया । अभिन्नकर्तृकाया क्रियायाः पौनःपुन्यं ध्वम्यावृत्तिः । तद्वाचकसंख्याशब्दात् स्वार्थे कृत्वस् भवति । शतवारान्भुङ्क्ते इति

शतकृत्वो भुङ्क्ते । सङ्ख्याया किम् ? मुहुर्मुहुर्भुङ्क्ते । सङ्ख्यासङ्गे तु तावत्कृत्वो, बहुकृत्व इति स्यात् । धु इति किम् ? पञ्चसु कालेषु दण्डी शुक्लो गुणो वा ।

**द्विन्निचतुर्भ्यः सुच् ॥४।२।२५॥** कृत्वसमपवाद । द्विर्भुङ्क्ते त्रिश्चतुर्वा । स्फान्तत्वमपवाद्य ' रात्स ' इति प्रवर्तते ।

**एकस्य सकृत् ॥४।२।२६॥** एकस्य सकृदादेश सुच । सकृद्भुङ्क्ते । व्यपदेशेनाभ्यावृत्ति ।

**बहोर्धा वासत्तौ ॥४।२।२७॥** आसत्तिरविप्रकृष्टकालता । क्रियाभ्यावृत्तेर्विशेषणम् । तत्र बहोर्धा धात्यो भवति । बहुधा भुङ्क्ते । पक्षे कृत्वस् ।

**तत्प्रकृतोक्तौ मयट् ॥४।२।२८॥** प्रकर्षेण कृत प्रकृत–प्राचुर्यम् । तदर्थवृत्तेर्वासमर्थान्मयट् भवति । दधिमयम् । पूजाया प्रचुर दधीत्यर्थः । अथवा नाय स्वार्थे किंत्वधिकरणे । घृत प्रचुरमुच्यते स्या घृतमयी पूजा । उक्तिग्रहणात्स्वार्थोऽधिकरण च गृह्यते । स्वार्थे प्रकृतेर्लिङ्गसङ्ख्यानुवृत्ति । अधिकरणे विशेष्यनिघ्नता ।

**समूहवच्च बहुषु ॥४।२।२९॥** तत्प्रकृतोक्तौ, स्वार्थेऽधिकरणे च बह्वर्थे सति समूहार्थत्या भवन्ति मयट् च । अपूपा प्रकृता आपूपिकमपूपमय वा यज्ञे । समूहार्थको ' अचित्तहस्तिधेनोष्ठण् ' । अधिकरणे त्वापूपिकोऽपूपमयो वा यज्ञ ।

**भेषजानन्तावसथेतिहाऽञ्ज्यः ॥४।२।३०॥** स्वार्थे ञ्य ।

भेषजमेव भैषज्यम् । एवमानन्त्यम् । आवसथ्यम् । ऐतिह्यम् ।
विभाषासंबन्धात्प्राकृतिकप्रयोगोपि ।

देवतान्तात्तादर्थ्ये यः ॥४।२।३१॥ गुरुदेवतायै इदं गुरुदेवत्यम् ।

पाद्यार्घ्ये ॥४।२।३२॥ तादर्थ्ये निपात्येते । पादार्थमुदकं पाद्यम् । अर्घार्थमर्घ्यम् ।

ण्योऽतिथेः ॥४।२।३३॥ अतिथ्यर्थमातिथ्यम् ।

देवात्तल् ॥४।२।३४॥ स्वार्थे एव । देव एव देवता ।

कोऽवियावादेः ॥४।२।३५॥ अवेर्यावादेश्च स्वार्थे को भवति । अविरेव अविकः । एवं यावकः । आस्थिकम् । अन्यथावादिकार्याप्राप्त्यर्थमवेः पृथग्ग्रहणम् ।

लोहितान्मणौ ॥४।२।३६॥ लोहितको मणिः । स्त्रीत्वे तु प्राप्तं डीत्य परत्वाद् बाधित्वा कः । ततः सकृद्गतेष्टाबेव । त्यस्थे इतीत्वे, लोहितिका ।

वर्णेऽनित्ये॥४।२।३७॥ लोहितकं चक्षुः कोपेन । अनित्ये किम् ? लोहित इन्द्रगोपः ।

रक्ते ॥४।२।३८॥ कमिरागादिना रक्तेर्थेपि को भवति स्वार्थे । लोहितकः पट्टशाटकः ।

कालाच्च ॥४।२।३९॥ उभयार्थसंग्राहकश्चकारः । अनित्ये, कालकं मुखं कोपेन । कालकं वस्त्रम् ।

विनयादेष्ठण् ॥४।२।४०॥ स्वार्थे । विनय एव वैनयिकः । उपायात् प्रश्च ( ग० ) । औपयिकः ।

**वाचस्तदर्थायाः** ॥४।२।४१॥ ठण् स्वार्थे । वागर्था वागेव वाचिकम् । केनचित्कस्मैचित्सदिष्टा या सा तदर्थेत्यर्थः ।

**तद्युक्तात्कर्मणोण्** ॥४।२।४२॥ तया वाचा क्रियमाणात्कर्मणोण् भवति स्वार्थे । कर्मैव कार्मणम् ।

**ओषधेरजातौ** ॥४।२।४३॥ स्वार्थेऽण् । औषधं पीयते । जातौ तु नेह, ओषधिरियं क्षेत्रे स्थिरा ।

**प्रज्ञादेः** ॥४।२।४४॥ प्रज्ञ एव प्राज्ञः । प्रज्ञाश्रद्धार्चेति णेन सिद्धे ङ्यर्थं वचनम् । प्राज्ञी स्त्री । बान्धवः । आकृतिगणोयम् ।

**मृदस्तिकः** ॥४।२।४५॥ मृदेव मृत्तिका ।

**सस्नौ प्रशंसे** ॥४।२।४६॥रूपापवादौ । प्रशस्ता । मृत्, मृत्सा, मृत्स्ना वा । उत्तरत्र वाग्रहणान्नित्यो विधिरयम् ।

**बह्वल्पार्थाच्छस्कारकाद्वा** ॥४।२।४७॥ नानाधिकरणवाचकावेतौ नतु भूयेल्पवाचकौ । बहुभ्य इति बहुश आगतः । एवं भूरिशः । अल्पशः । स्तोकशः । सर्वकारके एवम् । कारकात् किम्? बहुभिः सह ।

**संख्यैकाद्वीप्सायाम्** ॥४।२।४८॥ शसा वीप्सार्थकथनान्न द्वित्वम् । एकशो देहि । पक्षे एकैकं देहि । एकान्ता अप्यत्र गृह्यन्ते । माषं माषं ददातीति माषशः । कारकादेव । नेह, द्वाभ्यां द्वाभ्यां सह भुङ्क्ते । कथमेतत् 'एकैकशो मन्त्रिण पृच्छेत्' इति? चिन्त्यमेतत् ।

**प्रतियोगे कायास्तसिः** ॥४।२।४९॥ श्रेणिकतोऽभयकुमारः

प्रति, श्रेणिराद्या । योगग्रहणाद् व्यवस्थितविभाषया वा आद्यादिभ्य उपसंख्यानम् । आदौ आदितः । आकृतिगणोयम् ।

अपादानेऽहीयरुहोः ॥ ४।२।५० ॥ कापादाने इति या तदन्तात्तसिर्वा भवति । चौरेभ्यो बिभेति चौरतो बिभेति । नेह, अन्यो देवदत्तादिति, अपादानत्वाभावात् । हीयरुहोस्तु ध्वोः संबन्धे न । सार्थाद्धीन । पर्वतादवरोहति । कर्मणि यगन्तस्य जहातेर्ग्रहणान्नेह, उदधेरुज्जिहीते इत्येव उदधित उज्जिहीते ।

क्षेपाव्यथातिग्रहेऽकर्तृभायाः ॥४।२।५१॥ कर्तुरन्यत्र विहिता या भा तदन्ताद्वा तसिर्भवति क्षेपादिषु । क्षेपे, वृत्तेन क्षिप्तो वृत्ततो वा । तत्करणान्निन्दित इत्यर्थः । अव्यथाया, वृत्तेन न व्यथते वृत्ततो वा । तेन न चलतीत्यर्थ. । अतिग्रहे, वृत्तेनातिगृह्यते वृत्ततो वा । ततः सर्वानतिक्रम्य वर्तते इत्यर्थः । करणे हेतौ वा भाग । क्षेपादिष्वेव किम् ? नेह, दात्रेण लुनाति । कर्तरि च नेह, देवदत्तेन क्षिप्त ।

हीयमानपापयोगात् ॥४।२।५२॥ अकर्तृभाया वा तसिः । हीयमानयोगे, वृत्तेन हीयते वृत्ततो वा । पापयोगे, वृत्तेन पापो वृत्ततो वा । नात्र क्षेपः किंतु तत्त्वाख्यानम् । कर्तरि च नेह, देवदत्तेन हीन ।

ताया व्याश्रये ॥ ४।२।५३॥ नानापक्षाश्रयो व्याश्रय । तदर्थे गम्ये तान्ताद्वा तसिर्भवति । नमिरर्ककीर्तेरर्ककीर्तितो वाऽभवत् । तत्पक्षे जात इत्यर्थः । व्याश्रये किम् ? देवदत्तस्य हस्तः ।

**रोगादपनये ॥४।२।५४॥** तान्ताद्रोगवाचकाद्वा तसिर्भवति तदपनये गम्यमाने । प्रवाहिकाया कुरु प्रवाहिकातो वा । अपनयन-मस्याः कुर्वित्यर्थः । अपनये किम् ? प्रवाहिकायाः करोति । किम् ? प्रकोपनम् ।

**कृभ्वस्तियोगेऽतत्तत्त्वे संपत्तरि च्विः ॥ ४।२।५५ ॥** न तत्-अतत्, कारणरूपमित्यर्थ । अतस्य तत्त्व विकारापत्तिरतत्तत्त्वम् । अतत्त्वे गम्यमाने सपद्यते. कर्तरि वर्तमानात्सुगन्ताच्च्विर्वा भवति कृभ्वस्तिभिर्योगे । अशुक्ल शुक्ल करोतीति शुक्लशब्दाच्च्वौ सति,

**अस्य च्वौ ॥ ५।२।१४१ ॥** अवर्णस्य ईर्भवति च्वौ । च्वेः सर्वमुच्चारणार्थम् । शुक्लीकरोति प्रसादम् । करोत्यपेक्षया कर्म-त्वेपि संपद्यतेरपेक्षया कर्तेवेति च्विरत्र । अनएव अशुक्ल शुक्लः सम्पद्यते तं च करोतीति विगृह्यताम् । एव शुक्लीभवति । शुक्लीस्यात ।

**च्वौ ॥५।२।१३५॥** अजन्तस्य गोर्दीर्भवति च्वौ । शुची भवति । रीङृतः ॥५।२।१३६॥ मात्रीभवति । सपतृग्रहणात्कर्तु-रन्यस्मिन्कारके न स्यात् । अशुद्धे शुद्धे सपद्यते इति । कथ तर्हि दूरीभवतीति ? तत्स्थद्रव्यार्थोपचारात् ।

**मनोरुश्चक्षुश्चेतोरहोरजसः खम् ॥ ४।२।५६ ॥** एषामन्त्यस्य खं भवति च्वौ । ततो दीत्वादि । च्विस्तु पूर्वेणैव । उन्मीस्यात् । अरूस्यात् । चक्षूस्यात् । विचेतीस्यात् । विरहीस्यात् । विरजीस्यात् । -

त्याधः । अतिपीडयतीत्यर्थः । एवं निष्पत्राकरोति । अन्यत्र सपत्रं वृक्षं करोति जलसेकः । निष्पत्रं करोति वृक्षतलं चोटिकापालः । **निष्कुलान्निष्कोषणे** । छन्नावयवानां बहिर्निष्कासनं निष्कोषणम् । निष्कुलाकरोति पशुं चाण्डालः । अन्यत्र निष्कुलं करोति रिपुम् । **सुखप्रियाभ्यामानुलोम्ये** । सुखाकरोति । प्रियाकरोति । स्वाम्यादेरानुकूल्येन वर्तते । अन्यत्र सुखं करोति धर्मः । **दुःखात्प्रातिलोम्ये** । दुःखाकरोति । प्रातिकूल्येन वर्तते इत्यर्थः । अन्यत्र दुःखं करोति दुष्कृतम् । **शूलात्पाके** । शूलाकरोति मांसम् । शूले मांसं पचतीत्यर्थः । अन्यत्र शूलं करोति । **सत्यादशपथे** । सत्याकरोति वणिग् भाण्डम् । अहमेतद्भाण्डं क्रेष्यामीति अन्तराले द्रव्यं सत्यकारं व्यवस्थाप्य तथ्यं करोति । शपथं करोतीत्यर्थः । **भद्रमद्राभ्यां परिवापणे** । भद्राकरोति नापितः । मद्राकरोति नापितः । माङ्गल्येन मुण्डयतीत्यर्थः । अन्यत्र भद्रं करोति साधुः । इति हत्प्रकरणम् ।

---

## अथ हृत्परिशिष्टम् ।

उणादिविशेषविषयः पृथक्त्वेन निर्दिष्टाः सुबोधकरा भविष्यन्तीति मनसिकृत्य न पूर्वप्रकरणेष्वाकृष्य विनिवेशिताः । तत्रापत्याधिकारे "यूनि । ३ । १ । ७९ ॥" इति, "णिण्यराजार्षोपत्युञ्जडणिञो । १ । ४ । १२० ।" इत्यनेन च रक्तादिप्रकरणे एत्यस्योक्तः । तद्विशेषविधिरित्थम्—

**पैलादेः ॥ १ । ४ । १३१ ॥** पैलादेः परस्य युवत्यस्योऽभवति । पीलाया अपत्यं पैलः । पीलाया वेत्यण् । पैलस्यापत्यं (द्व्यचोऽण इति कृतस्य फिञ उपि) पैल एव । द्विसंज्ञाच्चाण उप् । आङ्गः पिता पुत्रश्च । अत्रापि द्व्यच इति कृतस्य फिञ उप् । आकृतिगणः पैलादिः । तेन, औदुम्बरिः पिता पुत्रश्च ।

**प्राचामिञोऽतौल्वलिभ्यः ॥ १ । ४ । १३२ ॥** प्राचां वृद्धे य इञ् तदन्ताद्युवत्यस्योऽभवति । मान्थरेषणिः पिता पुत्रश्च । यञिञोरित्यागतस्य फण उप् । प्राचां किम्? दाक्षिः पिता । पुत्रस्तु दाक्षायणिः । न तौल्वलिप्रभृतिभ्यः प्राक्त्वेपि । तौल्वलिः पिता । पुत्रस्तु तौल्वलायनिः ।

**द्रेर्बहुषु तेनैवाऽस्त्रियाम् ॥१।४।१३३॥** उक्तम् । "द्रि." "ते द्रयः" इति वचनाभ्या द्रिसंज्ञा कृता । बह्वर्थेषु वर्तमानस्य द्रिसंज्ञस्य त्यस्योऽभवति, द्रिसंज्ञकत्येनैव कृतं चेद्बहुत्वं, तत्रापि न स्त्रियाम् । आङ्गः । आङ्गौ । अङ्गाः । एवमैक्ष्वाकः । इक्ष्वाकवः । द्रेः किम्? औपगवाः । तेनैव बहुत्वं चेदिति किम्? प्रियवाङ्गाः । अत्र बसवृत्त्या बहुत्वमस्ति । एवं गार्ग्यवात्स्यौपगवाः । केचिदत्र शारद्वच्छुनकेति वचने कृतोपामेव ग्रहणादिच्छन्त्युत्वादेशम् । तर्हि गर्गवत्सौपगवाः । उभयथापि प्रमाणम् । स्त्रियां तु आङ्ग्यः स्त्रियः ।

**यस्कादिभ्यो वृद्धे ॥ १ । ४ ॥ १३४ ॥** यस्कादिभ्यः परस्य बहुषु वर्तमानस्य वृद्धत्यस्योऽभवति तत्कृते बहुत्वेऽस्त्रियाम् । लौकिकवृद्धापेक्षयाऽनन्तरापत्येप्युत् भवेत् । यास्कः । यस्काः ।

**साद्वा कात्स्न्ये** ॥४।२।५७॥ अतत्त्वे च्विविषये सादित्ययं त्यो वा भवति कात्स्न्ये गम्ये। अनग्निं कृत्स्नमस्त्रमग्निं करोति अग्निसात्करोति। अग्निसाद्भवति। अग्निसात् स्यात्। पक्षे च्विर्वाक्यं च। अग्नीकरोति। अकात्स्न्ये तु च्विरेव भवति।

**संपदा चाभिविधौ** ॥४।२।५८॥ नानाद्रव्याणामेकदेशेन सर्वात्मना वा विकाररूपापत्तिरभिविधिः। एकद्रव्यस्य सर्वात्मना विकाररूपापत्तिः कात्स्न्र्यम्। इति भेदः। अभिविधौ गम्यमाने च्विविषये साद्भवति संपदा च कृभ्वस्तिभिश्च योगे। अनुदकं सर्वं लवणमुदकं संपद्यते उदकसात्संपद्यते। उदकसाद्भवति। वानुवृत्तेः कृभ्वस्तियोगे च्विरपि। संपदा योगे तु वाक्यमेव।

**तदधीनोक्तौ** ॥४।२।५९॥ अतत्त्वे इति निवृत्तम्। तदधीनेभिधेये कृभ्वस्तिभिः संपदा च योगे साद्भवति। राज्ञि आयत्तं राजाधीनं करोति राजसात्करोति। राजसात्संपद्यते। वानुवृत्तेर्वाक्यं च पक्षे। उक्तिग्रहणसामर्थ्याद्यत्र तदायत्तता प्रतीयते तस्मादेव स्वामिविशेषवाचिनस्त्यः।

**देये त्रा च** ॥ ४।२।६०॥ तदधीने देयेभिधेये त्रा भवति साच कृभ्वस्तिना संपदा च योगे। आचार्याधीनं देयं करोति आचार्यत्राकरोति आचार्यसात्करोति। वानुवृत्तेर्वाक्यमपि। देये किम्? राजसाद्भवति राष्ट्रम्।

**अव्यक्तानुकरणादनेकाचोऽनितौ डाच्** ॥४।२।६१॥ अकारादिवर्णविशेषणमव्यक्तस्तस्य शब्दस्यानुकरणवाचकादनेकाचो

मृद्रोऽनितौ परतो डाज्भवति कृभ्वस्तिना योगे। डाचीति विशेष्य-निर्देशात् प्रागेव टिखाद् द्वित्वमुक्तम्। श्रौ डाचि नित्यमिति पूर्वतका-रस्य पररूपत्वं च। पटपटाकरोति। दमदमाकरोति। अव्य-क्तानुकरणात्किम्? दृषत्करोति। अनेकाचः किम्? खात्करोति अनितौ किम्? इति पटापटाकरोतीत्यनिष्टप्रयोगो मा भूदिति।

कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ॥४।२।६२॥ कृञो योगे द्वितीयादिशब्देभ्यो डाज्भवति कृषिविषये। द्वितीयं (विलेख-नं) करोति क्षेत्रस्येति द्वितीयाकरोति क्षेत्रम्। डाचि द्वित्वमनि-त्यम्। तृतीयाकरोति। शम्बाकरोति कुलिजम्। अनुलोमप्रतिलो-माभ्यां कर्षतीत्यर्थः। बीजाकरोति क्षेत्रं, बीजवापेन सह कर्ष-तीत्यर्थः। कृषौ किम्? द्वितीयं विवरणं करोति सूत्रस्य।

गुणात्संख्यादेः ॥४।२।६३॥ गुणशब्दान्तात्संख्यादेर्मृदो डाज्भवति कृञा योगे कृषिविषये। द्विगुणाकरोति क्षेत्रम्। क्षेत्रस्य द्विगुणं विलेखनं करोतीत्यर्थः। संख्यादेः किम्? समगुणं करोति। कृषौ किम्? द्विगुणं करोति वज्रम्।

समयासपत्रानिष्पत्रानिष्कुलासुखाप्रियादुःखाशूलासत्या-मद्रामद्राः ॥४।२।६४॥ एते डाजन्ता निपात्यन्ते कृञ्योगे। समयाद्यापनायां डाच्। कालादिकृता संस्था समयः। तद्यापनं कालक्षेपः। समयाकरोति पटम्। श्वो दातास्मीति प्रतिज्ञाय तद-तिक्रमं करोति कुविन्द इत्यर्थः। अन्यत्र न डाच्। समयं करोति विवाहस्य। सपत्रानिष्पत्राभ्यामतिव्यथने। सपत्राकरोति मृगं

व्याधः । अतिपीडयतीत्यर्थः । एवं निष्पत्राकरोति । अन्यत्र सपत्र वृक्षं करोति जलसेकः। निष्पत्रं करोति वृक्षतलं वोटिकापालः। **निष्कुलान्निष्कोषणे** । छन्नावयवानां बहिर्निष्कासनं निष्कोषणम् । निष्कुलाकरोति पशुं चाण्डालः । अन्यत्र निष्कुलं करोति रिपुम् । **सुखप्रियाभ्यामानुलोम्ये** । सुखाकरोति । प्रियाकरोति । स्वाम्यादेरानुकूल्येन वर्तते । अन्यत्र सुखं करोति धर्मः । **दुःखात्प्रातिलोम्ये** । दुःखाकरोति । प्रातिकूल्येन वर्तते इत्यर्थः । अन्यत्र दुःखं करोति दुष्कृतम् । **शूलात्पाके** । शूलाकरोति मांसम् । शूले मांसं पचतीत्यर्थः। अन्यत्र शूलं करोति । **सत्यादऽशपथे** । सत्याकरोति वणिग् भाण्डम् । अहमेतद्भाण्डं क्रेष्यामीति अन्तराले द्रव्यं सत्यकारं व्यवस्थाप्य तथ्यं करोति । शपथं करोतीत्यर्थः। **भद्रमद्राभ्यां परिवापणे** । भद्राकरोति नापितः । मद्राकरोति नापितः। माङ्गल्येन मुण्डयतीत्यर्थः। अन्यत्र भद्रं करोति साधुः । इति हृत्प्रकरणम् ।

---

## अथ कृत्परिशिष्टम् ।

उणादिविशेषविषयः पृथक्त्वेन निर्दिष्टाः सुबोधकरा भविष्यन्तीति मनसिकृत्य न पूर्वप्रकरणेष्वाकृष्य विनिवेशिताः । तत्रापत्यादिकारे " यूनि । ३ । १ । ७९ ॥ " इति, निष्ण्यरानार्पोप्त्युवर्णिनो. । १ । ४ । १३० । " इत्यनेन च रक्ष्यादिप्रकरणे कृत्यम्भोवुकः । तद्विशेषविधिरित्थम्—

**पैलादेः ॥ १ । ४ । १३१ ॥** पैलादेः परस्य युवत्यस्योभवति । पीलाया अपत्यं पैलः । पीलाया वेत्यण् । पैलस्यापत्यं ( द्व्यचोऽण इति कृतस्य फिञ उपि ) पैल एव । द्रिसंज्ञाच्चाण उप् । आङ्गः पिता पुत्रश्च । अत्रापि द्व्यच इति कृतस्य फिञ उप् । आकृतिगणः पैलादिः । तेन, औदुम्बरिः पिता पुत्रश्च ।

**प्राचामिञोऽतौल्वलिभ्यः ॥ १ । ४ । १३२ ॥** प्राचां वृद्धे य इञ् तदन्ताद्युवत्यस्योभवति । मान्थरेषणिः पिता पुत्रश्च । यनिञोरित्यागतस्य फण उप् । प्राचां किम् ? दाक्षिः पिता । पुत्रस्तु दाक्षायणिः । न तौल्वलिप्रभृतिभ्यः प्राक्त्वेपि । तौल्वलिः पिता । पुत्रस्तु तौल्वलायनिः ।

**द्रेर्बहुषु तेनैवाऽस्त्रियाम् ॥१।४।१३३॥** उक्तम् । "द्रिः" "ते द्रयः" इति वचनाभ्या द्रिसंज्ञा कृता । बह्वर्थेषु वर्तमानस्य द्रिसंज्ञस्य त्यस्योभवति, द्रिसंज्ञकत्येनैव कृतं चेद्बहुत्वं, तत्रापि न स्त्रियाम् । आङ्गः । आङ्गौ । अङ्गाः । एवमैक्ष्वाकः । इक्ष्वाकवः । द्रेः किम् ? औपगवाः । तेनैव बहुत्वं चेदिति किम् ? प्रियवाङ्गाः । अत्र बसवृत्त्या बहुत्वमस्ति । एवं गार्ग्यवात्स्यौपगवाः । केचिदत्र शारद्वच्छुनकेति वचने कृतोपामेव ग्रहणादिच्छन्त्युबादेशम् । तर्हि गर्गवत्सौपगवाः । उभयथापि प्रमाणम् । स्त्रियां तु आङ्ग्यः स्त्रियः ।

**यस्कादिभ्यो वृद्धे ॥ १ । ४ ॥ १३४ ॥** यस्कादिभ्यः परस्य बहुषु वर्तमानस्य वृद्धत्यस्योब् भवति तत्कृते बहुत्वेऽस्त्रियाम् । लौकिकवृद्धापेक्षयाऽनन्तरापत्येप्युब् भवेत् । यास्कः । यस्काः ।

व्याधः । अतिपीडयतीत्यर्थः । एवं निष्पत्राकरोति । अन्यत्र सपत्रं वृक्षं करोति जलसेकः । निष्पत्रं करोति वृक्षतलं चोटिकापालः । **निष्कुलान्निष्कोषणे** । छत्रावयवानां बहिर्निष्कासनं निष्कोषणम् । निष्कुलाकरोति पशुं चाण्डालः । अन्यत्र निष्कुलं करोति रिपुम् । **सुखप्रियाभ्यामानुलोम्ये** । सुखाकरोति । प्रियाकरोति । स्वाम्यादेरानुकूल्येन वर्तते । अन्यत्र सुखं करोति धर्मः । **दुःखात्प्रातिलोम्ये** । दुःखाकरोति । प्रातिकूल्येन वर्तते इत्यर्थः । अन्यत्र दुःखं करोति दुष्कृतम् । **शूलात्पाके** । शूलाकरोति मांसम् । शूले मासं पचतीत्यर्थः । अन्यत्र शूलं करोति । **सत्यादशपथे** । सत्याकरोति वणिग् भाण्डम् । अहमेतद्भाण्डं क्रेष्यामीति अन्तराले द्रव्यं सत्यंकारं व्यवस्थाप्य तथ्यं करोति । शपथं करोतीत्यर्थः । **भद्रमद्राभ्यां परिवापणे** । भद्राकरोति नापितः । मद्राकरोति नापितः । माङ्गल्येन मुण्डयतीत्यर्थः । अन्यत्र भद्रं करोति साधुः । इति हृत्प्रकरणम् ।

---

## अथ हृत्परिशिष्टम् ।

उणादिविशेषविषयः पृथक्त्वेन निर्दिष्टाः सुबोधकरा भविष्यन्तीति मनसिकृत्य न पूर्वप्रकरणेष्वाकृष्य विनिवेशिताः । तत्राप्यधिकारे "युनि । ३ । १ । ७९ ॥" इति, "निष्ठयानाप्यन्यपुनरुणिनौ । १ । ४ । ३० ।" इत्यनेन च रत्नादिप्रकरणे हृत्यम्बोधकः । तद्विशेषविधिरित्यम्—

**पैलादेः** ॥ १ । ४ । १३१ ॥ पैलादेः परस्य युवत्यस्योऽभवति । पीलाया अपत्यं पैलः । पीलाया वेत्यण् । पैलस्यापत्यं ( द्व्यचोऽण इति कृतस्य फिञ उपि ) पैल एव । द्रिसंज्ञाच्चाण उप् । आङ्गः पिता पुत्रश्च । अत्रापि द्व्यच इति कृतस्य फिञ उप् । आकृतिगणः पैलादिः । तेन, औदुम्बरिः पिता पुत्रश्च ।

**प्राचामिञोऽतौल्वलिभ्यः** ॥ १ । ४ । १३२ ॥ प्राचां वृद्धे य इञ् तदन्ताद्युवत्यस्योऽभवति । मान्थरेपणिः पिता पुत्रश्च । यञिञोरित्यागतस्य फण उप् । प्राचां किम् ? दाक्षिः पिता । पुत्रस्तु दाक्षायणिः । न तौल्वलिप्रभृतिभ्यः प्राक्त्वेपि । तौल्वलिः पिता । पुत्रस्तु तौल्वलायनिः ।

**द्रेर्बहुषु तेनैवाऽस्त्रियाम्** ॥१।४।१३३॥ उक्तम् । "द्रिः" "ते द्रयः" इति वचनाभ्यां द्रिसंज्ञा कृता । बह्वर्थेषु वर्तमानस्य द्रिसंज्ञस्य त्यस्योऽभवति, द्रिसंज्ञकत्येनैव कृतं चेद्बहुत्वं, तत्रापि न स्त्रियाम् । आङ्गः । आङ्गौ । अङ्गाः । एवमैक्ष्वाकः । इक्ष्वाकवः । द्रेः किम् ? औपगवाः । तेनैव बहुत्वं चेदिति किम् ? प्रियवाङ्गाः । अत्र बसवृत्त्या बहुत्वमस्ति । एवं गार्ग्यवात्स्यौपगवाः । केचिदत्र शारद्वच्छुनकेति वचने कृतोपामेव ग्रहणादिच्छन्त्युबादेशम् । तर्हि गर्गवत्सौपगवाः । उभयथापि प्रमाणम् । स्त्रियां तु आङ्ग्यः स्त्रियः ।

**यस्कादिभ्यो वृद्धे** ॥ १ । ४ ॥ १३४ ॥ यस्कादिभ्यः परस्य बहुषु वर्तमानस्य वृद्धत्यस्योब् भवति तत्कृते बहुत्वेऽस्त्रियाम् । लौकिकवृद्धापेक्षयाऽनन्तरापत्येप्युब् भवेत् । यास्कः । यस्काः ।

शिवाद्यण उप् । मैत्रेयः । मित्रयवः । अत्र गृष्ट्यादेरिति ढण उप् । स्त्रियां तु यास्कयः ।

यञञोः ॥ १ । ४ । १३५ ॥ वृद्धे बहुषु वर्तमानस्य यञोऽञश्चोऽभवति तत्कृते बहुत्वे, न तु स्त्रियाम् । गर्गाः । विदाः । अत्र क्रमेण गर्गादियञो विदाद्यञश्चोप् । स्त्रियां तु गार्ग्यस्ताः ।

२ दञादीनामेकत्वद्वित्वे वा तास्ते च० । गार्ग्यस्य कुल गार्ग्यकुलं गर्गकुल वा । नवा दन्तव्य यथाद्यप्रवेऽपि शब्दप्रवृत्तिदर्शनात् । इत्था एकशेपि यमादिना बहुत्वे सति स्यादुप् । यथा गर्गानतिक्रान्तोऽतिगर्गः ।

भृग्वत्र्यङ्कुत्सवासिष्ठगोतमाङ्गिरोभ्यः ॥ १ । ४ । १३६ ॥ एभ्यो वृद्धत्यस्य बहुषूप्भवति । भार्गवः । भृगवः । आत्रेयः । अत्रय । तत्कृते एव बहुत्वे । नेह, प्रियभार्गवाः । अस्त्रियामेव । नेह, भार्गव्यः । वृद्धत्यस्यैव । नेह, भृगुर्देवता एषामिति भार्गवाः ।

इञो बह्वचः प्राच्यभरतेषु ॥ १।४।१३७ ॥ बह्वचो मृदो वृद्धे प्राच्येषु भरतेषु वा वर्तमानो य इञ् तस्योप्भवति तेनैव बहुत्वेऽस्त्रियाम् । पान्नागारिः । पन्नागाराः । बह्वचः किम् ? पौष्पयः । भरता अपि प्राच्या एव । तथाप्यन्यत्र प्राच्यग्रहणेन तद्ग्रहणं मा भूदिति पृथगत्र ग्रहणम् । तेन, प्राचामिञ इत्यनेन भरतानां युवत्यस्योप् न भवति । औद्दलकिः पिता । औद्दलकायन. पुत्रः ।

न गोपवनादेः ॥ १ । ४ । १३८ ॥ विदाद्यन्तर्गणीयम् । 'यञञोः' इति प्राप्त उप् प्रतिषिध्यते । गौपवनाः । थैन्दुमाजनाः ।

वोपकादिभ्यः ॥ १।४।१३९ ॥ उपका औपकायना वा । पति स्यशस्यिनविभाषया यथाप्राप्तं द्वन्द्वे चाद्वन्द्वे च विभाष्यते ।

तिककितवादिभ्यो द्वन्द्वे ॥ १ । ४ । १४० ॥ तिककितवेति द्वन्द्वरूपम् । एवमादिभ्यो बहुषु वृद्धत्यस्य द्वन्द्वे सत्युम्भवति । तैकवायनाश्च कैतवायनाश्च तिककितवाः । तिकादिलक्षणफिञ उप् । एवं वाङ्करयश्च भाण्डीरथयश्च वङ्करभण्डीरथाः ।

कौण्डिन्यागस्त्ययोः कुण्डिनागस्ती ॥ १ । ४ । १४१ ॥ एतयोर्वृद्धत्यस्य यञोऽणश्चोम्भवति कुण्डिन अगस्ति इत्यादेशौ च प्रकृत्योर्यथासंख्यं भवतः । कौण्डिन्यः । कुण्डिनाः । आगस्त्यः अगस्तयः ।

ठस्येकः ॥ ५ । २ ९२ ॥ इत्युक्तष्ठस्येकादेश औत्सर्गिकः ।

इसुसुक्तः कः ॥ ५ । २ । ५५ ॥ इस् उस् उक् इत्येवमन्तात्तकारान्ताच्च गोः परस्य ठस्य कादेशो भवति । सर्पिः पण्यमस्य सार्पिष्कः । धनुःप्रहरणमस्य धानुष्कः । निषादकर्ष्वां जातो नैषादकर्षुकः । ओर्देशे ठञ् । मातुरागतं मातृकम् । ऋतष्ठण् । तान्तात्, उदश्वित्पण्यमस्य औदश्वित्कः । यावत्कः । लाक्षणिकत्वान्नेह, आशिषा तरत्याशिषिकः ।

प्योऽक्षु रूपान्त्ययोर्वृद्धेऽनार्षेऽणिञोः ॥ ३ । १ । ६३ ॥ स्त्रियामित्यनुवर्तते । अणिञौ यौ वृद्धेऽनार्षे विहितावक्षु रूपान्त्यौ तदन्तस्य मृदः प्यादेशो भवति स्त्रियाम् । निर्दिश्यमानत्वादणिञोरेव । पौत्रादि वृद्धमित्यऽपत्यविशेषस्य वृद्धसंज्ञा । ऋषेरिदमार्षम् । तद्रहितोऽनार्षः । रुरुपान्त्ये ययोरणिञोस्तयोः । करीषगन्धेरपत्यं स्त्री कारीषगन्ध्या । प्यान्ताट्टाप् । अक्षु किम् ? दासी ।

**गोत्रावयवात् ॥ ३ । १ । ६४ ॥** पूर्वाचार्याणां वृद्धस्य गोत्रसंज्ञा । गोत्राभिमताः कुलाख्याः । तदवयववाचिनो मृदो वृद्धेऽणिञोः प्यो भवति स्त्रियाम् । अरूपान्त्यार्थ आरम्भः । मुखरस्यापत्यं स्त्री मौखर्या ।

**क्रौड्यादेः ॥ ३ । १ । ६५ ॥** प्यो विधीयते । क्वचिदनन्तरापत्यार्थः, क्वचिदबहुजर्थः, क्वचिदरूपान्त्यार्थ आरम्भः । क्रौडी । क्रौड्या । आपिशल्या । इतो मनुष्येति ङीप्राप्तौ टाप् । सूतसंज्ञाद्युवत्याम् (ग०) । सूत्या । भोजात्क्षत्रियजातौ । भोज्या । अन्यत्र सूता, भोजा । टावन्तोच्चारणान्न जिः । गौकक्ष्यापुत्रः ।

**दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्यो वा॥३।१।६६।** एभ्यो वा प्यो भवति वृद्धेऽनन्तरापत्ये च । दैवयज्ञ्या, दैवयज्ञी । अनन्तरापत्ये इञ उपसंख्यानमजात्यर्थमिति ङी । वृद्धापत्ये तु इतो मनुष्येति ङी ।

आमलक्या अवयव इति विग्रहे ' नित्यं दुशरादेः इति मयट् । तस्य ' उप्फले : १ । ३ । १२१ ' इत्यनेनोपि ' स्त्रीगोर्नीचः । १ । १ । ८ ॥ इत्यनेन प्रादेशः प्राप्तः । तमपवाद्य,

**हृदुप्युप् ॥ १ । १ । ९ ॥** हृदुपि सति नीचः स्त्रीत्यस्योब् भवति । आमलकम् । अत्र ' परेचः पूर्वविधौ ' इति स्थानिवद्भावात् 'यस्य ङ्यां च' इत्यनेनाऽखे प्राप्ते ईविधिं प्रति स्थानिवत्त्वनिषेधान्न भवति ।

**हृद्गोण्याः ॥ १ । १ । १० ॥** हृदुपि सति । पञ्चभिर्गोणीभिः

क्रीतः पञ्चगोणिः । आर्द्रात्त्वो राद्धुबखावित्युपि, ओऽस्यस्य पूर्वेणाप् प्राप्तः । तमपवाद्योनेनेदादेशो विधीयते ।

**त्यदोश्च ॥ ५ । १ । १५७ ॥** एकार्थयोर्युष्मदस्मदोस्त्व-मादेशौ भवतस्त्ये यौ च परतः । त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः । ननु 'त्वमावेके । ९ । १ । १९६ ।' इति पूर्ववचनेनैव सिद्धमिति चेन्न, तवममादिविषयेपि प्रापणार्थत्वादानर्थक्याभावात् । चकारो मावध्यनुकर्षणार्थः । यद्यपि विभक्त्या उन्बहिरङ्ग इति कृत्स्नयोरप्राप्तेमावध्योरेव स्यातामादेशौ तथापि 'अन्तरङ्गानपि विधीन्बहिरङ्ग उन्बाधते' इति ज्ञापनार्थं चकारः ।

टिखादेर्विशेषविधयः—

**श्वाश्मचर्मणां संकोचविकारकोशेषु ॥ ४ । ४ । १३० ॥** एषां भस्य टेः खं भवति इति परतः संकोचविकारकोशेष्वर्थेषु यथाक्रमम् । शौवः संकोचः । शौवनो ऽन्यत्र । अश्मनो विकार आश्मः । आश्मनोन्यत्र । चार्मः कोशः । चार्मणोन्यत्र ।

**तिष्यपुष्ययोर्भाणि ॥ ४ । ४ । १३७ ॥** एतयोरुङो यस्य खं भवति नक्षत्रार्थेणि परतः । तिष्येण युक्तः कालस्तैषमहः । पौषमहः । भाणि किम् ? तिष्यो देवतास्य तैष्यः । तिष्य-पुष्ययोः किम् ? सैद्धचमहः ।

**औक्षम् ॥ ४।४।१५४ ॥** प्रायोनपत्येणीन इत्यनुवर्तते । अनपत्येणि सति औक्षमिति निपात्यते । अन इति वक्ष्यमाणेन प्राप्तस्य खस्यापवादोयम् । उक्ष्ण इदमौक्षम् ।

प्रायोग्रहणेनेकेऽपि टिखं प्रतिषेध्यते । अथर्वाणमधीते आथर्वणिकः ।

**न मादेरपत्येऽवर्मणः ॥ ४।४।१५९॥** वर्मवर्जितस्य मकारादेरनो यट्टिखादि प्राप्नोति तन्न भवत्यपत्यार्थेऽणि परतः । सुषाम्नोपत्यं सौषामः । अत्र नोऽपुंसो हृतीति प्राप्तं टिखमपवाद्य अन इति निषेधे प्राप्ते वचनमिदम् । मादेः किम् ? सौधनः । अपत्ये किम् ? चर्मणा परिवृतो रथश्चार्मणः । ' परिवृतो रथ ' इत्यण् । अवर्मणः किम् ? हैरण्यवर्मणः । प्रायग्रहणाद्धितनाम्नो विकल्पः । हितनाम्नोपत्यं हैतनामो, हैतनाम्नः ।

**ब्राह्मोऽजातौ ॥ ४ । ४ । १६० ॥** ब्राह्म इति निपात्यतेऽपत्यजातेरन्यत्र । ब्राह्मो गर्भः । ब्राह्ममस्त्रम् । जात्यपत्ये तु नेदं निपातनम् । ब्रह्मणोपत्यं ब्राह्मणो जातिः । प्रसज्यप्रतिषेधोयम् । तेनापत्यजातेरन्यत्र जातावेव निपातनमिष्यते । ब्रह्मण इयं ब्राह्मी औषधिः ।

**कार्मः शीले ॥ ४ । ४ । १६१ ॥** कर्मशीलः कार्मः । छत्रादेर्णः । शीले किम् ? नेह, वाग्युक्तं कर्म कार्मणम् । ' तद्युक्तात्कर्मणोण् ' इत्युक्तोऽण् । णेप्यण्कृतं भवतीति ज्ञाप्यतेऽनेन वचनेन । तेन चुराशीला चौरी ।

**दण्डिहस्तिनोः फे ॥ ४ । ४ । १६२ ॥** यदुक्तं तन्न । नडादेः फण् । दण्डिनोपत्यं दाण्डिनायनः । हास्तिनायनः ।

**वासिजिम्हाशिनोः फढे ॥ ४ । ४ । १६३ ॥** अनयोः फे ढे च टिखादि न भवति । वासिनोपत्यं वासिनायनिः । तिकादित्वात् फिञ् । जैम्हाशिनेयः । शुभ्रादेरिति ढण् । नोऽपुंस इति टिखे प्राप्ते वचनम् ।

---

हृत्यचामादेः ॥ ५ । २ । ५ ॥ इत्युक्तमपत्याधिकारप्रारम्भे । तदपवाद,

**देविकाशिंशपादीर्घसत्रश्रेयसामाः ॥ ५ । २ । ६ ॥** एषामादेरचो ञ्णिति हृति परे ऐप्प्रसङ्गे आ भवति । केवलानामेषामेतदादीनां च विशेषणत्वाद् ग्रहणम् । देविकायां भवं दाविकमुदकम् । देविकाकूले भवा दाविकाकूलाः शालयः । शिंशपाया विकारः शांशपं भस्म । शांशपास्थलम् । दीर्घसत्रे भवं दार्घसत्रम् । श्रेयोविकृत्य कृतो ग्रन्थः श्रेयसि भवो वा श्रायसः स्याद्वादः । देविकादीनामेवादेरचः । नेह, सौदेविकाः ।

**न ञे ॥ ५ । २ । ११ ॥** ञ इति कर्मव्यतिहारः । आर्थेञ्णिति हृति परतो यत्प्राप्नोत्यैचादिकं तन्न भवति । व्याक्रोशी । अत्र ' कर्मव्यतिहारे ञः ॥२।२ । ७६ ' इति कर्मव्यतिहारे ञो वक्ष्यते । ततो ' ञात् स्त्रियाम् । ४ । २ २२ । ' इति स्वार्थेऽण् । अत्र पदे य्वोरैयौवित्यौवि प्राप्तेऽनेन निषेधे आद्यच ऐप् ।

**स्वागतादेः ॥ ५ । २ । १२ ॥** एभ्यः प्राप्त ऐयौव् न भवति । स्वागतेन चरति स्वागतिकः । स्वध्वरस्यापत्यं स्वाध्वरिः । व्यावहारिकः । स्वापतेयम् ।

**वा पदान्तस्य ॥ ५ । २ । १४ ॥** श्वादेरावत इत्युक्त प्राग्वहतीयेषु । पदशब्दान्तस्य श्वादेर्गो प्राप्त औव्वा भवति ञ्णिति ह्रति । द्वारादित्वादौव् प्राप्त । श्वापदाना समूह श्वापद, शौवापदम् । इकारादौ तु पूर्वनिर्णयेन नित्य एव निषेधः । श्वापदेन चरति श्वापदिक. ।

**घोः ॥ ५ । २ । १५ ॥ अवयवाद्दतोः ॥ ५ । २ । १६ ॥** अवयववाचिन शब्दादुत्तरस्यर्तोर्घोरचामादेरच ऐऽभवति ञ्णिति ह्रति । पूर्वासु वर्षासु जात पूर्ववार्षिक । ह्रदर्थविवक्षायामत्र ह्रदर्थेति षस । कालाट्ठञिति कालान्तादपि ठञ्, ऋतो ञिद्विधाववयवादिति तदन्तविधेरुपसख्यानात् । अन्यथा **सत्यविधौ न तदन्तविधि रिति** न स्यात् । घोरित्यधिकारोयम् ।

**सुसर्वार्द्धाद्राष्ट्रस्य ॥ ५ । २ । १७ ॥** घोरैप् । सुपाञ्चालक· । प्रादिलक्षण षस । सर्वपाञ्चालक । पूर्वकालेति षस । अर्ध-पाञ्चालक । विशेषण विशेष्येणेति षस ·। अत्र जातार्थे ' राष्ट्रा-वध्योर्बहुत्वेऽद्वोरपि'इति वुञ्, सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधेरुपसख्यानात् । एव सुमागधक ।

**दिशोऽमद्राणाम् ॥ ५।२। १८ ॥** दिक्शब्दादुत्तरस्य मद्र-वर्जितस्य राष्ट्रस्य घोरैऽभवति । पूर्वमागधक । नेह, पौर्वमद्र । मद्रेभ्योऽण् । दिश किम् ? पौर्वपञ्चाल ।

**प्राचां ग्रामाणाम् ॥ ५ । २ । १९ ॥** दिश उत्तरेषा प्राचा देशे ग्रामाणा घोरैऽभवति । पूर्वेषुकामशम्या जात, पूर्वेषुकामशम ।

अण् । नेन्द्रस्येति प्रतिषेधाज्ज्ञायते–प्राक् पूर्वोत्तरपदयोरैवादिकार्यं पश्चादेकादेशः ।

**प्रोष्ठपदानां जाते ॥ ५ । २ । २३ ॥** घोरैप् । प्रोष्ठपदाभिर्युक्तः कालः प्रोष्ठपदा । 'माद्युक्तः कालः' इत्यण 'लुबऽभेदे' इत्युस् । उासि युक्तवल्लिङ्गसंख्ये । प्रोष्ठपदासु जातः प्रोष्ठपादः । *भेभ्यो बहुलमित्यण उपि प्राप्ते बहुलवचनान्न भवति । जाते किम् ?* भवेऽर्थे प्रौष्ठपदो मेघः ।

**हृत्सिन्धुभगे द्वयोः ॥ ५ । २ । २४ ॥** हृदादिषु घुपु द्वयोः पूर्वोत्तरयोः पदयोरचामादेरच ऐभ्मवति । सुहृदयस्येदं सौहार्दम् । माहासैन्धवः । कच्छादित्वादण् । सौभाग्यम् ।

**अनुशतिकादेः ॥ ५ । २ । २५ ॥** द्वयोरैप् । अनुशतिकस्येदमानुशातिकम् । ऐहलौकिकम् । प्रयोजनेऽर्थे वुञ् ।

**प्राचां नगरे ॥ ५।२।२९ ॥** प्राचां देशे नगरे घौ द्वयोरैप् । सुह्मनगरे भवः सौह्मनागरः । वैराटनागरः । प्राचां किम् ? माद्रनगरः ।

**जङ्गलधेनुवलजे ॥ ५ । २ । ३० ॥** जङ्गलादिषु घुपु पूर्वपदस्यैभवति । कौरुजङ्गलः । वैश्वधेनवः । सौवर्णवलजः ।

**वा घोः ॥ ५ । २ । ३१ ॥** जङ्गलादेरेव घोरैन्वा भवति । अत एव प्रथमसूत्रे पूर्वपदस्येति लब्धम् । कौरुजाङ्गलः कौरुजङ्गलः ।

**परिमाणस्यानतोर्घोर्वा पूर्वस्य ॥ ५ ।३२ ॥** अर्द्धादुत्तरस्यानकारस्य परिमाणस्य घोरैभ्मवति, पूर्वपदस्य तु वा । आर्धद्रौणिकः ।

पूर्वस्य तु वा, अर्धद्रौणिकः । अनतः किम् ? आर्द्धप्रस्थिकः । अर्धप्रस्थिकः ।

**प्रवाहणस्य ढे दस्य ॥ ५।२।३३॥** प्रवाहणस्य ढे परतो द्योरैब्भवति, पूर्वपदस्य तु वा, ढान्तस्य चैबऽन्यस्मिन्नहृति ञ्णिति । प्रावाहणेयः, प्रवाहणेयः । अपत्ये 'शुभ्रादेः' इति ढण् । ढान्तस्य, प्रवाहणेयस्यापत्यं प्रावाहणेयिः । प्रवाहणेयिः । वृद्धच-रणादिति वुञि च प्रवाहणेयस्येदं प्रावाहणेयकं, प्रवाहणेयकम् ।

**नञः शुचीश्वरक्षेत्रज्ञकुशलचपलनिपुणानाम् ॥ ५।२। ३४ ॥** नञः परेषां शुच्यादीनां द्योरैब्भवति पूर्वपदस्य तु वा । अशुचेरिदमऽशौचम् आशौचं वा । अनैश्वर्यमाऽऽनैश्वर्यम् । अचा-पलमाऽऽचापलम् ।

इति हलारिशिष्टम् ।

इति जैनेन्द्रप्रक्रियायां पूर्वार्धः ।

## अथ हृत्प्रकरणम् ।

**समर्थात् प्रथमाद्वा** ॥ ३ । १ । ६७ ॥ किंवहितयतः प्रा-गिदं पदत्रयमधिक्रियते । सामर्थ्यं[2] च सुबन्तस्य । तेन सुबन्ता-स्योत्पत्तिः । समर्थः पदविधिरिति सामर्थ्येनैव सिद्धे पुनर्ग्रहणं कृत-वर्णानुपूर्वकात् पदात्स्यो यथा[3] स्यादिति ।

प्राग् द्रोरण् ॥ ३ । १ । ६८ ॥ द्रो ( ३।३।११९ ) रित्यतः प्राग्येऽर्था वक्ष्यन्ते तेष्वण् भवतीत्यधिकारः ।

अश्वपत्यादेः ॥ ५ । १ । ६९ ॥ समर्थविभक्त्यन्तेभ्योऽ-श्वपत्यादिभ्योऽण् भवति प्राग्द्रोरर्थेषु । पतिद्योरिति वक्ष्य-माणण्यस्यापवादः । अश्वपतेरपत्यादीति विग्रहेऽणि कृते,—

हृत्यचामादेः ॥ ३ । २ । ९ ॥ अच इत्यनुवर्तते । ञ्णिति हृति परतोऽचामादेरच ऐञ्भवति । इत्यैप् । यस्य ङ्यां च । आश्वपतम् । गाणपतम् । अनेनैपा अन्त्यैप् उड्डैप् च बाध्यते ।

दित्यादित्यादित्यपतिद्योर्ण्यः ॥ ३ । १ । ७० ॥ दिति अदिति आदित्य पतिद्यु इत्येतेभ्यः समर्थविभक्त्यन्तेभ्यो ण्यो भवति प्राग्द्रोरर्थेषु । अणोपवादोयम् । दितेरपत्यादि दैत्यः । अदितेरा-दित्यस्य वापत्यादि आदित्यः । सैनापत्यः । यमाच्चेति वक्तव्यम् *।

---

१ हरति-आनयति प्रकृत्यर्थादधिकमर्थमिति हृत् । इति व्युत्पत्तिः । हृतो द्विधा अर्थान्तरवृत्तयः स्वार्थिकाश्च । अणादयोऽर्थान्तरवृत्तयः, क-अ-ईयादयः स्वार्थिकाः । तत्रापि केचनाणादयोऽनेकार्थेषु युज्यन्ते, इञादयस्तु क्वचिदेकार्थे एव ।

२ विशेष्यविशेषणभावापन्नवाक्यार्थोपस्थितिजनकत्वं सामर्थ्यम् ।

३ तेन सौत्थिति इति सिद्धम् ।

याम्यः। पृथिव्या आऽञौ*। पार्थिवा, पार्थिवी। देवाद्यञऽञौ *। दैव्यं, दैवम्। बहिषष्टिखं यञ् च *। बाह्यम्। ईकण् च। बाहीकः। स्थाम्नोऽकारः *। अश्वत्थामः। लोम्नश्चापत्येषु बहुषु *। उडुलोमाः। शरलोमाः। बहुषु किम्? औडुलोमिः। सर्वत्र गोरजादिव्यप्रसङ्गे यः *। गव्यः। अजादिप्रसङ्ग इति किम्? गोरूप्यम्।

उत्सादेरञ् ॥ ३।१।७१॥ अणस्तदपवादानां च बाधकम्। उत्सस्यापत्यादि औत्सः।

स्त्रीपुंसात् नुक् त्वात् ॥ ३।१।७२॥ ब्रह्मणस्त्व इत्यतः प्रागर्थेषु स्त्रीपुंशब्दाभ्यामञ् भवति नुक् च। स्त्रीषु भवं, स्त्रीणां समूहः, स्त्रीभ्य आगतं, स्त्रीभ्यो हितं, स्त्रीणां भावो वा स्त्रैणम्। नोऽपुंसो हृतीति टिखप्रतिषेधः। पुंवद्यजातीयेति ज्ञापकाद्वतोऽर्थे नायं विधिः। स्त्रीवत्। पुंवत्।

वृद्धेऽच्यलुप्। ३।१।७३॥ यस्कादिभ्यो वृद्धे इत्यादिना यस्य त्यस्य उब्वक्ष्यते तस्यानुब् भवति प्राग्दर्वीये अजादावुत्पत्स्यमाने (विवक्षिते)। इति प्रतिषेधेपि, यस्य क्या चेत्यखे,—

क्यच्व्यनाद्धृत्यापत्यस्य ॥ ४।४।१३९॥ क्ये, च्वौ, अनाकारादिहृति च परे हलः परस्यापत्ययकारस्य खं भवति। इति यखम्। गर्गाणां छात्रा गार्गीयाः। अत्र यञञोरिति बहुत्वे उप्प्राप्तः। आत्रेयीयाः। अत्र इतोऽनिञ इति ढण्। तस्य भृग्वत्रिकुत्सेत्युप्प्राप्तः। वृद्धे इति किम्? बादरमित्यत्र अवयवार्थे कृतस्याण उप्फले इत्युबेव यथा स्यात्। अचीति किम्? गर्गरूपम्।

उपगोरपत्यमौपगवः । उक्तार्थत्वादपत्यशब्दस्य निवृत्तिः । सुपो धुमृदोरिति सुप उप् । एवमाश्वपतः, दैत्यः, औत्सः, स्त्रैणः । तस्येदमित्यनेनैवापत्येपि सिद्धे बाधकबाधनार्थमिदम् । यथा भानोरपत्यं भानवः । अत्र तस्येदमित्यस्य बाधकेन दोश्छ इत्यनेन प्राप्तश्छोऽपत्येऽर्थे निषिद्धः । वृत्तौ स्वभावत एवैकार्थीभावः । समर्थात्किम् ? धनं चैत्रस्यापत्यमुपगोः । प्रथमात्किम् ? अपत्यशब्दात्तार्थे यथा मा भूत् । वाधिकारात्पक्षे वाक्यमपि ।

अस्त्रीति किम्? गार्ग्यस्यापत्य स्त्री गार्गी एव । तुशब्दो वृद्धसञ्ज्ञासमावेशनिवृत्त्यर्थ । वृद्धसञ्ज्ञासमावेशे हि यूनि पैलादेरित्यादिनोक् न स्यात् । किन्तु वृद्धेऽप्यनुत्रिति अनुनेव । द्व्यचोण इति फिञि पीलाया वृद्धापत्य पैल , ततो यूनि तस्योपि पैल पिता पुत्रश्च।

**भ्रातरि च ज्यायसि ॥ ३ । १ । ८२ ॥** ज्यायसि भ्रातरि जीवति कनीयान् भ्राता युवसञ्ज्ञो भवति, चतुर्थादिरेव । मृतेऽपि वश्ये यथा स्यादित्यारम्भ । ज्यायास्तु भ्राता वृद्धसञ्ज्ञ एव ।

**वान्यास्मिन् सपिण्डे स्थविरतरे जीवति ॥ ३ । १ । ८३ ॥** भ्रातुरन्यस्मिन् स्थविरतरे सपिण्डे जीवति पौत्रादि चतुर्थादिकमपत्य यज्जीवति तद्युवसञ्ज्ञ भवति । प्रकृत जीवतीति शत्रन्त स्थविरतरस्य विशेषणम् । इद तु तिङन्त सञ्ज्ञिनो विशेषणम् । ज्यायसीति सिद्धे स्थविरतरग्रहण स्थानवयोभ्या ज्येष्ठस्य ग्रहणार्थम् । तेन भ्रातृव्ये वयोज्येष्ठे कनीयान् पितृव्यो न युवसञ्ज्ञ ।

**पूजाकुत्सयोर्व्यत्ययः ॥ ३ । १ । ८४ ॥** पूजाया गम्यमानाया वृद्धोपि युवसञ्ज्ञ , कुत्साया च युवापि वृद्धो भवति वा । पूजाया, तत्र भवान् गार्ग्यायण । गार्ग्यो वा । कुत्साया, गार्ग्यस्त्व जाल्म । गार्ग्यायणो वा ।

**अह्लाह्लादेरिञ् ॥ ३ । १ । ८५ ॥** अकारान्तान्मृदो बाह्वादिभ्यश्चानन्तरे वृद्धे युवसञ्ज्ञके चापत्ये इञ् भवत्यणोपवाद । आकम्पनि । अनकारान्तार्थं बाधकबाधनार्थं च बाह्वादिग्रहणम् । बाहवि । ख्याताख्यातयो ख्याते सप्रत्यय इति बाह्वादिषु येषा लौकिक गोत्रभाव प्रति प्रवर्तकत्वमस्ति तेभ्य एव । नेह, बाहुर्नाम कश्चित्तस्यापत्य बाहव । आकृतिगणोयम् ।

उपगोरपत्यमौपगवः। उक्तार्थत्वादपत्यशब्दस्य निवृत्तिः। सुपो धुमृदोरिति सुप उप्। एवमाश्वपतः, दैत्यः, औत्सः, स्त्रैणः। तस्येदमित्यनेनैवापत्येपि सिद्धे बाधकबाधनार्थमिदम्। यथा भानोरपत्यं भानवः। अत्र तस्येदमित्यस्य बाधकेन दोश्छ इत्यनेन प्राप्तश्छोऽपत्येऽर्थे निषिद्धः। वृत्तौ स्वभावत एवैकार्थीभावः। समर्थात्किम्? धनं चैत्रस्यापत्यमुपगोः। प्रथमात्किम्? अपत्यशब्दाद्यार्थे यथा मा भूत्। वाधिकारात्पक्षे वाक्यमपि।

**पौत्रादि वृद्धम्** ॥ ३। १। ७८॥ प्रथमादित्यस्यार्थवशात्पञ्चम्यन्तेन विपरिणामः। प्रथमस्य पौत्रादि यदपत्यं तद्वृद्धसंज्ञं भवति। पौत्रादिग्रहणमनन्तरापत्यस्य वृद्धसंज्ञाप्रतिषेधार्थम्।

**एकः** ॥ ३। १। ७९॥ वृद्धेऽपत्ये विवक्षिते एक एव त्यो भवति। स च परमप्रकृतेरेव। गर्गस्य वृद्धापत्यं गार्ग्यः। वक्ष्यतेऽत्र यञ्।

**ततो यूनि** ॥ ३। १। ८०॥ वृद्धत्यान्ताद्यून्यपत्ये विवक्षिते एक एव त्यो भवति। गर्गस्य युवापत्यं गार्ग्यायणः। यदपि व्यवहितेन जनितं तदपि सामान्येन प्रथमप्रकृतेरपत्यं भवति। यद्यपि सर्वेऽप्येतना अपत्येन युज्यन्ते तथापि प्रथमादित्यनुवर्तनात्प्रथमप्रकृतेरेव त्यो भवति। एवं यून्यपि त्ये विवक्षिते एक एव त्यो भवति। स च वृद्धत्यान्तादेव। इति नियम्यते।

**जीवति तु वंश्ये युवाऽस्त्री** ॥ ३। १। ८१॥ वंश्ये पित्रादौ जीवति पौत्रादि यदपत्यं चतुर्थादिकं तद् युवसंज्ञं भवति। स्त्रियास्तु न युवसंज्ञा। गर्गस्य युवापत्यं गार्ग्यायणः।

अस्त्रीति किम्? गार्ग्यस्यापत्यं स्त्री गार्गी एव। तुशब्दो वृद्धसंज्ञा-समावेशनिवृत्त्यर्थः। वृद्धसंज्ञासमावेशे हि यूनि पैलादेरित्यादि-नोक् न स्यात्। किन्तु वृद्धेऽप्यनुविति अनुवेव। द्व्यचोण इति फिञि पीलाया वृद्धापत्यं पैलः, ततो यूनि तस्योपि पैलः पिता पुत्रश्च।

भ्रातरि च ज्यायसि ॥ ३ । १ । ८२ ॥ ज्यायसि भ्रातरि जीवति कनीयान् भ्राता युवसंज्ञो भवति, चतुर्थादिरेव। मृतेऽपि वंश्ये यथा स्यादित्यारम्भः। ज्यायांस्तु भ्राता वृद्धसंज्ञ एव।

वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ ३ । १ । ८३ ॥ भ्रातुरन्यस्मिन् स्थविरतरे सपिण्डे जीवति पौत्रादि चतु-र्थादिकमपत्यं यज्जीवति तद्युवसंज्ञं भवति। प्रकृतं जीवतीति शत्रन्तं स्थविरतरस्य विशेषणम्। इदं तु मिङन्तं संज्ञिनो विशे-षणम्। ज्यायसीति सिद्धे स्थविरतरग्रहणं स्थानवयोभ्यां ज्येष्ठस्य ग्रहणार्थम्। तेन भ्रातृव्ये वयोज्येष्ठे कनीयान् पितृव्यो न युवसंज्ञः।

पूजाकुत्सयोर्व्यत्ययः ॥ ३ । १ । ८४ ॥ पूजायां गम्य-मानायां वृद्धोपि युवसंज्ञ', कुत्सायां च युवापि वृद्धो भवति वा। पूजायां, तत्र भवान् गार्ग्यायण'। गार्ग्यो वा। कुत्सायां, गार्ग्य-स्त्वं जाल्म। गार्ग्यायणो वा।

अद्वाह्वादेरिञ् ॥ ३ । १ । ८५ ॥ अकारान्तान्मृदो बाह्वादिभ्यश्चानन्तरे वृद्धे युवसंज्ञके चापत्ये इञ् भवत्यणोपवादः। आकम्पनि.। अनकारान्तार्थं बाधकबाधनार्थं च बाह्वादिग्रहणम्। बाहविः। ख्यातख्यातयोः ख्याते संप्रत्यय इति बाह्वादिषु येषा लौकिकगोत्रभाव मवि प्रवर्तकत्वमस्ति तेभ्य एव। नेह, बाहुर्नाम कश्चित्तस्यापत्यं बाहवः। आकृतिगणोयम्।

**सुधातुरकङ् च ॥ ३ । १ । ८६ ॥** सुधातुरिञ् तत्सन्नियोगे अकङ् च भवति । सौधातकिः । व्यासवरूटनिषादचण्डालबिम्बादीनामिति वक्तव्यमिति केचित्तन्न सम्यक्, अव्ययिकन्यायेन कान्तेभ्य एवेञः सिद्धत्वात् । तेन वैयासकिः । अत्र हि,

**पदे य्वोरैयौव् ॥ ५ । २ । ८ ॥** पदे परतोऽचामादेरचः स्थाने कृतौ यौ यकारवकारौ तयोर्यथाक्रममैप् औविल्यादेशौ भवतो ञ्णिति परतः । आयैपोऽपवादोयम् । इति यस्यैप् । एवं कामारकिः ।

**वृद्धे कुञ्जादिभ्यो ञ्फः ॥ ३ । १ । ८७ ॥** वृद्धत्ये विवक्षिते कुञ्जादिभ्यो ञ्फो भवति ।

**व्रातञ्फादस्त्रियाम् ॥ ४ । २ । २ ॥** व्रातविशेषवाचिभ्यो ञ्फान्तेभ्यश्च स्वार्थे ञ्फो भवत्यस्त्रियाम् । नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः । कौञ्जायन्यः । स्त्रियां कौञ्जायनी । वृद्धे किम्? अनन्तरापत्ये अत इञेव यथा स्यात् । कुञ्जस्यानन्तरापत्यं कौञ्जिः ।

**नडादेः फण् ॥ ३ । १ । ८८ ॥** नडादिभ्यः फण् भवति । वृद्धेपत्ये एव । नाडायनः । अनन्तरस्तु नाडिः । सालङ्कायनः सालङ्किः, पिता पुत्रश्चेति तु पैलादिषु पाठसामर्थ्यादिञपि भवति ।

**हरिताद्यञः ॥ ३ । १ । ८९ ॥** विदाद्यन्तर्गणोयम् । हरितादिभ्योऽञन्तेभ्यः फण् भवति । इञोऽपवादः । हरितस्यापत्यं युवा हारितायनः । वृद्धग्रहणमिह उत्तरत्र च सामर्थ्यादञो यञिञोश्च विशेषणम् । वृद्धे योऽञ् यञिञौ च तदन्तेभ्यो वृद्धे एफ एव इति नियमाद्यन्त्ययम् ।

यञिञोः ॥ ३।१।९०॥ वृद्धे यौ यञिञौ तदन्तात् फण् भवति। गार्ग्यायणः। दाक्षायणः। गार्ग्या अपत्यमिति लिङ्गविशिष्टस्य ग्रहणेपि परत्वाड्ढण्। गार्गेयः।

शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ॥ ३।१।९१॥ शरद्वत्शुनकदर्भेभ्यो भृगुवत्साग्रायणेष्वर्थेषु यथासंख्यं फण् भवति वृद्धे। शारद्वतायनो भार्गवश्चेत्। शारद्वतोऽन्यः। शौनकायनो वात्स्यश्चेत्। शौनकोऽन्यः। दार्भायण आग्रायणश्चेत्। दार्भिरन्यः। आद्याभ्यां विदादित्वादञि प्राप्तेऽन्त्याच्चेञि, वचनम्।

द्रोणपर्वतजीवन्ताद्वा ॥ ३।१।९२॥ एभ्यो वृद्धे फण् वा। द्रौणायनः, द्रौणिः। पार्वतायनः, पार्वतिः। जैवन्तायनः, जैवन्तिः।

विदादिभ्योऽनृष्यानन्तर्येऽञ् ॥ ३।१।९३॥ एभ्यो वृद्धेऽनृषीणामानन्तर्ये च अञ् भवति। विदस्य वृद्धापत्यं वैदः। अस्यर्षिवाचित्वादनन्तरापत्ये इञ्। वैदिः। बाह्वादित्वादिञ्। अनृषिभ्यस्तु अनन्तरापत्ये एव। पौत्रः। दौहित्रः। ये तु ऋष्यपत्यानां नैरन्तर्ये प्रतिषेधमाचक्षते तेषां कौशिको विश्वामित्र इति न स्यात्।

गर्गादेर्यञ् ॥३।१।९४॥ गर्गादिभ्यो वृद्धेऽपत्ये यञ् भवति। गर्गस्यापत्य पौत्रादि गार्ग्यः। वाजादसे (ग.)। नेह, सौवाजिः।

मधुबभ्रोर्ब्राह्मणकौशिकयोः ॥ ३।१।९५॥ आभ्यां वृद्धे यञ् भवति यथासंख्य ब्राह्मणे कौशिके चाभिधेये। माधव्यो ब्राह्मणश्चेत्। माधवोऽन्यः। बाभ्रव्यः कौशिकश्चेत्। बाभ्रवोऽन्यः। बभ्रोर्गर्गादित्वात्सिद्धेपि नियमार्थमिदम्। गर्गादिषु पाठस्तु

लोहितादिकार्यार्थः । बाभ्रव्यायणी । गणेपि कौशिकग्रहणे सति सिद्धे इह करण वृद्धार्थम् । ननु गणेपि वृद्धे यञ् विहितः[2] तर्हीद ज्ञापक—गणपाठे क्वचिदनन्तरापत्येपि यञ् भवतीति । तेन जामदग्न्यो रामः । पाराशर्यो व्यासः ।

कपिबोधादाङ्गिरसे ॥ ३ । १ । ९६ ॥ आभ्यामाङ्गिरसेऽपत्यविशेषे एव वृद्धे यञ् भवति । काप्य आङ्गिरसश्चेत् । अन्यत्र 'इतोऽनित्र' इति ढणि, कापेयः । बौध्य आङ्गिरसश्चेत् । बौधिरन्यः । अस्यापि गर्गादिपाठात्सिद्धे नियमार्थं वचनम् । गर्गादिपाठफल लोहितादिकार्यम् । काप्यायनी । मधुबोधयोस्तूभयम् । माधवी । माधव्यायनी । बौधी । बौध्यायनी ।

वतण्डात् ॥ ३ । १ । ९७ ॥ आङ्गिरसे एव । वृद्धे एव । वातण्ड्य. । अनाङ्गिरसे शिवादिषु पाठादण् । वातण्ड. । गर्गादिपाठाद्यञि वातण्ड्यः ।

स्त्रियामुप् ॥ ३ । १ । ९८ ॥ वतण्डशब्दादाङ्गिरसे विहितस्य स्यस्योप् भवति स्त्रियाम् । वतण्डस्यापत्य वृद्धा स्त्री वतण्डी । यन उपि 'जातेरयो॰' इति ङी । अनाङ्गिरसे तु, वातण्डी वातण्ड्यायनी च ।

अश्वादेः फञ् ॥ ३ । १ । ९९ ॥ अश्वादिभ्यो वृद्धे फञ् भवति । आश्वायनः । ये त्वत्र वृद्धान्तास्तेभ्यः सामर्थ्याद्यून्येव ।

भर्गात् त्रैगर्ते ॥ ३ । १ । १०० ॥ भर्गाद्वृद्धे फञ् भवति त्रैगर्ते । भार्गायणस्त्रैगर्तश्चेत् । भार्गिरन्य ।

शिवादिभ्योऽण् ॥ ३ । १ । १०१ ॥ वृद्धे इति निवृत्तम् । इत ऊर्ध्वं सामान्येऽपत्ये त्यविधानम् । गङ्गाशब्दान्नदीलक्षणस्याणो

"द्व्यचः" इति ढण् बाधकः। तमपि बाधित्वा द्व्यचो नद्या इति गणसूत्रेणाण् प्राप्तः। अस्य तिकादिष्वपि पाठात् फिञ् च प्राप्तः, शुभ्रादिषु पाठाड्ढण् च। तेन त्रैरूप्यम्। गाङ्गः, गाङ्गायनिः, गाङ्गेयः। विपाश्शब्दादपि नदीमानुषीत्यणो 'द्व्यचः' इति ढण् बाधकः। तस्यापि द्व्यचो नद्या इत्यण् बाधकः। कुञ्जादित्वात् च्फञ्च। ततः स्वार्थे ञ्यश्च। वैपाशो, वैपाशायन्यः।

नदीमानुषीभ्योऽदुभ्यस्तदाख्याभ्यः ॥ ३।१।१०२ ॥ नदीमानुषीवाचिप्रकृतिभ्योऽदुसंज्ञाभ्यस्तदाख्याभ्योऽण् भवति। ढणोपवादः। यमुनाया अपत्यं यामुनः। स्वयंप्रभाया अपत्यं स्वायंप्रभः। नदीमानुषीभ्यः किम्? सौपर्णेयः। वैनतेयः। अदुभ्यः किम्? वायुवेगेयः। तदाख्याभ्यः किम्? शौभनेयः। पुरस्तादपवादत्वादस्यैवानन्तराणो बाधकोयं न क्षुद्राभ्यो वेति ढ्रणः। तेन पौलिकेरः।

कुर्वृष्ण्यन्धकवृष्णेः ॥ ३। १। १०३ ॥ कुर्वृष्ण्यन्धकवृष्णिवाचिभ्यो मृद्धयोपत्येऽण् भवति। इञोपवादः। कुरुभ्यः— नाकुलः। दौर्योधनः। ऋषयो ग्राम्या मठपतयो वसिष्ठादयः। तेभ्यः—वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः। श्वैत्रकः। वृष्णिभ्यः— वासुदेवः। आनिरुद्धः। आत्रेये तु परत्वाड् ढण्। विष्वक्सेनादिषु तु परत्वात्सेनान्तलक्षणो ण्य इञ् च भवति।

मातुरुत् संख्यासंभद्रादेः ॥ ३। १। १०४ ॥ संख्यासंभद्रादेर्मातृशब्दस्योकारान्तादेशो भवत्यण् च। त्रयाणां मातॄणामपत्यं त्रैमातुरो भरतः। पाण्मातुरः कुमारः। सांमातुरः। मा-

द्वमातुरः। जननीपर्यायस्यैव ग्रहणम्। संख्यादेः किम्? सौभात्रः। शुभ्रादिपाठाड्ढणि, वैमात्रेयः।

**कन्यायाः कनीन च ॥३।१।१०५॥** कन्यायाः कनीनादेशो भवत्यण् च ढणोपवादः। कानीनो व्यास. कर्णश्च।

**विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ॥३।१।१०६॥** विकर्णशुङ्गच्छगलेभ्योण् भवति यथासंख्य वात्स्ये भारद्वाजे आत्रेये चापत्यविशेषे। वत्सादयः शब्दा उपचारादिह वृद्धत्यान्ता गृह्यन्ते। वैकर्णो वात्स्यश्चेत्। वैकर्णिरन्यः। काश्यपे तु वैकर्णेय'। शौङ्गो भारद्वाजश्चेत्। शौङ्गिरन्यः। लिङ्गविशिष्टपरिभाषया शुङ्गाया अपि शौङ्गः। शौङ्गेयोन्य.। छागल आत्रेयश्चेत्। छागलिरन्यः।

**पीलाया वा ॥ ३ । १ । १०७ ॥** अपत्येऽण् वा। पैलः। पक्षे द्व्यच इति ढणि, पैलेय.।

**ढण् च मण्डूकात् ॥ ३ । १ । १०८ ॥** चादण् च वा। पक्षे इञ्। माण्डूकेय, माण्डूक', माण्डूकिः। स्त्रिया माण्डूकेयी। अणन्तस्य तु कौरव्यासुरिमाण्डूकादिति फटि माण्डूकायनी।

**स्त्रीभ्यो ढण् ॥ ३ । १ । १०९ ॥** स्त्रियामित्येवंविहितत्यान्तेभ्यो ढण् भवति। सौपर्णेयः। स्त्रियामित्येवविहितेति किम्? दारदोपत्य दारदः। मण्डूकप्लुत्या पीलाया वेत्यतो व्यवस्थितविभाषानुवर्तनात् क्रुञ्चकोकिलाभ्यामण्। कौञ्च'। कौकिलः। माद्रादिवचनानि बाधकान्यस्य।

**द्व्यचः** ॥ ३ । १ । ११० ॥ स्त्रीत्यान्ताद् द्व्यचो ढण्। मानुपीलक्षणस्याणोपवादः । दात्तेयः । गौधेयः ।

**इतोनिञः** ॥ ३ । १ । १११ ॥ स्त्रीभ्य इति निवृत्तम्। अनिञन्तादिकारान्ताद् द्व्यचो मृदो ढण् भवति। नाभेयः।आत्रेयः। अनिञः किम् ? दाक्षायणः । द्व्यचः किम् ? मारीचः ।

**शुभ्रादेः** ॥ ३ । १ । ११२ ॥ एभ्यो ढण् भवति । इञा-दीनामपवादः । शुभ्रस्यापत्यं शौभ्रेयः । आकृतिगणोयम् । तेन गाङ्गेय इत्यादिसिद्धिः ।

**विकर्णकुपीतकात् काश्यपे** ॥ ३ । १ । ११३ ॥ वि-कर्णकुपीतकशब्दाभ्यां ढण् भवति काश्यपेपत्यविशेषे । वैकर्णेयः काश्यपश्चेद्वैकर्णिरन्यः । एवं कौपीतकेयः । कौपीतकिरन्यः ।

**भ्रुवो वुक्** ॥ ३ । १ । ११४ ॥ भ्रूशब्दादपत्ये ढण् वुगा-गमश्च । भ्रौवेयः ।

**कल्याण्यादीनामिनङ्** ॥ ३ । १ । ११५ ॥ ढण् भव-त्येषामिनङादेशश्च । कल्याण्या अपत्यं काल्याणिनेयः । सौभा-गिनेयः । बान्धकिनेयः ।

**कुलटाया वा** ॥ ३ । १ । ११६ ॥ इनङ् विभाष्यते । ढण् तु स्त्रीत्वादेव सिद्धः । कौलटिनेयः, कौलटेयः । अनियत-पुस्कत्वविवक्षायां परत्वात् क्षुद्राभ्य इति द्रूणि कौलटेरः ।

**चटकाण्णैरः** ॥ ३ । १ । ११७ ॥ लिङ्गविशिष्टत्वाच्चट-काया अपि । चटकस्य चटकाया वापत्यं चाटकैरः । स्त्रियामपत्ये उब् वक्तव्यः *। चटकस्य चटकाया वापत्यं स्त्री चटका । हृदुप्यु-बिति स्त्रीत्योपि पुनश्चाप् ।

गोधाया णारः ॥ ३ । १ । ११८ ॥ गौधारः ।

ढ्रण् ॥ ३ । १ । ११९ ॥ गोधाशब्दात् ढ्रण् च भवति । गौधेरः । शुभ्रादित्वात् ढण् च । गौधेयः । रणा सिद्धे णारविधानमन्येभ्योपि यथा स्यात् । पण्डस्यापत्यं पाण्डारः ।

क्षुद्राभ्यो वा ॥ ३ । १ । १२० ॥ अनियतपुंस्का अङ्गहीना वा क्षुद्राः। क्षुद्रावाचिमकृतिभ्यः स्त्रीलिङ्गाभ्यो वा ढ्रण् भवति । नट्याः, नाटेरो, नाटेयः । काणेरः, काणेयः । मध्येपवादत्वात् पूर्वस्य नदीमानुपीलक्षणस्याणो बाधकः ।

ऋस्वसुश्छण् ॥ ३ । १ । १२१ ॥ ऋकारान्तपूर्वान्तादस्माच्छण् भवति । अणोपवादः । मातृष्वस्रीयः । कृतपत्वग्रहणं किम् ? भ्रातृस्वस्रः । उरिति किम् ? मातुःष्वस्रः ।

ढणि खम् ॥ ३ । १ । १२२ ॥ ऋवर्णपूर्वस्य ष्वसुः खं भवति ढणि । अत एव ढण् निपात्यते । मातृष्वसेयः ।

चतुष्पाद्भ्यो ढञ् ॥ ३ । १ । १२३ ॥ चतुष्पाज्जातिवाचिभ्य' स्त्रीलिङ्गाभ्यो ढञ् भवति । अणादीनामपवादः ।

ढे खम् ॥ ४ । ४। १३३ ॥ उवर्णान्तस्य भस्य खं भवति ढे । कामण्डलेय' । स परत्वादियुवौ बाधते,

गृष्ट्यादे' ॥ ३ । १ । १२४ ॥ गृष्ट्यादिभ्यो ढञ् भवति । अणादीनामपवाद' । गार्ष्टेय' । चतुष्पाद्वचनोयं गृष्ट्यादिः । मित्रयुशब्दादप्यणं बाधित्वा ढञि,

केरुयमित्रयुमलयानां यादेरिय् ॥ ५ । २ । ७ ॥ एषां यादेरियादेशो भवति ढति ञ्णिति परतः । ढति इयादेशे प्राप्ते,

**ग्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयाहिरण्मयानि** ॥४।४।१६४॥ एते निपात्यन्ते । अतो युखम् । मैत्रेयः । बहुत्वे तु, त्यस्य खं वक्ष्यते । मित्रयवः ।

**क्षत्राद् घः** ॥ ३ । १ । १२५ ॥ अपत्ये । क्षत्रस्यापत्यं क्षत्रियः । जातावेव । अन्यत्र क्षात्रिः ।

**राजश्वशुराद्यः** ॥ ३ । १ । १२६ ॥ । इति ये, नोपुंस इति टिखे प्राप्ते,

**येऽङौ** ॥ ४ । ४ । १५७ ॥ अनः खं न भवति यादौ हृति, नतु ङौ । राजन्यः । श्वशुर्यः । अयमपि जातौ । अन्यत्राणि,

**अनः** ॥ ४ । ४ । १५६ ॥ अनः खं न भवत्याणि । राजनः ।

**कुलाड्ढकञ् च** ॥ ३ । १ । १२७ ॥ कुलशब्दादपत्ये ढकञ् भवति यश्च । कौलेयकः, कुल्यः । तदन्तादपि । बाहुकुलेयकः, बहुकुल्यः ।

**खः** ॥३।१।१२८॥ कुलशब्दात् खश्च भवति । कुलीनः ।

**सादेः** ॥ ३ । १ । १२९ ॥ आदिसहितात्कुलादपि खो भवति । आढ्यकुलीनः ।

**महतोऽञ्खञौ** ॥ ३ । १ । १३० ॥ महत्पूर्वात्कुलादञ्खञौ भवतः । माहाकुलः, माहाकुलीनः । केचित्खमपीच्छन्ति । महाकुलीनः । आत्वविषये एव । तेन महता कुलमित्यस्यापत्येऽर्थे, महत्कुलीन इत्येव ।

**दुसो ढण्** ॥ ३ । १ । १३१ ॥ दुःपूर्वात्कुलाद् ढण् भवति । दुष्कुलस्यापत्य दौष्कुलेय. । केचित् खमप्यनुवर्तयन्ति । दुष्कुलीनः ।

**स्वसुश्छः** ॥ ३ । १ । १३२ ॥ अणोपवादः । स्वस्रीयः ।

भ्रातुर्व्यश्च ॥ ३ । १ । १३३ ॥ चाच्छः । अणोपवादः। भ्रातुरपत्यं भ्रातृव्यो, भ्रात्रीयः । अस्य सपत्नरूपार्थस्तूपचारात् । एकद्रव्याभिलापश्चोपचारनिमित्तम् । सपत्नीव सपत्नः । पृषोदरादित्वाद्कारो निपातितः ।

रेवत्यादेष्ठण् ॥ ३ । १ । १३४ ॥ ठस्येकः ॥५।२।५२॥

वृद्धस्त्रियाः क्षेपे णश्च ॥ ३ । १ । १३५ ॥ वृद्धस्त्रीवाचकाच्छब्दादपत्ये णो भवति ठण् च क्षेपे गम्यमाने। गार्ग्या अपत्यं युवा गार्गो गार्गिको वा जाल्मः। एवं ग्लुचुकायिन्या अपत्यं ग्लौचुकायनो, ग्लौचुकायनिको वा जाल्मः। क्षेपोत्र प्रतिषिद्धाचरणत्वेन पितुरज्ञातत्वाद्वा गम्यते । स्त्रियाः किम् ? औपगविः । क्षेपे किम् ? गार्गेयः ।

दोष्ठण् सौवीरेषु प्रायः ॥ ३ । १ । १३६ ॥ सौवीरेषु यद्वृद्धवाचि तस्माद्युवापत्ये प्रायष्ठण् भवति क्षेपे। चेति सिद्धे प्रायोग्रहणं परिगणनार्थम् । भागवित्तिर्द्वितीयस्तार्णविन्दवः । तृतीय आकशापेयो वृद्धाट्ठण् बहुलं ततः । भागवित्तेरपत्यं युवा भागवित्तिकः, भागवित्तायनः । तार्णविन्दविकः, तार्णविन्दविः । अकशाप. शुभ्रादिषु । तत आकशापेयस्यापत्यमाकशापेयिकः । अकशापेपि ढुग्रहणं स्त्रीनिवृत्त्यर्थम् । क्षेपे एव। नेह, भागवित्तायनो माणवकः ।

फेश्छ च ॥ ३ । १ । १३७ ॥ फिञन्तात्सौवीरवृद्धादपत्ये छो भवति ठण् च क्षेपे । यामुन्दायनीयो, यामुन्दायनिकः । प्रायग्रहणादणपि । तस्य श्रिण्यराजार्पायून्युधणियोरित्युप् ।

यामुन्दायनिर्जाल्मः । सुयाम्नः सौयामायनिः । तस्य युवापत्यं सौयामायनीयः, सौयामायनिकः । अणि सौयामायनिः । वृषस्य वार्ष्यायणिः । तस्यापत्यं वार्ष्यायणीयः । वार्ष्यायणिकः । अणि वार्ष्यायणिः । क्षेपे एव । सौवीरेष्वेव । तैकायनेरपत्यं युवा, अणि तस्य चोपि तैकायनिर्जाल्मः । यमुन्दश्च सुयामा च वृषश्चापि फिञः स्मृताः । सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत् । १ ।

फाण्टाहृतेर्णः ॥ ३ । १ । १३८ ॥ क्षेपे इति निवृत्तम् । सौवीरेष्वस्माद्युवापत्ये णो भवति । ञिण्यराजार्षादित्यत्राणिञोरुण्यब्राह्मणगोत्रमात्राद्युवत्यस्योपसंख्यानमिस्तुम् मा भूदिति णिस्करणम् । फाण्टाहृतः । फिञप्यत्र भवतीति वक्तव्यम्*। फाण्टाहृतायनिः । सौवीरेष्वित्येव । फाण्टाहृतायनः । सौवीरेषु मिमतादपि णफिञौ वक्तव्यौ* । मैमतः, मैमतायनिः । सौवीरेषु किम्? नेह, मैमतिः ।

कुर्वादिर्ण्यः ॥ ३ । १ । १३९ ॥ सौवीरेष्विति निवृत्तम् । कुर्वादिभ्योऽपत्ये ण्यो भवति । कौरव्याः । सम्राजः क्षत्रिये (ग.)। साम्राज्यः । साम्राजोन्यः । ऐन्द्रजाल्यादिभ्यो यूनि (ग.)।

सेनान्तलक्षणकारिभ्य इञ्च ॥ ३ । १ । १४० ॥ कारिः कारुवाची । सेनान्ताल्लक्षणशब्दात् कारिवाचिभ्यश्चापत्ये इञ् भवति ण्यश्च । भैमसेन्यो, भैमसेनिः । लाक्षण्यः, लाक्षणिः । कारिभ्यः–कौम्भकार्यः कौम्भकारिः । तान्तुवाय्यः, तान्तुवायिः । तक्ष्णात्तु शिवादित्वादण् । स इञो बाधको न तु

ण्यस्य । तेन द्वैरूप्यम् । ताक्षणः, ताक्षण्यः । नापितात्तु वाऽवृद्धादिति परत्वात्फिञ् वक्ष्यतेऽग्रे । नापितायनिः, नापित्यः ।

तिकादेः फिञ् ॥ ३ । १ । १४१ ॥ तिकादिभ्योपत्ये फिञ् भवति । तिकस्यापत्यं तैकायनिः ।

कौशल्येभ्यः ॥ ३ । १ । १४२ ॥ फिञ् । बहुवचनेन कर्मारच्छागवृषा गृह्यन्ते । मूलप्रकृतिभ्य एव फिञ् । किन्तु विकृतनिर्देशाद्युट् निपात्यते । कोशलस्यापत्यं कौशल्यायनिः । कर्मारस्य कार्मार्यायणिः । छागायनिः । कर्मारशब्दात्कारित्वाण् ण्येपि ।

द्व्यचोऽणः ॥ ३ । १ । १४३ ॥ अण्णन्ताद् द्व्यचोपत्ये फिञ् भवति । इञोपवादः । कर्तुरपत्यं कार्त्रः । तस्यापत्यं कार्त्रायणिः । पौत्रायणिः । द्व्यचः किम् ? औपगविः । अणः किम् ? दाक्षिः ।

वाऽवृद्धाद्दोः ॥ ३ । १ । १४४ ॥ पौत्राद्यपत्यं वृद्धम् । अवृद्धं यद् तस्मादपत्ये वा फिञ् भवति । वायुरथायनिः, वायुरथिः । अवृद्धात्किम् ? आकम्पनायनः । दोः किम् ? आश्वग्रीविः ।

वाकिनादेः कुक् ॥ ३ । १ । १४५ ॥ वाकिनादिभ्योपत्ये वा फिञ् भवति, फिञ्पक्षे कुगागमश्च । वाकिनस्यापत्यं वाकिनकायनिः, वाकिनिः । यदिहावृद्धं दुसंज्ञं तस्य कुगर्थं वचनमन्यस्य तूभयार्थम् ।

पुत्रान्ताद्वा ॥ ३ । १ । १ । १४६ ॥ पुत्रान्ताद्दुसंज्ञकाद्वा कुग् भवति फिञि । फिञ् तु प्रागेव सिद्धः सोपि वेति

त्रैरूप्यम् । वासवदत्तापुत्रस्यापत्य वासवदत्तापुत्रकायणि । वासवदत्तापुत्रायणि । वासवदत्तापुत्रि ।

फिरदोः ॥ ३ । १ । १४७ ॥ अदोर्मृदोपत्ये वा फिर्भवति । त्रिपृष्ठायनि , त्रैपृष्ठि । व्यवस्थितविभाषाग्रहणान्नेवेह भवति । दाक्षि । अदो किम् ? रामदत्ति ।

मनोर्जातौ पुक्चाऽञ्यौ ॥ ३ । १ । १४८ ॥ मनुशब्दादञ्यौ त्यौ भवत पुगागमश्च, समुदायेन जातौ गम्यमानायाम् । मानुष , मनुष्य । व्युत्पत्तिमात्रमत्र क्रियते परमार्थतस्तु रूढौ । अत एव बहुष्वन्न भवति । मानुषा । जाता किम् ? अपत्यमात्रेऽण् । लोहितादिपाठात्पौत्रादौ यञ् च । मानव्य । माणवे तु माणवचरकात्खञिति निपातनादण् णत्व च सिद्धम् ।

द्रिः ॥ ३ । १ । १४९ ॥ यानित आ पादपरिसमाप्तेस्त्यान्वक्ष्यति ते द्रिसञ्ज्ञा स्यु ।

राष्ट्रशब्दाद्राज्ञोऽञ् ॥ ३ । १ । १५० ॥ क्षत्रियवाचिनो जनपदशब्दादपत्येऽञ् भवति । स्वभावत पञ्चालादिशब्दै राष्ट्र राजा चाभिधीयते । पञ्चालाना निवासो जनपद इत्यत्रो जनपदे डसित्युसि वा राजाभिधीयते । पञ्चालानामपत्य पाञ्चाल । एव पौरव । ऐक्ष्वाक । श्रोणहत्येति उख चात्र निपात्यते । राष्ट्रशब्दात् किम् ? श्रीविजयस्य श्रैविजयि । राज्ञ किम् ? पञ्चालनाम्नो ब्राह्मणस्यापत्य पाञ्चालि ।

द्रेर्बहुषु तेनैवास्त्रियाम् ॥ १ । ४ । १३३ ॥ पञ्चाला ।

साल्वेयगान्धारिभ्याम् ॥ ३ । १ । १५१ ॥ सल्वा नाम

क्षात्रियाः। ततो द्व्यच इति ढणि साल्वेयः। आभ्यां राजशब्दाभ्यामञ्। साल्वेयः। गान्धारः। बहुषूपि, गान्धारयः।

**द्व्यच्मगधकालिङ्गसूरमसादण् ॥ ३ । १ । १५२ ॥** एभ्यो राजवाचिभ्योऽण् भवति। अञोपवादः। आङ्गः। मागधः। कालिङ्गः। सौरमसः। अञि सति द्व्यचोऽण इति फिञ् न स्यात्। ननु सर्वस्येव युवत्यस्य, द्वेरुत्तरस्योबिष्यते, इति चेन्न, राजसमानशब्दाद्राष्ट्रात्तस्य राजन्यपत्यवदिति फिञा विशेषसिद्धेः। अङ्गानां राजा आङ्गः। तस्यापत्यमाङ्गायनिः। युवत्यस्याभावान्न फिञ उप्। अपि चाञि सति संघाद्यर्थविवक्षायामण् प्रसज्येत। आणि तु वृद्धचरणादिति वुन् भवति। आङ्गकः।

**द्विरकुरुनाद्यजादकोसलाञ्ञ्यः ॥ ३ । १ । १५३ ॥** एभ्यो ञ्यो भवत्यञोपवादः। दोः—आम्बष्ठस्य आम्बष्ठ्यः। द्व्यच्कलक्षणोप्येतेन परत्वाद्बाध्यते। दार्वस्य दार्व्यः। इकारान्तात्—कौन्त्यः। कुरोः—कौरव्यः। नादेः—निचकस्य नैचक्यः। अजादस्य आजाद्यः। कोसलस्य कौसल्यः।

**साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥३।१।१५४॥** सल्वा नाम क्षत्रियाः। तस्यापत्यं द्व्यच इति ढणि, साल्वेयः। तस्योसि कृते अण् निपातनात्। साल्वः क्षत्रियः। तस्य निवासो जनपदोपि साल्वः। उदुम्बरास्तिलखला मद्रकारा युगन्धराः। कलिङ्गा भुसारदण्डाः साल्वावयवसंचिताः॥ एभ्यो राजवाचिभ्यः, प्रत्यग्रथादिभ्यश्चेञ् भवति। अञोपवादः। औदुम्बरिः। तैलखलिः। प्रात्यग्रथिः। कालकूटिः। आश्मकिः। सर्वत्र बहुषूप्।

**पाण्डोर्ड्यण् ॥ ३ । १ । १५५ ॥** पाण्डोरपत्यं पाण्ड्यः।

अत्र णकारो ञ्णिद्धृद्रक्तविकारे पुंवद्भावप्रतिषेधार्थः । पाण्ड्या भार्या । इह येन जनपदेन समानशब्दो राजा तस्य स्वामी यदि विवक्षितस्तदायं विधिः । अन्यत्र तूत्सर्ग एव । तेन असिर्द्वितीयो न ससार पाण्डवमिति, पाण्डवा यस्य दासा इति च सिद्धम् । इह प्रकरणे राजसमानशब्दाद्राष्ट्रवाचस्य राजन्यपत्यवदिति वक्तव्यम् । पञ्चालानां राजा पाञ्चालः । एवं साल्वेयः । आङ्गः । आम्बष्ठ्यः । अस्मादपत्यविवक्षायां वाऽवृद्धाद्दोरिति फिञ् । पाञ्चालायनिः ।

उप् चोलादेः ॥ ३ । १ । १५६ ॥ चोलादेः परयोरणिञोरुब् भवति । चोलस्यापत्यं चोलः । एवं केरलः । शकः । यवनः । आदिशब्दोत्र प्रकारवाची । तेन राजन्यपि । चोलानां राजा चोलः ।

कुन्त्यवन्तिकुरुभ्यः स्त्रियाम् ॥ ३ । १ । १५७ ॥ एभ्यो द्रेर्ञ्यस्योब् भवति स्त्रियामभिधेयायाम् । कुन्ती । अवन्ती । कुरूः । स्त्रियां किम् ? कौन्त्यः ।

अतोऽप्राच्यभर्गादेः ॥ ३ । १ । १५८ ॥ प्राच्यान् भर्गादींश्च वर्जयित्वा अतस्त्यस्योब् भवति स्त्रियामभिधेयायाम् । साम र्थ्यादणञोरेवोप् । शूरसेनी । मद्री । कुन्त्यादिभ्य उब्वचनं तदन्तविधिरत्र नेति ज्ञापकम् । अप्राच्यभर्गादेरिति किम् ? प्राच्या ये राष्ट्राभिधानास्तेभ्य उप् प्रतिषिध्यते । पाञ्चाली । वैदेही । आङ्गी । यौध्री । भर्गादेरप्राच्यार्थ उप्प्रतिषेधः । भार्गी ।

इत्यपत्याधिकारः ॥

---

१ अपत्यार्थेषु उबादिविशेषावधिर्ह तं वक्ष्यते ।

## अथ हृति रक्ताद्यर्थकाः ।

**तेन रक्तं रागात्** ॥ ३ । २ । १ ॥ रज्यतेऽनेनेति रागः कुसुम्भादिद्रव्यम् । भासमर्थाद्रागविशेषवाचिनो मृदो रक्तमित्यस्मिन्नर्थे यथाविहितं त्यो भवति । कषायेण रक्त वस्त्र काषायम् । हारिद्रम् । रागात्किम् ? देवदत्तेन रक्त वस्त्रम् ।

**नीलपीतादकौ** ॥ ३ । २ । २ ॥ भान्ताभ्यामाभ्या रक्तमित्यर्थे यथासख्यमकौ भवतः । नीलेन नील्या वा रक्त नीलम् । पीतकम् ।

**लाक्षारोचनाशकलकर्दमाट्ठण्** ॥ ३ । २ । ३ ॥ अणोपवादष्ठण् । लाक्षिकम् । रोचनिकम् । शाकलिकम् । कार्दमिकम् । शकलकर्दमाभ्यामणपीष्यते । शाकलम् । कार्दमम् ।

**भाद्युक्तः कालः** ॥ ३ । २ । ४ ॥ भविशेषवाचिनो भा समर्थाद्युक्त इत्यस्मिन्नर्थे यथाविहित त्यो भवति, योसौ युक्त कालश्चेत्स. । पुष्येण युक्त पौषमह॰ । तिष्यपुष्ययोर्भाणीति यखम् । माघमह । माघी रात्रि । भात् किम् ? चन्द्रमसा युक्त काल । काल किम् ? पुष्येण युक्तश्चन्द्र ।

**उसऽभेदे** ॥ ३ । २ । ५ ॥ पूर्वेण विहितस्योस् भवति, चन्द्रेण युक्तस्य कालस्य रात्र्यादिविशेषो नाभिधीयेत चेत् । अद्य कृत्तिका । युक्तवदुसीति लिङ्गसख्ये पूर्ववत् । नेह, पौषी रात्रिः । प्रसज्यग्रहणादिहाप्युस् न भवति । पोष अहोरात्र । कथ तर्हि अद्य रात्रौ पुष्य इति ? पूर्वमष्टप्रहरात्मकस्य समुदायस्याभेदे उस विधाय पश्चाद्रात्रिशब्दप्रयोगे भेदासत्त्वात् ।

**खौ श्रवणाश्वत्थाभ्याम्** ॥ ३ । २ । ६ ॥ भेदेपि उस्-विधानार्थ आरम्भः । श्रवणा रात्रि. । अश्वत्थो मुहूर्तः । फाल्गुनीश्रवणेति वचनान्नेह, युक्तवदुसीति । खौ किम्? श्रावणी रात्रि'।

**द्वन्द्वाच्छः** ॥ ३ । २ । ७ ॥ भद्वन्द्वाद्भासमर्थाद्युक्त काल इत्यस्मिन्नर्थे छो भवति भेदेऽभेदे वा । अणोपवाद' । राधानुराधीयमद्य । राधानुराधीया रात्रिः ।

**परिवृतो रथः** ॥ ३ । २ । ८ ॥ तेन परिवृत इत्यस्मिन्नर्थे यथाविहित त्यो भवति रथश्चेत्तदर्थः । वस्त्रेण परिवृतो वास्त्रो रथ' । चार्मणः । अन इति टिखाभाव । रथ. किम्? वस्त्रेण परिवृता शय्या । समन्तादृत. परिवृत इत्यर्थाश्रयणात् छात्रैः परिवृतो रथः इत्यत्रापि न भवति । पाण्डुकम्बली रथ. इत्यत्र त्वनभिधानादण् न । किंतु मत्वर्थीय इन् । तीयान्तात्स्वार्थे वा ईकण् वक्तव्यः । द्वैतीयीक । तार्तीयीक. । तृतीयः । विद्याया अभिधाने नेष्यते । द्वितीया विद्या । न विद्यते पूर्वः पतिर्यस्याः सा अपूर्वा कुमारी । तामुपपन्न कौमार पतिरित्यत्र 'तत्र भव' इत्यनेनाण् कार्यः । प्रयोगात् ङीत्वे कौमारी ।

**तत्रोद्धृतममत्रेभ्यः** ॥ ३ । २ । ९ ॥ भुक्तावशिष्टमुद्धृतमिति केचित् । तन्न, उद्धरणपूर्वकनिधानेऽन्यत्रापि प्रयोगदर्शनात् । तत एव ईप् । अमत्रवाचिनो मृद उद्धृतमित्यर्थे यथाविहित त्यो भवति । शरावेपु उद्धृत शाराव ओदन ।

**स्थाण्डिलः** ॥ ३ । २ । १० ॥ स्थण्डिलशब्दाच्छयितर्यर्थेऽण् निपात्यते समुदायेन व्रते गम्ये । स्थाण्डिलो ब्रह्मचारी ।

**संस्कृतं भक्षाः** ॥ ३ । २ । ११ ॥ सतो गुणान्तराधानं संस्कारः । ईप्समर्थात् संस्कृतमित्यर्थे यथाविहितं त्यो भवति यत् संस्कृतं भक्षाश्चेत्तद्भवेत् । भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवाः । भक्षाः किम् ? फलके संस्कृतो मालागुणः ।

**शूलोखाद्यः** । ३ । २ । १२ ॥ ईप्समर्थाभ्यां शूलोखाभ्यां संस्कृतं भक्षा इत्यर्थे यो भवति । शूले संस्कृतं शूल्यम् । उख्यम् । पिठरशूल्यम् ।

**दध्नष्ठण्** ॥ ३ । २ । १३ ॥ दधिनि संस्कृतं दाधिकम् । दध्ना संस्कृतमित्यपि भवति ।

**वोदश्वितः** ॥ ३ । २ । १४ ॥ पक्षेऽण् । उदश्विति संस्कृत औदश्वितिकः, औदश्वितः । वक्ष्यमाणेन तेन संस्कृतम् इति सूत्रेणास्य विशेषो वावचनाद्गम्यते । अन्यथा भान्ताट्ठण ईवन्ताच्चाणोभयं सिद्धं भवेत् ।

**क्षीराड्ढण्** ॥ ३ । २ । १५ ॥ क्षीरशब्दादीप्समर्थात्संस्कृतमित्येतस्मिन्नर्थे ढण् भवति । क्षीरेण संस्कृता क्षैरेयी ।

**सास्मिन् पौर्णमासीति खौ** ॥ ३ । २ । १६ ॥ माघी पौर्णमासी अस्मिन् स माघो मासः । इतिकरणाद्यदि लोके संज्ञा गम्येत तदैवेति ज्ञेयम् । तेन माघी पौर्णमासी अस्मिन् पञ्चदशीगणने इत्यत्र न ।

**अश्वत्थाग्रहायणीभ्यां ठञ्** ॥ ३ । २ । १७ ॥ सास्मिन् पौर्णमासीत्यर्थे वासमर्थाभ्यामाभ्यां ठञ् भवति । अश्वत्था पौर्णमासी अस्मिन्निति आश्वत्थिको मासोऽर्द्धमासः संवत्सरो वा आग्रहायणी पौर्णमासी अस्मिन्निति आग्रहायणिको मासः ।

**फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यो वा ॥ ३ । २ । १८ ॥** पक्षे औत्सर्गिकोऽण् । फाल्गुनिकः; फाल्गुनः । श्रावणिकः, श्रावणः । कार्तिकिकः, कार्तिकः । चैत्रिकः, चैत्रः ।

**साऽस्य देवता ॥ ३ । २ । १९ ॥** वासमर्थादस्येति तार्थे यथाविहितं त्यो भवति । यद्यानिर्दिष्टं सा देवता चेत् । अर्हन् देवतास्य आर्हतः । भगवती देवताऽस्य भागवतः । एवं बार्हस्पत्यः । पाशुपतम् । सेत्यनुवर्तमाने पुनर्ग्रहणं संज्ञाविषयनिवृत्त्यर्थम् । तेन संज्ञाया नायं विधिः ।

**कस्येः ॥ ३ । २ । २० ॥** कस्येकारोन्तादेशो भवत्यण् च । को देवताऽस्य कायं हविः । आरम्भसामर्थ्यात्परत्वाद्वा यस्य ङ्यां चेति खं न । किन्तु आधैप् । एवं श्रीर्देवतास्य श्रायम् । अत्रापि परत्वान्न खम् ।

**शुक्राद् घः ॥ ३ । २ । २१ ॥** शुक्रो देवतास्य शुक्रियः ।

**अपोनप्त्रपान्नप्तृभ्याम् ॥ ३ । २ । २२ ॥** अपोनपतृ अपान्नपतृ त्यसंनियोगेनैष निपातो विधीयते घश्च । अपोनप्त्रियः । अपान्नप्त्रियः ।

**छः ॥ ३ । २ । २३ ॥** आभ्यां छश्च भवति । अपोनप्त्रीयः । अपान्नप्त्रीयः ।

**शतरुद्राद् घश्च ॥ ३ । २ । २४ ॥** चाच्छः । शतरुद्रियः; शतरुद्रीयः ।

**महेन्द्राद् घाऽणौ च ॥ ३ । २ । २५ ॥** चाच्छः । महेन्द्रियः, माहेन्द्रः, महेन्द्रीयः ।

**सोमाट्ट्यण्** ॥ ३ । २ । २६ ॥ सोमो देवतास्य सौम्यः । स्त्रिया सौमी । टित्वान्डी । हलो ह्रतो ञ्यामिति यखम् ।

**वाय्वृतुपित्रुषसो यः** ॥ ३ । २ । २७ ॥ वायुर्देवतास्य वायव्य' । ऋतव्यः ।

**रीङ्ऋतः** ॥ ५ । २ । १३६ ॥ ऋकारान्तस्य गोः च्व्याव-कृद्यकारे, अगयकारे च परतो रीङादेशो भवति । यस्येति च । पित्र्यः । उषस्यः ।

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च** ॥ ३ । २ । २८ ॥ चाद्य' । द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयः। द्यावापृथिव्य' । शुनो वायुः । शीर आदित्यः । देवताद्वन्द्वे इत्यानङि शुनासीरीयः, शुनासीर्यः । मरुत्वतीयो, मरुत्वत्यः । अग्नीषोमीय , अग्नीषोम्यः । अत्र देवतार्थद्वन्द्वे सोमवरुणेऽग्नेरी इतीत्वम् । स्तुत्सोमो चाग्नेरिति षत्वम् । वास्तोष्पतीय , वास्तोष्पत्यः । ताया अनुप् षत्व च निपातनात् । गृहमेधीयः, गृहमेध्य' ।

**सर्वत्राग्निकलिभ्यां ढण्** ॥ ३ । २ । २९ ॥ आभ्यां ढणेव सर्वेष्वर्थेषु प्राग्घोः । अग्निर्देवताऽस्य, तत्र भव', तत आगत इत्याद्यर्थे आग्नेय । एव कालेयः ।

**कालेभ्यो भववत्** ॥ ३ । २ । ३० ॥ वत्करणं सर्वविशेषसंग्रहार्थम् । येभ्य कालविशेषवाचिभ्यो मृद्धचस्तत्र भव इत्यर्थे ये त्या विहितास्तेभ्यस्ते त्याः सास्य देवतेत्यर्थेपि भवन्ति । यथा मासे भव मासिकम् । एवमिहापि सावत्सरिकम् । एव प्रावृषेण्यम् ।

महाराजप्रोष्ठपदाभ्यां ठण् ॥ ३ । २ । ३१ ॥ माहाराजिक । प्रोष्ठपादिक । ठण्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् । नावयज्ञिक । पाकयज्ञिक । पूर्णमासादण् वक्तव्य । पूर्णो मासोऽस्यां वर्तत इति पौर्णमासी तिथि ।

देवताद्वन्द्वे ॥ ५ । २ । २६ ॥ देवताद्वन्द्वे द्वयो पदयोरचामादेरच ऐन् भवति । आग्निमारुतम् ।

नेन्द्रस्य ॥५। २ । २७ ॥ घोरिति वर्तते। इन्द्रस्य घोरैच् न भवति । आग्नेन्द्र । घोरिति किम् ? ऐन्द्राग्न ।

घो वरुणस्य ॥ ५ । २ । २८ ॥ घन्तात् परस्य वरुणशब्दस्यैन्न भवति । ऐन्द्रावरुण । मैत्रावरुण । घ इति किम् ? आग्निवारुण ।

पितृव्यमातुलमातामहपितामहाः ॥ ३ । २ । ३२ ॥ पितृव्यादय शब्दा निपात्यन्ते । पितृमातृभ्यां भ्रातरि वाच्ये व्यड्डुलौ निपात्येते । पितुर्भ्राता पितृव्य । मातुर्भ्राता मातुल । ताभ्यामेव पितरि डामह । मातु पिता मातामह । पितु पिता पितामह । मातरि टिच । मातामही । पितामही ।

तस्य समूहः ॥ ३ । २ । ३३ ॥ तस्येति तासमर्थात्समूह इत्यर्थेऽण् भवति । काकाना समूह काकम् । शौकम् । बाकम् ।

भिक्षादेः ॥ ३ । २ । ३४ ॥ ठणो बाधनार्थं वचनम् । भिक्षाणा समूहो भैक्षम् ।

प्रायोऽनपत्येऽणीनः ॥ ४ । ४ । १५३ ॥ अनपत्या-

थेऽणि परे इन्नन्तस्य खं न भवति । इति टिखं न । गर्भिणीनां समूहो गार्भिणम् । युवतीनां समूहो यौवतम् । प्रायोग्रहणात् क्वचित् प्रतिषेधो न भवति । दण्डिनां समूहो दाण्डम् । छात्रम् ।

वृद्धोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥ ३ । २ । ३५ ॥ युवोरनाकौ ॥ ५ । १ । १ ॥ गिनिमित्तभूतयोर्युवुत्ययोर्यथासङ्ख्यमन अक इत्येतावादेशौ भवतः । औपगवानां समूह औपगवकम् । औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् । प्रकृत्या अके राजन्यमनुष्ययुवान इति क्यच्यनात्त्या-पत्यस्येति खं न भवति । इह वृद्धग्रहणात्सिद्धे राजन्यशब्दस्य पृथग्ग्रहणं ज्ञापकम् अपत्याधिकारादन्यत्र वृद्धग्रहणेन लौकिकं गोत्रमपत्यमात्रं गृह्यत इति ।

केदाराद्यञ् च ॥ ३ । २ । ३६ ॥ वुञ् च । कैदार्यं कैदारकम् । गणिकाया यञ् वक्तव्यः । गणिकानां समूहो गाणिक्यम् ।

ठञ् कवचिनश्च ॥ ३ । २ । ३७ ॥ चकारात्केदारात् । कावचिकम् । कैदारिकम् ।

ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ३ । २ । ३८ ॥ ग्रामादिभ्यस्तल् भवति समूहे । ग्रामाणां समूहो ग्रामता । जनता । बन्धुता । सहायता । गजाच्चेति वक्तव्यम् । गजता ।

चरणेभ्यो धर्मवत् ॥ ३ । २ । ३९ ॥ चरणाद्धर्माम्नाययोरिति वक्ष्यते । तेन विहितास्त्याः समूहेऽपि भवन्ति । काठकम् । कालापकम् । छान्दोग्यम् । वत्करणं सर्वविशेषपरिग्रहार्थम् ।

अचित्तहस्तिधेनोष्ठण् ॥ ३ । २ । ४० ॥ अपूपानां समूह आपूपिकम् । हास्तिकम् । धैनुकम् । पर्श्वा णस् वक्तव्यः । सिति ॥ १ । २ । १०३ ॥ सिति परे पूर्वं पदसंज्ञं भवति । इति भलक्षणमोरोत्वं न । पर्शूनां समूहः पार्श्वम् । खण्डिकादिभ्योञ् न वक्तव्यः । तेषु चित्तवद्भ्य औत्सर्गिकाणाऽन्येभ्यस्तु भिक्षादिषु पाठाच्च सिद्धेः । खण्डिकानां समूहः खाण्डिकम् ।

केशाश्वाभ्यां यञ्छौ वा ॥ ३ । २ । ४१ ॥ यथासंख्यं भवतः । केशानां समूहः कैश्यं कैशिकम् । आश्वीयमाश्वम् ।

पाशादेर्यः ॥ ३ । २ । ४२ ॥ पाशानां समूहः पाश्या । तृण्या । धूम्या । लिङ्गं लोकात् ।

ब्राह्मणमाणववाडवात् ॥ ३ । २ । ४३ ॥ यः । ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ।

गोखलरथात् ॥ ३ । २ । ४४ ॥ यः । गवां समूहो गव्या । खल्या । रथ्या ।

त्रेन्कट्याः ॥ ३ । २ । ४५ ॥ गो खल रथ इत्येतेभ्यो यथासंख्यं त्र–इन्–कट्य–एते त्या भवन्ति । गोत्रा । खलिनी । रथकट्या । खलादिभ्य इन्वक्तव्य । डाकिनी । आकृतिगणोयम् ।

राष्ट्रे ॥ ३ । २ । ४६ ॥ समूहे इत्यधिकारो निवर्तते । राष्ट्रे इत्यधिक्रियते । तस्येति वर्तते । राष्ट्रं जनपदः । तासमर्थाद्राष्ट्रेर्थेऽण् भवति । शिवीना राष्ट्रं शैवं, शैवः ।

राजन्यादेर्वुञ् ॥ ३ । २ । ४७ ॥ राष्ट्रे । राजन्यकम् ।

भौरिक्यैषुकार्यादिभ्यां विधभक्तौ ॥ ३ । २ ।४८ ॥

भौरिक्यादेर्विध ऐपुकार्यादेर्भक्तश्च त्यो भवति राष्ट्रे। भौरिकीणा राष्ट्र भौरिकिविधम्। ऐपुकारिभक्तम्।

तदस्मिन्युद्धे योद्धृप्रयोजनात् ॥ ३।२।४९॥ तदिति वासमर्थादस्मिन्निति ईबर्थेऽणादयो भवन्ति युद्धेर्थे। विद्याधरा योद्धारोऽस्मिन्युद्धे वैद्याधर युद्धम्। एव भारतम्। सुलोचना प्रयोजनमऽस्मिन्युद्धे सौलोचनम्। एव स्वायप्रभम्। युद्धे किम्? नेह, सुभद्रा प्रयोजनमस्मिन्वैरे।

प्रहरणमिति क्रीडायां णः ॥ ३।२।५०॥ पादा प्रहरणमस्यामिति पादा क्रीडा। प्रहरण किम्? गन्धोदकसेचनमस्यामित्येव। क्रीडाया किम्? असि प्रहरणमस्मिन्युद्धे इत्येव। इतिकरणाच्चतश्चेद्विवक्षा।

श्यैनंपातातैलंपाता ॥ ३।२।५१॥ एतौ निपात्येते। श्येनानामिव पातो यस्या क्रियाया सा श्यैनपाता। एव तैलंपाता। अत्र णस्त्यो मुमागमश्च पूर्वस्य निपात्यते।

तद्वेत्त्यधीते ॥ ३।२।५२॥ तदिति इप्समर्थाद् वेत्त्यधीते इत्येतयोरर्थयोरणादयो भवन्ति। मूहूर्तं वेत्ति मौहूर्त। गाणित। वैयाकरण।

क्रतूक्थादिसूत्रान्ताट्ठण् ॥ ३।२।५३॥ सयूपा यज्ञा क्रतव। क्रतुविशेषवाचिभ्यो मृद्भ्य, उक्थादिभ्य, सूत्रान्ताच्च ठण् भवति। अग्निष्टोम वेत्ति अधीत वा आग्निष्टोमिक। औक्थिक। याज्ञिक। लोकायतमधीते लौकायतिक। सांग्रहसूत्रिक। सूत्रान्तादकल्पादेरिष्यते। काल्पसूत्रः। विद्यालक्ष

णकल्पान्तादिति व० । नायसविद्यिक । हास्तिलक्षणिक. । पैतृकल्पिकः । अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तात् । आङ्गविद्य । **आख्यानाख्यायिकेतिहासपुराणेभ्यश्च** । यवक्रीतस्याख्यानमुपचाराद्यवक्रीतम् । तदधीते वेत्ति वा यावक्रीतिक । ऐतिहासिकः । पौराणिकः । **सर्वसादे रसाच्चोर् व०** । सर्वतन्त्रानधीते सर्वतन्त्र. । सवार्तिक. । त्रिलक्षण । **पदोत्तरपदादिकः** । पूर्वपदिक. । **शतषष्टिभ्यां पथष्टिकः** । शतपथिकः । षष्टिपथिकी । **अनुसुलक्ष्यलक्षणेभ्यश्च ठण्** । आनुसुक. । लाक्षिक. । लाक्षणिकः । इतिकरणानुवृत्तेरय विभागो लभ्यते ।

**क्रमादेर्वुन्** ॥ २ । २ । ५४ ॥ तद्वेत्त्यधीते इत्येव । क्रमकः । **अनुब्राह्मणादिन् व०** । ब्राह्मणसदृशो ग्रन्थोनुब्राह्मणः । तमधीतेऽनुब्राह्मणी । मत्वर्थीयेन सिद्धेऽण्बाधनार्थमिदम् ।

**उप् प्रोक्तात्** ॥ ३ । २ । ५५ ॥ प्रोक्तार्थकत्यात्परस्याध्येतृवेदितृत्यस्योब्भवति । पणोस्यास्तीति पणी । तस्य वृद्धापत्येऽणि टिख प्राप्त—

**गाथिविदथिकेशिपणिगणिस्फादे** ॥ ४ । ४ । १५५ ॥ गाथिन् इत्यादीनां स्फादेश्चेनो यदुक्त तन्न भवति । इति निषिध्यते । तेन पाणिन. । ततो युवार्थे इञि पाणिनि ।

**ञिण्यराजार्षाद्यून्युबञणिञोः** ॥ १ । ४ । १३० ॥ ञिदन्तात्ण्यान्ताद्राजार्षेयवाचिवृद्धप्रत्ययान्ताद्व्यणन्ताच्च परयोर णिञोर्यून्युब्भवति । ञित:, तैकायनि पिता पुत्रश्च । ण्य , कौरव्यः पिता पुत्रश्च । राज , श्वाफल्क पिता पुत्रश्च । आर्षात्, वा-

सिष्ठः पिता पुत्रश्च । जिण्येत्यादि किम् ? शिवाद्यणि कौहडः पिता । ततो यूनि कौहडिः पुत्रः । यूनि किम् ? वामरथ्यस्य छात्रा वामरथाः ।

सूत्रात्कोऽकः ॥ ३ । २ । ५६ ॥ सूत्रवाचिनः ककारोडोऽध्येतृवेदित्रोरर्थयोरुत्पन्नस्य त्यस्योब्भवति । अप्रोक्तार्थमिदम् । पञ्च अध्यायाः परिमाणं यस्य तत्पञ्चकं सूत्रम् । तद्वेत्त्यधीते वा पञ्चको जैनेन्द्रः ।

छन्दोब्राह्मणानि चात्रैव ॥ ३ । २ । ५७ ॥ छन्दोब्राह्मणवाचीनि प्रोक्तत्यान्तानि अध्येतृवेदितृत्यं विना न प्रयोक्तव्यानीत्यर्थः । उभयावधारणमेवकारेण । कठेन प्रोक्तं छन्दोऽधीयते इति कठाः । शौनकादिषु वैशम्पायनान्तेवासिभ्यो णिन् । तस्य कठचरकादित्युप् । ततः परस्याण उप्प्रोक्तादित्युप् । छन्दोग्रहणेन सिद्धे पृथग् ब्राह्मणग्रहणं पुराणप्रोक्तत्वविशिष्टब्राह्मणपरिग्रहार्थम् । तेनेह न । याज्ञवल्क्येन प्रोक्तानि याज्ञवल्कानि । शकलादिभ्यो वृद्धे इत्यण् । यत्नम् । चकारो ब्राह्मणसदृशस्यापि संग्रहार्थः । काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः । इति रक्ताद्यर्थकाः ।

## अथ चातुरर्थिकाः ।

तदस्मिन्नस्तीति देशः खौ । ३ । २ । ५८ ॥ वासमर्थादोऽर्थे यथाविहितं त्यो भवति । यद्बानिर्दिष्टं तद्देशश्चेत् समुदायेन खुविषये । पार्वतः । इतिकरणान्मूमादिविषये एव । मत्वर्थीयोऽनेन बाध्यते ।

तेन निर्वृत्तः ॥ ३ । २ । ५९ ॥ देशः स्वावित्यनुवर्तते। कुशाम्बेन निर्वृत्ता कौशाम्बी।

तस्य निवासादूरभवौ ॥ ३ । २ । ६० ॥ देशनाम्नि स्वविषये एव। शलाकाया निवासः शालाकम्। वाराणसाया अदूरभवा वाराणसी। विदिशाया अदूरभवं वैदिशम्।

वुञ्छण्कठेलसेन्नढण्ण्ययफण्फिञिञ्कण्ठणोऽरीहण कृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमवराहकुमुदादिभ्यः ॥ ३ । २ । ६१ ॥ वुञादयः षोडश स्युः यथासंख्यमरीहणादिभ्यः षोडशगणेभ्यो भवन्ति यथासंभवं प्रागुक्तेषु चतुर्ष्वर्थेषु। (१) अरीहणादेर्वुञ्। आरीहणेन निर्वृत्तमारीहणकम्। (२) कृशाश्वादेश्छण्। कार्शाश्वीयम्। (३) ऋश्यादेः कः। ऋश्यकम्। (४) कुमुदादेष्ठः। कुमुदानि यस्मिन्देशे सन्ति स कुमुदिकः। (५) काशादेरिलः। काशा यस्मिन्देशे सन्ति स काशिलः। (६) तृणादेः सः। तृणसः। (७) प्रेक्षादेरिन्। प्रेक्षी। (८) अश्मादे रः। अश्मरम्। (९) सख्यादेर्ढण्। साखेयम्। (१०) संकाशादेर्ण्यः। साङ्काश्यम्। (११) बलादेर्यः। बल्यम्। (१२) पक्षादेः फण्। पाक्षायणः। (१३) कर्णादेः फिञ्। कार्णायनिः। (१४) सुतङ्गमादेरिञ्। सौतङ्गमिः। (१५) वराहादेः कण्। वाराहकम्। (१६) कुमुदादेष्ठण्। कौमुदिकः। कुमुदशब्दश्चतुर्थगणेपि पठितः। तथाप्यादिशब्देन बहवोन्ये शब्दा गृह्यन्ते तत्रैकमेव रूपं स्यात्।

जनपदे उस् ॥ ३ । २ । ६२ ॥ जनपदे देशविशेषेभि-

धेये चतुर्थेपूक्तस्य त्यस्योस् भवति । पञ्चालानां निवासो जन-पदः पञ्चालाः । कुतोत्र बहुत्वम् ?—

युक्तवदुसि लिङ्गसंख्ये ॥ १ । १ । ९८ ॥ युक्तः= प्रकृत्यर्थः, प्रत्ययार्थेन संबन्धात् । उसि सति प्रकृत्यर्थे इव लिङ्ग-संख्ये भवतः । इत्यपत्ययबहुत्वार्थस्येह प्रकृत्यर्थेवाद्बहुत्वम् । प्रकृत्यर्थे लिङ्गमपि पुमान् । अतोत्रोसि कृते पुंस्त्वमपि । यत्र हि उसन्ते-न देशस्य सञ्ज्ञा तत्रैवोस् । नेह, औदुम्बरो देशः । अर्थातिदेशत्वा-द्विशेषणानामपि लिङ्गसंख्ये तद्वदेव । अङ्गा रमणीयाः । अजा-तेरिति वक्तव्यं, न वक्तव्यं, संज्ञाप्रामाण्यात् । पञ्चाला जनपदो रमणीयः । पञ्चालादीनां त्वन्वाख्यानप्रवर्त्तनार्थमुस् लिङ्गसंख्या-तिदेशश्च । वेति व्यवस्थितविभाषानुवृत्तेर्मनुष्यार्थे उसि विशेष-णानां नायमतिदेशः । वल्हिका दर्शनीयः । खलतिकादौ संख्यै-वातिदिश्यते । खलतिकं वनानि । हरीतक्यादौ लिङ्गमेव । हरीतक्य फलानि ।

वरणादेः ॥ ३ । २ । ६३ ॥ त्यस्योस् । अजनपदार्थ-मिदम् । वरणानामदूरभवं वरणा नगरम् ।

शर्कराया वा ॥ ३ । २ । ६४ ॥ चतुर्थेषु विहितस्य त्यस्योस् । कुमुदादौ वराहादौ च पाठात्पक्षे ठकणौ च श्रूयेते । उत्सर्गस्य विकल्पोयमित्यणपि पक्षे । शर्करा ग्रामः । शार्करिकः, शार्करकः, शार्करो वा ।

ठण्छौ ॥ ३ । २ । ६५ ॥ शार्करिकः शर्करीयो वा ।

नद्यां मतुः ॥ ३ । २ । ६६ ॥ मृदश्चातुरर्थिको मतुर्भवति

नद्यर्थे सति । उदुम्बरावती । वेत्यनुवृत्तेर्जोन्हव्यादयोपि समाधीयन्ते ।

मध्वादेः ॥ ३ । २ । ६७ ॥ मतु । अनद्यर्थमिदम् । मधुमान् ।

कुमुदनडवेतसाड्डित् ॥ ३ । २ । ६८ ॥ महिषाच्च ।

ममोङ्क्षयो मतोर्वोऽयवादेः ॥ ५ । ३ । ३१ ॥ मान्तादवर्णान्तान्मोङोऽवर्णोङो झयन्ताच्च परस्य मतोर्मस्य वादेशो भवति । झयन्तत्वात्, कुमुद्वान् । नड्वान् । अवर्णङित्वात्, वेतस्वान् । महिष्मान् । यवादेस्तु न ।

शिखाया वलः ॥ ३ । २ । ६९ ॥ चातुरथिक एव । शिखावल ।

नडशादाड्ड्वित् ॥ ३ । २ । ७० ॥ नड्वल । शाद्वल ।

उत्करादेश्छः ॥ ३ । २ । ७१ ॥ यथासंभव चतुर्ष्वेवार्थेषु । उत्करेण निर्वृत्तमुत्करीयम् ।

नडादेः कुक् ॥ ३ । २ । ७२ ॥ छो भवति कुगागमश्च प्रकृते । नडकीय । क्रुञ्च प्रादेशश्च ( ग )। क्रुञ्चकीय । तक्ष न्नख च ( ग० )। तक्षकीय ।

बिल्वकादेश्छस्य ॥ ४ । ४ । १४१ ॥ ख भवति हृति परे । नडादौ बिल्वादय पठिता । त एव कृतकुगागमा अत्र गृह्यन्ते । उत्करादित्वाच्छ । बिल्वकीया । ततो भवार्थेऽणि बैल्वका । कुकि छ एव संभवति । किमर्थं तर्हि छग्रहणम् ? कुको निवृत्ति सन्नियोगशिष्टत्वान्मा भूदिति । इति चातुरर्थिका ।

शेषे ॥ ३ । २ । ७३ ॥ अपत्यादिचतुर्थ्यन्ता येर्थास्ते-भ्योऽन्यः शेषः । तत्र यथासम्भवं त्यो भवति । चतुर्भिरुह्यते चातुरं शकटम् । श्रवणेन गृह्यते श्रावणः शब्दः । उलूखलेन क्षुण्ण औलूखलो यावकः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । शेषे इति लक्षणमधिकारश्च । तेन वक्ष्यमाणास्त्या अपि जातादिषु शेषभूतेष्वर्थेष्वेव वेदितव्याः।

राष्ट्रावारपाराद् घखौ ॥ ३ । २ । ७४ ॥ आभ्यां क्रमाद् घखौ भवतः शेषे । राष्ट्रे जातो राष्ट्रियः । अवारपारीणः । विगृहीताद्विपरीताच्चापीष्यते । अवारीणः । पारीणः । पारावारीणः । अत्र प्रकृतिविशेषमुद्दिश्य प्रत्ययविशेषो विधीयते । अर्थविशेषाः समर्थविभक्तयश्च स्वग्रे वक्ष्यन्ते ।

ग्रामाद्यखञौ ॥ ३ । २ । ७५ ॥ ग्राम्यः । ग्रामीणः । निष्करणात् ञिकृद्रक्तविकारे इति पुंवद्भावप्रतिषेधो वक्ष्यते । तेन ग्रामीणाभार्यः ।

कत्र्यादेर्ढकञ् ॥ ३ । २ । ७६ ॥ कुत्सितास्त्रयो यस्य यस्या वा असौ कत्रिः । तत्र जातादिः कात्त्रेयकः । कुट्या कुल्या इत्यनयोर्यत्वं च (ग.) । कौटेयकः । कौलेयकः । कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु वक्तव्यः । कौलेयकः श्वा चेत् । कौलोऽन्यः । कौक्षेयकोऽसिश्चेत् । कौक्षोऽन्यः । ग्रैवेयकोऽलङ्कारश्चेत् । ग्रैवोऽन्यः ।

नद्यादेर्ढण् ॥ ३ । २ । ७७ ॥ नादेयम् । माहेयम् ।

दक्षिणापश्चात्पुरसस्त्यण् ॥ ३ । २ । ७८ ॥ दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

ट्फण् कापिश्याः ॥ ३ । २ । ७९ ॥ कापिशायनम् । वाल्हादिभ्यश्चेति व० । वाल्हायनी । आदायनी ।

रङ्कोः ॥ ३ । २ । ८० ॥ ट्फण् । रङ्कुषु जातो राङ्कवायणो गौः । प्राणिनीति व० । नेह राङ्कवः कम्बलः । कच्छादिषु पाठादणपि । राङ्कवो गौः । मनुष्याभिधाने तु परत्वान्नृतरस्थयोरिति बुञि राङ्कवको मनुष्यः ।

द्युमागपागुदक्प्रतीचो यः ॥ ३ । २ । ८१ ॥ दिव्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् । यदा प्राच्यादयो क्षिसंज्ञकास्तदा तु तनड् वक्ष्यते ।

क्षेस्तुट् ॥ ३ । २ । ८२ ॥ क्षिसंज्ञकाद्यो भवति तुडागमश्च शेषे । अमेहकतसित्रेभ्य इति परिगणनम् । अमात्यः । इहत्यः । कत्यः । ततस्त्यः । तत्रत्यः । परिगणनं किम् ? परतो जातः पारतः । झेर्भमात्रे टिलम् । इति टेः खम् । वोश्छण् च । आरातीयः । नेर्ध्रुवे इति व० । नित्यम् । निसो गते इति वक्तव्यम् । निर्गतो वर्णाश्रमेभ्य इति निस्त्यः ।

वैषमोह्यस्श्वसः ॥ ३ । २ । ८३ ॥ ऐषमस् ह्यस् श्वस् इत्येतेभ्यो वा यो भवति । यपक्षे तुट् च । पक्षे तनड् वक्ष्यते । ऐषमस्त्यः । ऐषमस्तनः । ह्यस्त्यः । ह्यस्तन । श्वस्त्यः । श्वस्तनः ।

रूप्ययोर्णः ॥ ३ । २ । ८४ ॥ वार्करूप्यः । दुसंज्ञायां तु परत्वाद्बुञ् । माणिरूप्ये जातो माणिरूप्यकः ।

दिगादेरखौ ॥ ३ । २ । ८५ ॥ अखौ वर्तमानाद्दिग्विशेषादेर्मृदः शेषे णो भवति । पूर्वस्या शालायां भवः पौर्वशालः ।

हृदर्थे पसः । एवं दाक्षिणशालः । अखौ किम् ? पूर्वेषुकामशम्यां जातः पूर्वेषुकामशमः । अत्र प्राचां ग्रामाणामिति धोरेप् ।

**मद्रेभ्योऽण् ॥ ३ । २ । ८६ ॥** दिगादेर्मद्रशब्दादण् भवति शेषे । बहुत्वेऽदोरपीति वुञि प्राप्ते तमपवाद्य वृजिमद्रात्क इति के प्राप्तेऽनेनाण् । पौर्वमद्रः । अत्र दिशोऽमद्राणामिति पर्युदासादादेरेप् । दिगादेरेव । मद्रकः ।

**पलद्यादेः ॥ ३ । २ । ८७ ॥** अण् । पलद्यां जातः पालदः । पारिषदः । यकृल्लोम्नो नखं च ( ग ) । याकृल्लोमः ।

**शकलादिभ्यो वृद्धे ॥ ३ । २ । ८८ ॥** वृद्धत्यान्तेभ्यः शकलादिभ्योऽण् भवति शेषे । शाकल्यस्य छात्राः शाकलाः । वृद्धे किम् ? शकलो देवतास्य शाकलः । तस्येदं शाकलीयम् ।

**इञः ॥ ३ । २ । ८९ ॥** वृद्धे यो विहित इञ् तदन्तादण् भवति शेषे । दाक्षेरिदं दाक्षम् ।

**न द्व्यचः प्राच्यभरतेषु ॥ ३ । २ । ९० ॥** वृद्धादिञन्तात्प्राच्यभरतवाचिनो द्व्यचो मृदोऽण् न भवति । प्राच्येषु, पैपीयाः । भरतेषु, काशीयाः । पूर्वस्यैव प्रतिषेधोऽयम् । द्व्यचः किम् ? पान्नागारेश्छात्राः पान्नागाराः । प्राच्यान्तर्हितानामपि भरतानां पृथगुपादानम् अन्यत्र प्राच्यग्रहणेन भरतग्रहणं मा भूदिति ज्ञापनार्थम् ।

**अस्त्वाद्येरप्दुः ॥ १ । १ । ६८ ॥** अक्षु मध्ये आदिभूतोऽन् ऐप् यस्य समुदायस्य स दुसंज्ञो भवति ।

**दोश्छः ॥ ३ । २ । ९१ ॥** दुसंज्ञकान्मृदश्छो भवति

शेषे । सौतारीयम् । मालीयम् । उदीच्यग्रामात्मस्थयोर्दोरण् वक्तव्यः । माधीमस्थम् ।

त्यदादिः ॥ १ । १ । ६९ ॥ त्यदादीनि शब्दरूपाणि दुसंज्ञानि भवन्ति । त्यदीयः । तदीयः ।

एङ् प्राग्देशे ॥ १ । १ । ७० ॥ एङ् यस्याचामादिस्त-द्दुसंज्ञं भवति प्राचां देशाभिधाने । एणीपचने जातः एणीपचनीयः । गोनर्दीयः । एङ् किम्? आहिच्छत्रः । प्रागिति किम्? देव-दत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्तः । देशे किम्? गोमती नाम नदी तत्र भवो गौमतः । 'वा नाम्न' इति यदा दुसंज्ञा नास्ति तत्र पक्षे प्रत्युदाहरणम् ।

वा नाम्नः ॥ १ । १ । ७१ ॥ पुरुषैर्व्यवहाराय सङ्केति-तस्य नामधेयस्य दुसंज्ञा वा भवति । पद्मनन्दीयं, पाद्मनान्दिनम् । नाम्नः किम्? देवैर्दत्त इति क्रियानिमित्तकात्, किन्तु तस्य का-श्यादिषु पाठाट्ठञ्ञिठावेव ।

भवतष्ठण्छसौ ॥ ३ । २ । ९२ ॥ दोर्भवतष्ठण्छसौ भवतः शेषे । भावत्कम् । भवदीयम् । मृद्ग्रहणे लिङ्गविशिष्टस्या-पीति भवतीशब्दादपि स्ये कृते पुंवद्भावे तदेव रूपम् । शत्रन्त-स्य तु त्यदादित्वाभावेन दुसंज्ञाऽभावेऽणेव । भावतम् ।

काश्यादेष्ठञ्ञिठौ ॥ ३ । २ । ९३ ॥ इकार उच्चा-रणार्थः । काशयो जनपदस्तत्र जाता काशिकी, काशिका । वैदिका । आपदादिपूर्वपदात्कालान्तात्ठञ्ञिठौ व० । आप-त्कालिका । आपत् । ऊर्ध्व । कूप । अनुपूर्व । इत्यापदादि ।

**वाहीकग्रामेभ्यः** ॥ ३ । २ । ९४ ॥ वाहीकग्रामेभ्यष्ठञ्ञिठौ भवतः शेषे । साकलिकी, साकलिका ।

**वोशीनरेषु** ॥ ३ । २ । ९५ ॥ उशीनरेषु ये ग्रामा दुसंज्ञकास्तेभ्यष्ठञ्ञिठौ वा भवतः । सौदर्शनिकी, सौदर्शनिका ।

**ओर्देशे ठञ्** ॥ ३ । २ । ९६ ॥ उवर्णान्ताद्देशवाचिनो दोरदोश्च ठञ् भवति शेषे । निषादकर्ष्वां जातो नैषादकर्षुकः । छस्य परत्वादयं बाधकः । दाक्षिकर्षुकः । दोष्ठञ्ञिठयोरपि बाधकोयम् ।

**दोः प्राचाम्** ॥ ३ । २ । ९७ ॥ उवर्णान्तात्प्राग्देशवाचिनो दोष्ठञ् भवति शेषे । दोरदोश्च पूर्वेण सिद्धे दोरेव प्राचामिति नियमार्थमिदम् । आढकजम्बुकः । दोः किम् ? माल्लवास्तवः ।

**कन्थायाः** ॥ ३ । २ । ९८ ॥ ठञ् । कन्था प्रावरणमुपचाराद्देशोपि । कान्थिकः ।

**वर्णौ वुञ्** ॥ ३ । २ । ९९ ॥ वर्णुर्नाम नदः । तददूरभवो जनपदोपि वर्णुः । तद्विषये या कन्था ततो वुञ् भवति शेषे । कान्थकोश्च ।

**बन्धयोङः** ॥ ३ । २ । १०० ॥ बन्धवाचिनो योङश्च देशवाचिनो दोर्वुञ् भवति शेषे । पारेबन्धनि जातः पारेबन्धकः । योङः, सांकाश्यकः । ठञ्ञिठाभ्यां परत्वादयं बाधकः । दासरूप्ये जातो दासरूप्यकः ।

**मत्स्यपुरवहान्तात** ॥ ३ । २ । १०१ ॥ एतदन्ताद्देश-

वाचिनो दोर्वुञ् भवति । छापवादोयम् । सौणप्रस्थकः । कान्धीपुरकः । फाल्गुनीवहकः । पुरान्तात्, रोडीतोः इति सिद्धेप्यऽप्रागर्थं वचनम् । वाहीकग्रामादित्वाट्ठञ्ञिठौ बाधतेऽयम् । पानप्रस्थकः ।

रोडीतोः प्राचाम् ॥ ३ । २ । १०२ ॥ रेफोड ईकारान्ताच्च प्राग्देशवाचिनो दोर्वुञ् भवति । एरुचककः । ईतः, माकन्दकः । प्राचा किम्? दाक्षीमित्रीयः ।

राष्ट्रावध्योः ॥ ३ । २ । १०३ ॥ राष्ट्रवाचिनस्तदवधिवाचिनश्च दोर्वुञ् भवति । आभिसारकः । राष्ट्रावधेः, श्यामायनकः । राष्ट्रग्रहणेनैव सिद्धे बाधकबाधनार्थमवधेः पृथगुपादानम् । ततो गर्तयोः राष्ट्रावधेः परमणूं बाधित्वा वुञेव स्यात् । त्रैगर्तकः । ग्रामेऽवधौ वुञ्निषेधार्थं च । मौञ्जिर्नाम वाहीकग्रामस्तत्र भवो मौञ्जीयः ।

बहुत्वेऽदोरपि ॥ ३ । २ । १०४ ॥ बहुवचनविषयाद्राष्ट्रतदवधिवाचिनो मृदो दोरदोश्च वुञ् भवति । छाणोपवादः । राष्ट्राद् दोः, दार्वेषु जातो दार्वकः । राष्ट्रावधेर्दोः, वैकुलिषेषु जातो वैकुलिषकः । राष्ट्राददोः, आङ्गः । राष्ट्रावधेरदोः, आजकुञ्जकः । बहुत्वग्रहणं किम्? जनपदैकदेशे बहुत्वेन विवक्षिते वुञः प्रतिषेधार्थम् । वर्तनीषु भवो वार्तनः ।

कच्छाग्निवक्त्रवर्तयोः ॥ ३ । २ । १०५ ॥ दोरदोश्च एतदुत्तरपदादेशवाचिनो मृदो वुञ् भवति । पैप्पलीयकच्छकः । वैभुजाग्नकः । सैन्धुवक्त्रकः । चाक्रवर्तकः ।

धूमादेः ॥ ३ । २ । १०६ ॥ एभ्यो देशवाचिभ्यो वुञ्भवति । धौमकः । योऽन्योऽप्यदेशार्थं ग्रहणम् । पाथेयकः ।

नगरात्कुत्साद्राक्ष्ययोः ॥ ३ । २ । १०७ ॥ नगरशब्दाद्वुञ् भवति निन्दाप्रावीण्ययोर्गम्ययोः । नागरकश्चौरो निपुणो वा । एतयोः किम् ? नागरः पुरुषः । नगराशब्दात्कत्र्यादिषु पाठाड्ढकञि नागरेयकः ।

मनुष्यादिष्वरण्यात् ॥ ३ । २ । १०८ ॥ मनुष्याद्यभिधानेऽरण्यशब्दाद्वुञ् भवति । अरण्याण्णो वक्तव्य इत्यस्यापवादोयम् । आरण्यको मनुष्यः, पन्थाः, अध्यायो, न्यायो, विहारो, हस्ती वा । वा गोमयेषु वक्तव्यः । आरण्यका आरण्या वा गोमयाः ।

कुरुयुगन्धरेभ्यो वा ॥ ३ । २ । १०९ ॥ बहुत्वेऽदोरपीति नित्ये प्राप्ते विकल्पोयम् । कौरवकः । कच्छादिपाठादणपि । कौरवः । यौगन्धरको, यौगन्धरः । नृतत्स्थयोः कुरोर्नित्यं वुञ् भवति । कौरवको मनुष्यः । कौरवकमस्य जल्पितम् ।

वृजिमद्रात्कः ॥ ३ । २ । ११० ॥ आभ्यां को भवति शेषे । बहुत्वेऽदोरपीति वुञोपवादः । वृजिकः । मद्रकः । यस्मिन् प्रकरणे जनपदास्तेषु सत्यविधौ तदन्तविधिरिति प्रतिषेधे प्राप्ते सुसर्वार्धदिक्छब्देभ्यो जनपदस्येति सर्वत्र तदन्तविधिः । सुमद्रकः । सर्वमद्रकः । दिक्पूर्वपदत्वे तु दिगादेरसौ मद्रेभ्योऽञित्यपि । पौर्वमद्रः ।

कोपदेशोऽण् ॥ ३ । २ । १११ ॥ देशवाचिनः ककारो-

डो गृदोऽण् भवति । बहुत्वेऽद्रोरपीति वुञोपवादः । ऋषिकेषु जातः आर्षिकः । माहिषिकः । ओर्देशे इति ठञं बाधित्वा परत्वाद्बहुत्वेदोरपीति वुञि प्राप्ते परत्वादयं भवतीति । ऐक्ष्वाकवः ।

कच्छादेः ॥ ३ । २ । ११२ ॥ देशवाचिभ्यः कच्छादिभ्योऽण् भवति । काच्छः ।

नृतत्स्थयोर्वुञ् ॥ ३ । २ । ११३ ॥ नरि तत्स्थे चाभिधेये कच्छादेर्वुञ् भवति । काच्छको ना । काच्छकमस्य हसितम् । बहुत्वे वुञं बाधित्वा अणि प्राप्तेऽबहुत्वे तूत्सर्गेणाणि प्राप्ते च वचनम् ।

गोयवाग्वपदातौ साल्वात् ॥ ३ । २ । ११४ ॥ साल्वशब्दाद्गवि यवाग्वामपदातौ च जातादिशेषे वुञ् भवति । बहुत्वेऽदोरपीति सिद्धे एष्वेवेति नियमार्थमिदम् । बहुत्वादन्यत्रोत्सर्गापवादोऽमेय । साल्वको गौः । साल्विका यवागुः । साल्वकोऽपदातिः । एषु किम् ? साल्वं वस्त्रम् । साल्वाः पदातयः ।

गर्तयुगहादिभ्यश्छः ॥ ३ । २ । ११५ ॥ देशवाचिनो गर्तयोर्गहादिभ्यश्च छो भवति । अणादेरपवादः । वाहीकग्रामेभ्य इति गहादीनां सम्भवापेक्षं विशेषणम् । गहीयः । वेणुकादेश्छण् व० । वैणुकीयम् । जनपरयोः कुत्वं च (ग.) । जनकीयम् । परकीयम् ।

प्राचां कटादेः ॥ ३ । २ । ११६ ॥ प्राग्देशवाचिनः कटादेः शब्दाच्छो भवति । कटनगरीयम् ।

राज्ञः क च ॥ ३ । २ । ११७ ॥ राजशब्दस्य कादेशो

भवति छश्च । दोश्छ इति सिद्धे कादेशार्थमेवेदम् । राजकीयम् ।

दोः कखोङः ॥ ३ । २ । ११८ ॥ ककारोङः खकारोङश्च दोर्देशवाचिनश्छो भवति । द्रौघणकीयः । आश्वरथिकीयः । कौटिशिखीयः । ठञ्ञिठञ्वुञणादीनामपवादोयम् ।

कन्थापलदनगरग्रामह्रदयोः ॥ ३ । २ । ११९ ॥ कन्थादिद्योर्देशवाचिनो दोश्छो भवति । वाहीकग्रामादिलक्षणस्याप्यवादोयम् । दाक्षिकन्थीयः । दाक्षिपलदीयः । दाक्षिनगरीयः । दाक्षिग्रामीयः । दाक्षिह्रदीयः ।

पर्वतात् ॥ ३ । २ । १२० ॥ अणोपवादश्छः । पर्वतीयो मनुष्यः ।

वाऽमर्त्ये ॥ ३ । २ । १२१ ॥ मर्त्यादन्यस्मिन्नभिधेये पर्वताद्वा छो भवति । पक्षेऽण् । पर्वतीयं पार्वतं वोदकम् ।

युष्मदस्मदोऽकञ् खञ् ॥ ३ । २ । १२२ ॥ आभ्यां वा खञ् भवति । खञ्पक्षेऽकञादेशश्च । उच्चारणसामर्थ्यात् स्वेको दीत्वम् । युवयोर्युष्माकं वायं यौष्माकीणः । आस्माकीनः । पक्षेऽण्छौ ।

अणि ॥ ३ । २ । १२३ ॥ अणि च परे युष्मदस्मदोरकञादेशो भवति । इदमेवाणो ज्ञापकम् । यौष्माकः । आस्माकः । छे, युष्मदीयः । अस्मदीयः ।

तवकममकावेकार्थे ॥ ३ । २ । १२४ एकार्थे वर्तमानयोर्युष्मदस्मदोस्तवकममकादेशो भवतोऽणि खञि च । तावकीनः । तावकः । मामकीनः । मामकः । छे तु त्वदीयः । मदीयः ।

**योऽर्द्धात्** ॥ ३ । २ । १२५ ॥ अणोपवादः । अर्घ्यः ।

**परावराधमोत्तमादेः** ॥ ३ । २ । १२६ ॥ परार्घ्यः । अवरार्घ्यः । अधमार्घ्यः । उत्तमार्घ्यः । द्वन्द्वेऽर्घ्यसमाहारे इति विशेषणं विशेष्येणेति वा यसः । यदा परावरौ दिक्छब्दौ तदोत्तरसूत्रेण यठणोः प्राप्तयोरन्यत्र चाणि प्राप्ते वचनम् ।

**दिगादेष्ठण् च** ॥ ३ । २ । १२७ ॥ दिगादेरर्धात् ठण् भवति यश्च । पौर्वार्धिकः, पूर्वार्ध्यः । अर्धे परतः पश्चभावो वक्ष्यते । पाश्चार्धिकः । पश्चार्ध्यः । अन्यादेष्ठण् वक्तव्यः । *दिक्छब्दादन्यो यदार्धस्यादिस्तदा ठणेवेत्यर्थः । पौष्करार्धिकः ।*

**ग्रामराष्ट्रयोरणठञौ** ॥ ३ । २ । १२८ ॥ ग्रामार्धवाचिनो राष्ट्रार्धवाचिनश्च दिगादेरर्धादणठञौ भवतः । ग्रामस्य राष्ट्रस्य वा पूर्वार्धे जातः पौर्वार्धिकः ।

**मध्यान्मः** ॥ ३ । २ । १२९ ॥ मध्यमः । आदेश्चेति व० । आदिमः । अवोधसोः सखं च । अवमः । अधमः ।

**सम्प्रत्य** ॥ ३ । २ । १३० ॥ यथातीतानागतयोरन्तराले वर्तमानः कालः सम्प्रतीत्युच्यते एवमत्र द्वयोरुत्कृष्टापकृष्टयोरन्तराले वर्तमानं सम्प्रतीत्युच्यते । नात्युत्कृष्टो नाप्यपकृष्टो मध्यो वैयाकरणः । नातिह्रस्वं नातिदीर्घं मध्यं काष्ठम् ।

**द्वीपादनुसमुद्रे यञ्** ॥ ३ । २ । १३१ ॥ समुद्रसमीपे यो द्वीपस्तस्माद्यञ् भवति । कच्छादिपाठादणो, नृतत्स्थयोर्वुञश्चापवादः । द्वैप्यस् । द्वैप्या । अनुसमुद्रे किम् ? यमुनादिसम्बन्धे द्वीपे भवं द्वैपम् । द्वैपकम् । कच्छादिपाठादण्, नृतत्स्थयोरिति वुञ् ।

**कालाट्ठञ्** ॥ ३ । २ । १३२ ॥ कालविशेषवाचिनष्ठञ् भवत्यणोऽपवादः । दोरछं परत्वाद्बाधते । मासिकः । तत्र जात इत्यतः प्राक् कालाधिकारः । कदम्बपुष्पयोगात्कालोपि कदम्बपुष्पः । तत्र जातः कादम्बपुष्पिकः ।

**श्राद्धे शरदः** ॥ ३ । २ । १३३ ॥ भसन्ध्यावृतुभ्य इत्यणोपवादोयम् । शारदिकं श्राद्धम् ।

**वा रोगातपयोः** ॥ ३ । २ । १३४ ॥ पक्षेऽण् । शारदिकः शारदो वा रोग आतपो वा ।

**निशाप्रदोषाभ्याम्** ॥ ३ । २ । १३५ ॥ वा ठञ् । नैशिकं, नैशम् । प्रादोषिकं, प्रादोषम् ।

**श्वसस्तुट् च** ॥ ३ । २ । १३६ ॥ श्वस्शब्दाट्ठञ् वा भवति तस्य तुडागमश्च । ठञोपवादो शिलक्षणस्तुट् प्राप्तः । तं बाधित्वा नैपमेशास्त्र्यस इति वा ये प्राप्ते ठञ् विभाष्यते ।

**द्वारादेः** ॥ ४ । २ । ९ ॥ एषां नैप् किन्त्वैव् । शौवस्तिकः । श्वस्त्य । आभ्यां मुक्ताचनप् । श्वस्तनः ।

**प्रावृष एण्यः** ॥३।२।१३७॥ ऋत्वणोपवादः । प्रावृषेण्यः ।

**भसन्ध्यावृतुभ्योऽवर्षाभ्योऽण्** ॥ ३ । २ । १३८ ॥ कालवाचिभ्यो भेभ्य सन्ध्यादिभ्य ऋतुभ्यश्च वर्षावर्जितेभ्योऽण् भवति । तैषः । सान्ध्य. । सन्धि, वेला, अमावास्या, अमावस्या, त्रयोदशी, चतुर्दशी, पञ्चदशी, पौर्णमासी, प्रतिपदिति । संवत्सरात्फलपर्वणोः(ग.) । सांवत्सरं फलं पर्व वा । सांवत्सरिकमन्यत् । अवर्षाभ्यः किम् ? वर्षासु साधु वार्षिकं वासः ।

हेमन्तात्तखम् ॥ ३ । २ । १३९ ॥ हेमन्तादण् भवति तत्सन्नियोगेन तख च । हेमन्ते साधु हैमनमनुलेपनम् । ठञपीष्यते । हैमन्तिकम् । हेमन्ततखमिति सिद्धे कानिर्देश केवलोप्यण् यथा स्यादित्यर्थ । हैमन्ती पङ्क्तिः ।

सायंचिरंप्राह्णेप्रगेऽझिभ्यस्तनट् ॥ ३ । २ । १४० ॥ सायमित्यादिभ्यो झिभ्यश्च कालवाचिभ्यस्तनड् भवति । आद्ययोस्त्यसन्नियोगे मन्तत्व प्राह्णप्रगयोस्त्वेदन्तत्व च निपात्यते । ईबन्ताच्चनटि ङकालेत्यनुपा वा सिध्यति । सायन्तनम् । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम् । झिभ्य –प्रातस्तनम् । चिरपरुत्परारिभ्यः त्नो व० । चिरत्नम् । परुत्नम् । परारित्नम् । अन्तादिमो व० । अन्तिमम् ।

वा पूर्वापरादह्नात् ॥ ३ । २ । १४१ ॥ पूर्वाऽपरपूर्वादह्नशब्दाद्वा तनड् भवति । पक्षे ठञ् । पूर्वाह्णेतनम् । पूर्वाह्णतनम् । पौर्वाह्णिकम् । अपराह्णेतनम् । अपराह्णतनम् । आपराह्णिकम् । अणादयो घादयश्च येत्र प्रकृतास्त्यास्तेषामित प्रभृति प्रकृत्यर्थान् समर्थविभक्त्युपादान चाह–

तत्र जातः ॥ ३ । ३ । १ ॥ ईप्समर्थाज्जात इत्यर्थ यथाविहित त्यो भवति । स्रुघ्ने जात स्रौघ्नः । औत्स । राष्ट्रिय । शाकलिक । सौत्रेयक । इत्यादि ।

प्रावृषष्ठः ॥ ३ । ३ । २ ॥ ठञोपवादस्यैण्यस्यापवादोयम् । प्रावृषि जात प्रावृषिक । प्रावृषिका स्त्री ।

**खौ शरदो वुञ्** ॥ ३ । ३ । ३ ॥ शारदका मुद्गाः । खौ किम्? शारदं धान्यम् । भसन्ध्येत्यण् ।

**सिन्ध्वपकरादण्** ॥ ३ । ३ । ४ ॥ सिन्ध्वपकराभ्यामण् भवति । सिन्धुशब्दात् कच्छाद्यणो नृतत्स्थयोरिति वुञश्चापवादे के प्राप्ते वचनम् । सिन्धुषु जातः सैन्धवः । अपकरशब्दादुत्तर-सूत्रेण के प्राप्तेऽनेनाणपि विधीयते । आपकरः ।

**पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराच्च कः** ॥ ३ । ३ । ५ ॥ चात् सिन्ध्वपकराभ्याम् । पूर्वाह्णकः । अपराह्णकः । आभ्यां तनठोपवादः । आर्द्रकः । केऽण इति प्रः । मूलकः । प्रदोषकः । निशाप्रदोषाभ्यामित्यपवादः । अवस्करकः । सिन्धुकः । अपकरकः ।

**पथः पन्थः** ॥ ३ । ३ । ६ ॥ कश्च । पथि जातः पन्थकः ।

**वाऽमावास्यायाः** ॥ ३ । ३ । ७ ॥ पक्षे भसन्ध्येत्यण् । अमावास्याकः । आमावास्यः । एकदेशविकृतस्यानन्यत्वादमावस्याकः । आमावास्यः ।

**आऽऽषाढाच्च** ॥ ३ । ३ । ८ ॥ अ आषाढादिति छेदः । आषाढायां जातो आषाढः । चादमावास्यायः । श्रविष्ठाषाढाभ्यां छण् चेति व० । श्राविष्ठीयः । आषाढीयः ।

**फल्गुन्याष्टः** ॥ ३ । ३ । ९ ॥ आणोपवादः । फल्गुनः । फल्गुनी ।

**स्थानान्तादुप्** ॥ ३ । ३ । १० ॥ स्थानान्तादुत्तरस्य जातार्थस्य त्यस्योब्भवति । गोस्थान ।

शालाद्गोखरात् ॥ ३ । ३ । ११ ॥ गोखरपूर्वात् शाला-शब्दाज्जातार्थस्य त्यस्योऽभवति । गोशाले जातो गोशालः । खरशालः । वा सेनेति नप्स्वात्पः ।

वत्साद्वा ॥ ३ । ३ । १२ ॥ वत्सशालः । वात्सशालः ।

भेभ्यो बहुलम् ॥ ३ । ३ । १३ ॥ भशब्देभ्यो जातार्थ-त्यस्य बहुलमुम्भवति । श्रविष्ठानुराधास्वातिपुनर्वसुतिष्यहस्त-विशाखाबहुलाभ्य उवेव । श्रविष्ठः । तिष्यग्रहणे पर्यायग्रहणम् । पुष्यः । चित्रारेवतीरोहिणीभ्यः स्त्रियामुबेव । चित्रायां जाता चित्रा । रोहिणी । पुंसि न भवत्येव । चैत्रः । अन्येभ्यो विभाषा । कृत्तिकः । कार्तिकः । बहुलवचनादन्यदपि । अणो वा ङि-त्वम् । शतभिषः । शातभिषजः ।

कृतलब्धक्रीतसंभूताः ॥ ३ । ३ । १४ ॥ तत्रकृताद्य-र्थे यथाविहितं त्यो भवति । स्रुघ्ने कृतो लब्धः क्रीतः संभूतो वा स्रौघ्नः । राष्ट्रियः ।

कुशलः ॥ ३ । ३ । १५ ॥ तत्र कुशल इत्यर्थेऽपि । तथा उत्तरोपवादविधिरत्रैव यथा संबध्येतेति योगविभागः । स्रुघ्ने कुशलः स्रौघ्नः । राष्ट्रियः ।

पथो वुन् ॥ ३ । ३ । १६ ॥ तत्र कुशल इत्यर्थे । पथि कु-शलः पथकः ।

आकर्षादेः कः ॥ ३ । ३ । १७ ॥ आकर्षे कुशल आकर्षकः । आकर्ष, तसरु, पिशाच, पिचण्ड, असनि, अस्मन्, ह्राद, इति ।

---

१ धनन्तबहुलशब्दस्य कृत्तिकार्थे ।

**कालात्साधुपुष्प्यत्पच्यमाने ॥ ३ । ३ । १८ ॥** कालविशेषवाचिभ्यो यथाविहितं त्यो भवति साध्वादिष्वर्थेषु । शिशिरे साधु शैशिरं भोज्यम् ।

**उप्ते ॥ ३ । ३ । १९ ॥** ग्रीष्मे उप्यन्ते ग्रैष्माः शालयः ।

**आश्वयुज्या वुञ् ॥ ३ । ३ । २० ॥** उप्तेऽर्थे । कालाट्ठ-ञोपवादः । आश्वयुज्यामुप्ता आश्वयुजका मुद्गाः ।

**ग्रीष्मवसन्ताद्वा ॥ ३।३।२१ ॥** ऋत्वणि प्राप्ते विकल्पः । ग्रैष्मका ग्रैष्मा वा शालयः । वासन्तका वासन्ता वा यवाः ।

**देयमृणे ॥ ३ । ३ । २२ ॥** कालविशेषवाचिन ईप्समर्था-द्देयमित्यर्थे यथाविहितं त्यो भवति यत्तद्देयमृणं चेत्तत्स्यात् । मासे देयं मासिकमृणम् । ऋणे किम्? मासे देया भिक्षा ।

**कलाप्यश्वत्थयवबुसाद्वुञ् ॥ ३ । ३ । २३ ॥** काला-द्देयमृणे इत्येव । यस्मिन्काले मयूराः कलापिनो भवन्ति स काल सहचारात् कलापी । यस्मिन्नश्वत्थाना फल भवेत्सोऽ-श्वथ. । यस्मिन्यवबुस भवेत्तद्यवबुसम् । कलापकम् । अश्वत्थ-कम् । यवबुसकम् ।

**ग्रीष्मावरसमाद्वुञ् ॥ ३ । ३ । २४ ॥** देयमृणे इत्येव ग्रैष्मकम् । आवरसमकम् ।

**संवत्सराग्रहायणीभ्यां ठञ्च ॥ ३ । ३ । २५ ॥** चाद्वुञ् । देयमृणे इत्येव । सांवत्सरिकं, सांवत्सरकम् । आग्रहायणिकम्, आग्रहायणकम् । चेति सिद्धे ठञ्ग्रहणं संवत्सरात्फलपर्वणोरित्यणो

बाधनार्थम् ।

रौति मृगः ॥ ३ । ३ । २६ ॥ कालविशेषवाचिन ईप्समर्थाद्रौतीत्यर्थे यथाविहित त्यो भवति मृगश्चेत् स रोदक । प्रदोषे रौति प्रादोषिक प्रादोषो वा मृग । निशाप्रदोषाभ्यामिति ठञणौ । मृग किम् [1] निशाया रौति उलूक ।

तदस्य सोढम् ॥ ३ । ३ । २७ ॥ वासमर्थात्कालवाचिनस्तार्थे यथाविहित त्यो भवति यद्वासमर्थं सोढ चेत्तद्भवेत् । निशा सोढास्य नैशिको नैशो वा । साहचर्यान्निशादिशब्देनात्राध्ययनमिष्टम् ।

तत्र भवः ॥ ३ । ३ । २८ ॥ ईप्समर्थाद्भव इत्यर्थे यथाविहित त्यो भवति । स्रुघ्ने भव स्रौघ्न । राष्ट्रिय । अनुवृत्त्या सिद्धे पुनस्तत्रग्रहण कालानिवृत्त्यर्थम् ।

दिगादेर्यः ॥ ३ । ३ । २९ ॥ दिगादिभ्यो यो भवति तत्र भव इत्यर्थे । अणुछयोरपवाद । दिश्य । उदकात्संज्ञायाम् । उदक्या स्त्री । औदकोऽन्य ।

देहाङ्गात् ॥ ३ । ३ । ३० ॥ अणोपवाद । मुख्यम् । दन्त्यम् । तालव्यम् । इह तदन्तविधिर्नेकव्य । दन्तोष्ठ्यम् ।

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ३ । ३ । ३१ ॥ दृतौ भव दार्तेयम् । अणोपवाद । कौक्षेयम् । देहाङ्गत्यस्यापवाद । कालशेयम् । वास्तेयम् । अस्ताञ्जि भवमास्तेयम् । त्यसंनियोगे असिभावो निपात्यते । आहेयम् ।

---

[1] क्वचित्[illegible]

ग्रीवाभ्योण् च ॥ ३ । ३ । ३२ ॥ चाड्ढञ् । ग्रीवासु भवं ग्रैवं, ग्रैवेयम् ।

गम्भीराञ्ञ्यः ॥ ३ । ३ । ३३ ॥ गाम्भीर्यम् । गम्भीरवहिर्देवपञ्चजनेभ्यो च० । बाह्यम् । दैव्यम् । पाञ्चजन्यम् ।

हात् ॥ ३ । ३ । ३४ ॥ परिमुखादिभ्य एवेष्यते । पारिमुखम् । परिमुखादिभ्यः किम् ? औपकूलम् । हात्किम् ? पक्षे य एव भवति । परिमुख्यम् ।

अन्तरादेहठञ् ॥ ३ । ३ । ३५ ॥ अन्तःशब्दादेहाट्ठञ् भवति । अन्तर्गेहे भवमान्तर्गेहिकम् । पुरान्तात्प्रतिषेधो व० । आन्तःपुरम् ।

समानाच्च तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वाद्दमाच्च देहाच्च लोकोत्तरपदादपि ॥ १ ॥

सामानिकम् । सामानग्रामिकम् । आध्यात्मिकम् । अध्यात्मादिराकृतिगणः । और्ध्वदमिकम् । और्ध्वदेहिकम् । ऐहलौकिकम् ।

मुखपार्श्वतसोरीयः कुग् जनस्य परस्य च ।
ईयः कार्योथ मध्यस्य मण्मायौ च हतौ मतौ ॥ २ ॥

मुखतीयम् । पार्श्वतीयम् । जनकीयम् । परकीयम् । मध्यीयः । मण्मायौ च । माध्यमः । मध्यमायः ।

मध्यो मध्यंदिनश्चास्मादुप् स्थाम्नो ध्वजिनात्तथा । मध्ये भवं मध्यंदिनम् । उप् स्थामान्तादजिनान्ताच्च व० । अश्वत्थाम्नि भवः अश्वत्थामा । वृकाजिने भवो वृकाजिनः ।

१ हेमंमार्दे दिवम् ।

उपाज्जानुनीविकर्णात् ॥ ३ ॥ ३ ॥ ३६ ॥ ह्रादेव । उपजानु भवमौपजानुकम्। औपनीविकम्। औपकर्णिकम्। देहावयवाद्यस्यापवादोयम्।

ग्रामात्पर्यन्वोः ॥ ३ । ३ । ३७ ॥ ह्रादेव । पारिग्रामिकः । आनुग्रामिकः ।

जिह्वामूलाङ्गुलेश्छः ॥ ३ । ३ । ३८ । यस्यापवाद । जिह्वामूलीय. । अङ्गुलीय ।

वर्गान्तात् ॥ ३ । ३ । ३९ ॥ छः । कवर्गीयो वर्णः । शब्दे इदमुदाहरणम् । अशब्दे तु,

यखौ चाऽशब्दे ॥ ३ । ३ । ४० ॥ वर्गान्तायखौ वा भवतो न तु शब्दविषये । पक्षे छ । भरतवर्ग्य , भरतवर्गीण',भरतवर्गीय ।

कर्णललाटभूषणे कः ॥ ३ । ३ । ४१ ॥ कर्णललाटाभ्या को भवति समुदायेन भूषणे गम्ये । कर्णिका । ललाटिका । स्वभावात्स्त्रीत्वम् । भूषणे किम् ? कर्ण्यम् ।

तस्य व्याख्यान इति च व्याख्येयाख्यायाः॥ ३।३।४२॥ व्याख्यायतेऽनेनेति व्याख्यानम् । व्याख्येयो ग्रन्थ. । वासमर्थाद् व्याख्येयाख्यारूपान्मृदो यथाविहित त्यो भवति व्याख्यानेर्थे चात्र भवेऽपि । पूर्ववाक्यपरिसमाप्त्यर्थ इतिशब्द । सुपा व्याख्यान सुप्सु भव वा सौपम् । एव तैङम् । कार्तम् । हार्तम् । व्याख्येयाख्याया. किम् ? पाटलिपुत्रस्य व्याख्यानम् । तस्येदमिति सिद्धे पुनर्महण वक्ष्यमाणोऽपवादविधिरत्रार्थे यथा स्यादिति।

**बह्वचो बहुलं ठञ् ॥ ३ । ३ । ४३ ॥** बह्वचो व्याख्येयाख्याया बहुलं ठञ् भवति तस्य व्याख्याने तत्र भवे च । बहुलग्रहणं बहुप्रपञ्चार्थम् । तेन सविधौ ये बह्वचस्तेभ्य ऋकारान्तब्राह्मणप्रथमाध्वरपुरश्चरणनामाख्यातपौरोडाशेभ्यः क्रतुभ्यश्च गौणमुख्येभ्यष्ठञ् । सविधौ,—षत्वणत्वस्य व्याख्यानं तत्र भवं वा षात्वणात्विकम् । ऋकारान्तात्,—चातुर्होतृकम् । ब्राह्मणिकम् । प्राथमिकम् । आध्वरिकम् । पौरश्चरणिकम् । नामाख्यातिकम् । विगृहीतादपि । नामिकम् । आख्यातिकम् । पौरोडाशिकम् । मुख्येभ्यः क्रतुभ्यः, आग्निष्टोमिकम् । गौणेभ्यः,—दासौदनिकम् । ऋषिभ्योऽध्याये । वाशिष्ठिकोऽध्यायः । अन्यत्र वाशिष्ठी ऋक् । विसेपु न । सांहितम् ।

**व्यृजृचः ॥ ३ । ३ । ४४ ॥** द्व्यचः—अङ्गस्य व्याख्यानं तत्र भवं वा आङ्गिकम् । तार्किकम् । ऋचः— आर्चिकम् ।

**पुरोडाशाट्ठञ् ॥ ३ । ३ । ४५ ॥** पुरोडाशाः पिष्टपिण्डाः। साहचर्यात्तस्य संस्कारकमन्त्रेऽपि। पौरोडाशिकः ।

**छन्दसो यः ॥ ३ । ३ । ४६ ॥** व्यृङ्लक्षणठञोऽपवादः । छन्दस्यम् ।

**ऋगयनादेश्चाण् ॥ ३ । ३ । ४७ ॥** एभ्यश्छन्दःशब्दाच्चाण् भवति पूर्वत्रार्थे ठञादेरपवादोऽयम् । अणि ऋगयनस्य णत्वमिष्यते । आर्गयण । वैद्यः । नैमित्तः । छान्दसः ।

**तत आगतः ॥ ३ । ३ । ४८ ॥** स्रुघ्नादागतः स्रौघ्नः । राष्ट्रियः ।

आयस्थानेभ्यष्ठण् ॥ ३ । ३ । ४९ ॥ द्रव्यागमनमायः। स यत्र तिष्ठत्युत्पचिद्वारेण तदायस्थानम् । तद्वाचिभ्यष्ठण् भवति तत आगतेर्थे । अणूछयोरपवादः । आपणिकम् । शौल्कशालिकम् । स्वरूपनिरासार्थं बहुवचनम् ।

शुण्डिकादिभ्योऽण् ॥ ३ । ३ । ५० ॥ शुण्डिकादागतः शौण्डिकः । पुनरण्ग्रहणमायस्थानेभ्यष्ठण् इत्यादेर्बाधनार्थम् ।

यौनमौखाद्वुञ् ॥ ३ । ३ । ५१ ॥ योनेरिमे आगता वा यौना योनिसम्बन्धिनो मातुलादयः । मुखस्येमे तत आगता वा मौखा वचनसम्बन्धिन उपाध्यायादय ऋत्विगादयश्च । यौनेभ्यः—मातुलादागतो मातुलकः । मातामहकः । मौखेभ्यः—उपाध्यायादागत औपाध्यायकः । शैष्यकः । आर्त्विजकम् ।

ऋतष्ठञ् ॥ ३ । ३ । ५२ ॥ यौनमौखेभ्य एव । भ्रातृकम् । हौतृकम् ।

पितुर्यश्च ॥ ३ । ३ । ५३ ॥ चाट्ठञ् । रीङृतः । यस्य ङ्यां चेतीखम् । पित्र्यम् । पैतृकम् ।

वृद्धादङ्कवत् ॥ ३ । ३ । ५४ ॥ गर्गाणामङ्कस्तत आगतो वा गार्गः । एव वैद.। सर्वोपि संघाङ्कलक्षणेत्यादिविधिरत्र ज्ञेयः ।

हेतुमनुष्याद्वा रूप्यः ॥ ३ । ३ । ५५ ॥ पक्षे यथाप्राप्तम् । हेतोः—धेनोरागत धेनुरूप्यम् । कररूप्यम् । पक्षे गहादिलक्षणश्छः । धेनवीयम् । करीयम् । मनुष्यात्—देवदत्तरूप्यम् । देवदत्तकम् । देवदत्तीयम् । दैवदत्तम् ।

मयट् ॥ ३ । ३ । ५६ ॥ हेतुमनुष्येभ्यो मयट् च भवति । धेनुमयम् । देवदत्तमयम् । याथासंख्यनिवृत्त्यर्थो योगविभाग. ।

प्रभवति ॥ ३ । ३ । ५७ ॥ तत इति कासमर्थान्मृदो यथाविहित त्यो भवति प्रभवतीत्यर्थे । प्रथम प्रभवत्युपलभ्यते इति प्रभवति । सुघ्नात्प्रभवति सौघ्न । राष्ट्रिय । दारदी सिन्धु । हैमवती गङ्गा ।

विदूराञ्ञ्यः ॥ ३ । ३ । ५८ ॥ वैदूर्यो मणि ।

तद्गच्छति पथिदूतयोः ॥३।३।५९॥ इप्समर्थाद्गच्छतीत्यर्थे यथाविहित त्यो भवति यो गच्छति स चेत्पन्था दूतो वा । सुघ्न गच्छति सौघ्न पन्था दूतो वा । पथिदूतयो किम् ? सुघ्नं गच्छति सार्थ ।

अभिनिष्क्रामति द्वारम् ॥ ३ । ३ । ६० ॥ इप्समर्थादभिनिष्क्रामतीत्यर्थे यथाविहित त्यो भवति द्वारेभिधेये । स्रुघ्नमभिनिष्क्रामति सौघ्न पाटलिपुत्रद्वारम् । राष्ट्रियम् ।

अधिकृत्य कृते ग्रन्थे ॥ ३ । ३ । ६१ ॥ इप्समर्थादधिकृत्य कृत इत्यर्थे यथाविहित त्यो भवति यत्तत्कृत ग्रन्थश्चेत्स भवेत् । सुलोचनानधिकृत्य कृत सौलोचनो ग्रन्थ । उसाख्यायिकासु बहुलं वक्तव्यम् । वासवदत्ता । दोश्छस्यात्रोस् । क्वचिन्न । भैमरथी ।

शिशुमन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ३।३।६२ ॥ तदधिकृत्य कृते ग्रन्थे इत्येव । शिशुक्रन्दीय । यमस्य सभा यमसभम् । सभाराजेति नप् । यमसभीयः । द्वन्द्वात्–भरतबाहुबलीय । द्वन्द्वे देवासुरादिभ्यः प्रतिषेधो वा० । दैवासुरम् । राक्षोसुरम् । इन्द्रजननादिभ्यः–इन्द्रजननीयम् । आह्ताविगणोयम् ।

सोऽस्य निवासः ॥ ३ । ३ । ६३ ॥ स्रुघ्नो निवासोऽस्य स्रौघ्नः ।

अभिजनः ॥ ३ । ३ । ६४ ॥ अभिजनः पूर्वे बान्धवाः साहचर्यात्तैरुषितो देशोपि । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः ।

गिरेश्छः शस्त्रजीविषु ॥ ३ । ३ । ६५ ॥ गिरिवाचिनो वासमर्थादभिजनशब्दादस्येति तार्थे छो भवति शस्त्रजीविष्वभिधेयेषु । वेलो गिरिर्येषां शस्त्रजीविनामभिजनस्ते वेलीयाः । गिरेः किम् ? सांकाश्यकाः । बन्धयोश्च इति वुन् । शस्त्रजीविषु किम् ऋक्षोदोभिजनो येषां ते आर्क्षोदा ब्राह्मणाः ।

शण्डिकादेर्ञ्यः ॥ ३ । ३ । ६६ ॥ शण्डिकोभिजनोस्य शाण्डिक्यः । कोडोपि प्राप्ते इतरेभ्यो बहुत्वेदोरपीति वुञि च प्राप्ते वचनम् ।

सिन्ध्वादेरण् ॥ ३ । ३ । ६७ ॥ सिन्धुरभिजनोस्य सैन्धवः । नृतस्थयोरिति बहुत्वेदोरपीति च वुञो दोश्छस्य चापवादोयम् ।

तूदीवर्मतीभ्यां ढण् ॥ ३ । ३ । ६८ ॥ अणोपवादः । तूदी अभिजनोस्य तौदेयः । वार्मतेयः ।

शलातुरकूचवाराच्छण्ण्यौ ॥ ३ । ३ । ६९ ॥ सोस्याभिजन इत्येव । शालातुरीयः । कौचवार्यः ।

भक्तिः ॥ ३ । ३ । ७० ॥ सोस्येत्येव । भज्यते इति भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः ।

अदेशकालाट्ठञ् ॥ ३ । ३ । ७१ ॥ पर्युदासवृत्त्येह देशकालभिन्नस्य तत्सदृशस्याचित्तस्य ग्रहणम् । अण्ञ्योरपवादः ।

अपूपा भक्तिरस्य आपूपिकः । शाष्कुलिकः । अदेशकालादिकम् ? सौघ्नः । शैशिरः ।

महाराजात् ॥ ३ । ३ । ७२ ॥ महाराजो भक्तिरस्य माहाराजिकः ।

अर्जुनाद्वुन् ॥ ३ । ३ । ७३ ॥ सोऽस्य भक्तिरित्येव । अर्जुनकः । उत्तरसूत्रेण वुञि प्राप्ते वचनम् ।

वृद्धराजाख्येभ्यो वुञ् प्रायः ॥ ३ । ३ । ७४ ॥ अणोपवादः । परत्वाच्छस्य च । वृद्धाख्येभ्यः—औपगवो भक्तिरस्य औपगवकः । ग्लौचुकायनकः । राजाख्येभ्यः—साहदेवकः । वासुदेवकः । यत्र सामान्येन विशेषेण वा राजसंज्ञा प्रसिद्धा तस्य सर्वस्य संग्रहार्थमाख्याग्रहणम् । तेन आङ्गकः । प्रायोग्रहणादक्वचित् । पाणिनीयः । पौरवीयः ।

राष्ट्रवत्तद्वतां सर्वं बहुत्वे सरूपाणाम् ॥ ३ । ३ । ७५ ॥ बहुत्वे राष्ट्रेण समानशब्दानां तद्वतां राष्ट्रस्येव सर्वं प्रकृतिस्थं भवति । राष्ट्रावध्येरिति प्रकरणे विहितानामिहातिदेशः । अङ्गा जनपदो भक्तिरस्य आङ्गकः । एवमङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः । तद्वतां किम् ? पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः । सर्वग्रहणं प्रकृतेरप्यतिदेशार्थम् । तेन मद्रो माद्रो वा भक्तिरस्य मद्रकः । सरूपाणां किम् ? पौरवो राजा भक्तिरस्य पौरवीयः ।

तेन प्रोक्तम् ॥ ३ । ३ । ७६ ॥ भासमर्थात्प्रोक्तेऽर्थे यथाविहितं त्यो भवति । व्याख्यात्रिना प्रकर्षेणोक्तं प्रोक्तं, न तु कृतम् । यदन्येन कृतं समन्तभद्रेण प्रोक्तं सामन्तभद्रम् । श्रीदत्तीयम्

शौनकादिभ्यश्छन्दसि णिन् ॥ ३ । ३ । ७७ ॥ एभ्यश्छन्दोभिधाने णिन् भवति तेन प्रोक्तमित्यर्थे । शौनकेन प्रोक्तं छन्दोऽधीयते शौनकिनः। तद्वेत्त्यधीते इत्यस्याण उप् प्रोक्तादिस्युप् । काश्यपकौशिकाभ्यामृषिभ्यां प्रोक्तस्य छन्दस्त्वमुपचारात्। काश्यपेन प्रोक्तं कल्पं विदन्ति काश्यपिनः । कौशिकिनः । ऋषिभ्यां किम् ? इदानीन्तनकाश्यपेन प्रोक्तं काश्यपीयम् । कलापिवैशम्पायनान्तेवासिभ्यः। कलाप्यन्तेवासिनश्चत्वारो, हरिद्रु-छगलि-तुम्बुरूलपाः । हरिद्रुणा प्रोक्तं छन्दोधीयते हारिद्रविणः । वैशम्पायनान्तेवासिनो नव, आलम्बि-प(क)लिङ्ग-कमल-ऋचभाग-आरुणि-ताण्ड्य-श्यामायन-कठ-कलापिन । आलम्बिना प्रोक्तमालम्बिनः । पुराणप्रोक्तेषु ब्राह्मणकल्पेषु । यत्तत्प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति । पुराणेन पुरातनेनर्षिणा प्रोक्ताः । भाल्लवेन प्रोक्तमधीयते भाल्लविनः । पिङ्गेन प्रोक्तः कल्पः पैङ्गी । पुराणप्रोक्तेषु किम् ? याज्ञवल्क्यानि ब्राह्मणानि । आश्मरथः कल्पः। कठचरकादुप्। कठेन प्रोक्तमधीयते कठाः। चरकाद्च्छन्दस्येवेष्यते । चरका श्लोकाः । पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः। पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः । शिलालिनो नटा । गुणकल्पनया चात्र छन्दस्त्वम् । कर्मन्दकृशाश्वाभ्यामिन् । कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ।

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ ३ । ३ । ७८ ॥ एभ्यश्छण् भवति पूर्वविषये । अणोपवादः । तित्तिरिणा प्रोक्तं

छन्दोधीयते विदन्ति वा तैत्तिरीया. । वारतन्तवीया. । खाण्डिकीयाः । औखीयाः । छन्दस्येव । नेह–तैत्तिराः श्लोकाः ।

कलापिनोऽण् ॥ ३ । ३ । ७९ ॥ कालापा' । वैशम्पायनान्तेवासित्वाण्णिनोपवादः । नोऽपुंसोह्रतीति टिखस्य प्रायेनपत्येणीन इति प्रतिषेधे,

सब्रह्मचार्यादेः ॥ ४ । ४ । १२९ ॥ सब्रह्मचारिन्नादीनां टेः खं भवति हृति परे । इति टिखम् ।

छगलिनो ढिनिण् ॥ ३ । ३ । ८० ॥ छागलेयिनः ।

एकदिक् ॥ ३ । ३ । ८१ ॥ छन्दसीति निवृत्तम् । भासमर्थादेकदिगित्यर्थे यथाविहितं त्यो भवति । सुदाम्ना पर्वतेनैकदिक् सौदामनी विद्युत् । एवं हैमवती । त्रैककुदी ।

तस् ॥ ३ । ३ । ८२ ॥ पूर्वेणाणादयश्च । पूर्वस्मिन्नेवार्थे । सुदामतः । तसन्तस्य स्वभावतो झिसंज्ञा ।

यश्चोरसः ॥ ३ । ३ । ८३ ॥ चात्तस् । अणोपवादः । उरसा एकदिक् उरस्य. । उरस्तः ।

उपज्ञाते ॥ ३ । ३ । ८४ ॥ भासमर्थादुपज्ञातेर्थे यथाविहित त्यो भवति । विनोपदेशेन प्रथमं ज्ञातमुपज्ञातम् । स्वयंभुवोपज्ञात स्वायम्भुवीयमाकालिकाचाराध्यायम् । दैवनन्दिनमनेकशेषम् ।

कृते ग्रन्थे ॥ ३ । ३ । ८५ ॥ भासमर्थात्कृतेर्थे यथाविहित त्यो भवति यत्कृत ग्रन्थश्चेत्स भवेत् । सिंहनन्दिना कृतः सैंहनन्दीय. ।

सौ ॥ ३ । ३ । ८६ ॥ ग्रन्थेऽग्रन्थे च । क्षुद्राभिः कृतं क्षौद्रं मधु । माक्षिकम् । बाटरम् । सञ्ज्ञाशब्दानां व्युत्पत्त्यर्थमेवारम्भः । तत एव छो न भवति ।

कुलालादेर्वुञ् ॥ ३ । ३ । ८७ ॥ सञ्ज्ञाविषये एव । कुलालेन कृतं कौलालकम् । कार्मारकम् ।

तस्येदम् ॥ ३ । ३ । ८८ ॥ उपगोरिदमौपगवम् । राष्ट्रियम् । संवोढुः संवहित्रभावश्च स्वे व० । सवोढुः स्वं सांवहित्रम् । अग्नीधः शरणे वाचो रण् व० भसंज्ञा च । अग्निमिन्धे अग्नीत् । तस्येदमाग्नीध्रम् । समिधामाधाने षेण्यण् व० । सामिधेनी ऋक् ।

रथाद्यः ॥ ३ । ३ । ८९ ॥ रथस्येदं चक्रं युगं वा रथ्यम् । रथशीलाहलेभ्यो यविधौ तदन्तविधिरुपसङ्ख्यातः । परमरथ्यम् ।

पत्त्राद॒ण् ॥ ३ । ३ । ९० ॥ पतन्ति तेनेति पत्त्रं वाहनम् । अश्वरथस्येदमाश्वरथम् । औष्ट्ररथम् । पुनरण्ग्रहणं छबाधनार्थम् । रासभरथम् । रथाङ्गे एव । नेह—अश्वरथस्य स्वामी ।

पत्त्रात् ॥ ३ । ३ । ९१ ॥ वाह्ये एवेष्यते । अश्वस्येदं वाह्यमाश्वम् । उत्सर्गेणापि सिद्धे दुसञ्ज्ञेषु सिद्ध्यर्थमिदम् । रासभम् ।

हलसीराट्ठण् ॥ ३ । ३ । ९२ ॥ हालिकम् । सैरिकम् ।

द्वन्द्वाद्वुन् वैरमैथुनिकयोः ॥ ३ । ३ । ९३ ॥ अण्छयोरपवादः । वैरे—अहिनकुलिका । वुन्नन्तस्य स्वभावात्स्त्रीलिङ्गता । मैथुनिकायां कुरुकासिका । देवासुरादिभ्यो वुनः प्रतिषेधो व० । दैवासुरम् । राक्षोसुरम् ।

वृद्धचरणाञ्चित् ॥ ३ । ३ । ९४ ॥ वृद्धवाचिनश्चरणवाचिनश्च वुन् ञिद्भवति । त्रिपिष्टायनेरिदं त्रैपिष्टायनकम् । चरणानि वेदशाखाः । तदध्येतारोपि कठादयः । चरणाद्धर्माम्नाययोरेवेष्यते । कठानां धर्म्म आम्नायो वा काठकः । अध्वर्योः समुदायवाचित्वान्न चरणत्वम् । आध्वर्यवम् ।

संघाङ्कलक्षणघोषेऽञ्यञिञामण् ॥ ३ । ३ । ९५ ॥ अञ्यञिञन्तादण् भवति संघादिष्वर्थेषु । वुञोपवादः । अञन्तात्-विदानां संघोङ्को घोषो वा वैदः । वैदं लक्षणम् । यञन्तात्-गार्गः संघोङ्को घोषो वा । गार्गं लक्षणम् । इञन्तात्-दाक्षः संघोङ्को घोषो वा । दाक्षं लक्षणम् । अणो णित्करणं ङ्यर्थं ञिद्वृदिति पुंवद्भावप्रतिषेधार्थं च । वेदी स्थूणा । लक्ष्म्यागतं चिह्नं लक्षणम् । बाह्यागतं चिह्नमङ्कः ।

शाकलाद्वा ॥ ३ । ३ । ९६ ॥ नित्ये वुञि प्राप्ते विभाषेयम् । शाकल्येन प्रोक्तमधीयते शाकलाः । शकलादिभ्य इत्यण् । तद्वेत्त्यधीते इत्यागतस्याण उप् प्रोक्तादित्युप् । शाकलानां संघोङ्को घोषो वा शाकलः, शाकलकः । शाकलं, शाकलकं वा लक्षणम् ।

छन्दोगौक्थिकयाज्ञिकवह्वृचनटाञ्ञ्यः ॥ ३ । ३ । ९७ ॥ वुञोपवादः । छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नटादणोपवादः । नाट्यम् ।

न दण्डमाणवान्तेवासिषु ॥ ३ । ३ । ९८ ॥ दण्डप्रधाना माणवा दण्डमाणवाः । आश्रमिणां रक्षापरिचरणविधायिन इत्यर्थः । दण्डमाणवेषु अन्तेवासिषु च वृद्धाद्यदुक्तं तन्न भवति । क्राण्व-

स्येमे काण्ठा दण्डमाणवा अन्तेवासिनो वा । वुञ्प्रतिषेधे शकलादिभ्य इत्यण् ।

रैवतिकादेश्छः ॥ ३ । ३ । ९९ ॥ एभ्यो वृद्धेभ्यश्छो भवति । रैवतिकस्येदं रैवतिकीयम् । वुञ्प्रतिषेधे दोऽछ इति प्राप्तः । तमपवाद्य संघाङ्केत्याणि प्राप्ते वचनम् ।

कौपिञ्जलहास्तिपदादण् ॥ ३ । ३ । १०० ॥ वृद्धलक्षणस्य वुञोपवादः । अपत्येर्थेऽणि पादस्य पद्भावे च कौपिञ्जलस्येदं कौपिञ्जलम् । एवं हास्तिपदम् ।

आथर्वणः ॥ ३ । ३ । १०१ ॥ आथर्वणिकशब्दादण् इकलं च निपात्यते । अथर्वणा प्रोक्तं छन्दोधीयते आथर्वणिकाः। अणि प्राप्ते उक्थादिषु पाठाट्ठण् । तेषां धर्म आम्नायो वा आथर्वणः।

इति शेषाधिकारः।

---

अथ विकाराधिकारः ।

तस्य विकारः ३ । ३ । १०२ ॥ तासमर्थाद्विकारेर्थे यथाविहितं त्यो भवति । अश्मनो विकार आश्मनः । दैवदारवः । प्रकृत्युपमर्दात्मक एव विकारोऽत्र ग्राह्यः । तेन नेह-पक्वमाम्रम् । तस्येति वर्तमाने पुनर्ग्रहणं शैषिकच्छादिनिवृत्त्यर्थम् ।

प्राण्योषधिवृक्षेभ्योऽवयवे च ॥ ३ । ३ । १०३ ॥ चाद्विकारे । चेतनावन्तः प्राणिनः । फलपाकान्ता ओषधयः । पुष्पवन्तः फलवन्तश्च वृक्षाः । कपोतस्य विकारोऽवयवो वा कापोतः। मूर्वाया विकारो मौर्वं भस्म, अवयवो वा काण्डम् । कारीरं भस्म काण्डं वा ।

**जातरूपेभ्यः परिमाणे** ॥ ३ । ३ । १०४ ॥ यत्रासंभवस्तत्रावयवार्थो न संबध्यते । जातरूपाचत्पर्यायेभ्यश्च विकारविशेषे परिमाणे यथाविहितं त्यो भवति । मयटोऽपवादः । जातरूपो निष्कः । हाटक कार्षापणम् । परिमाणाभावे वक्ष्यते मयट् ।

**प्राणितालादेः** ॥ ३ । ३ । १०५ ॥ प्राणिभ्यः–सारसस्य विकारोवयवो वा सारस मांसम् । मयटि नित्यं दुशरादेरिति च प्राप्ते तदपवादार्थमिदम् । तालादिभ्यः—ताल धनुः । तालाद्धनुष्येव । अन्यत्र तालमयम् ।

**त्रपुजतुनोः पुक्** ॥ ३ । ३ । १०६ ॥ आभ्यामण् भवति तत्संनियोगेन पुगागमश्च । त्रपुनो विकारस्त्रापुषम् । जातुषम् ।

**शम्या ट्लञ्** ॥ ३ । ३ । १०७ ॥ विकारावयवयोः । शामील भस्म । शामीली स्रुक् ।

**मयड्वैतयोरभक्ष्याच्छादनयोः** ॥ ३ । ३ । १०८॥ अभ्यवहार्यवसनवर्जितयोर्विकारावयवयोर्मृदो मयड् वा भवति । अश्ममयम् । सिकतामयम् । पक्षेऽण् । त्रपुमयम् । जतुमयम् । शमीमयम् । विकारावयवौ प्रकृतावेव तत्किमेतयोरिति पुनर्ग्रहणादनन्तरयोरपि बाधा । अन्यथोत्सर्गापवादकमेव स्यात् । अभक्ष्येति किम् ? मौद्ग सूप । कार्पास प्रावार. ।

**नित्यं दुशरादे.** ॥ ३ । ३ । १०९ ॥ दुभ्यः–आम्रस्य विकारोऽवयवो वा आम्रमयम् । शरादिभ्य.--शरमयम् । दर्भमयम् । आरम्भान्नित्यत्वे सिद्धे पुनर्ग्रहणमेकाचो नित्य यथा स्यात् । त्वङ्मयम् । विकारावयवार्थत्यमन्तात्पुनार्विकारावयवविवक्षाया

मूलप्रकृतेरेव त्यो, नतु त्यान्तात् । यथा पालाशस्य पालाशम् । तेनात्र न मयट् । यत्र त्वभिधानमस्ति तत्र तदन्तादपि । गोमयस्य गौमयम् ।

पिष्टात् ॥ ३ । ३ । ११० ॥ विकारे । भक्ष्यत्वादणोपवादः । पिष्टमयम् ।

कः खौ ॥ ३ । ३ । १११ ॥ पिष्टादेव । पिष्टकाःपूपाः ।

तिलयवादखौ ॥ ३ । ३ । ११२ ॥ नित्यं मयट् । तिलानां विकारोवयवो वा तिलमयम् । अखौ किम् ? तैलम् । यावकः । कोवियावादेरिति कः ।

गोव्रीहेः शकृत्पुरोडाशे ॥ ३ । ३ । ११३ ॥ गोमयं शकृत् । व्रीहिमयः पुरोडाशः । शकृदिति किम् ? गव्यं पयः । व्रैह ओदनः । तालादित्वादण् ।

क्रीतवत्परिमाणात् ॥ ३ । ४ । ११४ ॥ परिमाणं परिच्छेदनहेतुः । विकारेर्थे तस्मात्क्रीतार्थे इव त्या अतिदिश्यन्ते । शतेन क्रीतः शतिकः, शत्यः । एवं तद्विकारोपि शतिकः शत्य.। प्रास्थिक । कौडविकः ।

कोशैण्या ढञ् ॥ ३ । ३ । ११५ ॥ कोशाद्धले । कौशेयम् । ऐणेयम् । पुंस्यणेव । ऐणम् ।

उष्ट्राद्वुञ् ॥ ३ । ३ । ११६ ॥ प्राण्यणोपवादः । औष्ट्रकम् ।

वोमोर्णात् ॥ ३ । ३ । ११७ ॥ पक्षेऽण्मयटौ । औमकम्, औमम्, उमामयम् । और्णकम्, और्णम्, ऊर्णामयम् ।

गोपयसोर्यः ॥ ३ । ३ । ११८ ॥ गव्यम् । पयस्यम् ।

द्रोः ॥ ३ । ३ । ११९ ॥ अण्मयटोरपवादः । द्रुवृक्षः । तद्विकारोऽवयवो वा द्रव्यम् ।

माने वयः ॥३।३।१२०॥ पूर्वस्यापवादः । द्रुवयं मानम् ।

उप्फले ॥३।३।१२१॥ अवयवार्थस्य त्यस्योब्भवति फले । आमलक्या अवयवः फलमामलकम् । बदरम् । ह्रदुप्युबिति स्त्रीत्योप् ।

प्लक्षादिभ्योण् ॥ ३ । ३ । १२२ ॥ प्लक्षस्यावयवः फलं - प्लाक्षम् । उपोपवादोयम् । एवं नैयग्रोधम् । अत्र—

न्यग्रोधस्य केवलस्य ॥ ५ । २ । १० ॥ अस्यैयादेशो भवति नत्वैप् । इत्येप् ।

- जम्ब्वा वोश्च ॥ ३ । ३ । १२३ ॥ अस्मात्फले वोस् भवत्युप् च । चादण् । जम्ब्वाः फलं जम्बूः । मयट असि युक्तवत् । अणो वचनान्नोस् । जाम्बवम् । उपि जम्बु ।

हरीतक्यादेः ॥ ३ । ३ । १२४ ॥ उस् । हरीतक्याः फलं हरीतकी । पिप्पली । येषा पाकनिमित्तः शोपस्तेभ्यश्चोस् फले । व्रीहयः । यवाः । पुष्पमूलेषु बहुलम् । मल्लिकाया अवयवः पुष्पं मल्लिका । एवं जाती । बृहती । विदार्या मूलं विदारी । न च कचित् । किन्तूप् । पाटलानि पुष्पाणि । करवीरं पुष्पम् । कदम्बम् । कचिदुभयोरभावः । वैणवानि फलानि । जम्बूहरीतक्यादिषूसि लिङ्गमेव युक्तं न वचनम् ।

कांस्यपारशवौ ॥ ३ । ३ । १२५ ॥ निपात्येते । कंसीमपरशव्ययोर्यञणोः परतश्छययोरुम् ।निपात्यः । कंस्यार्थं कंसीयम् । परश्वर्थं परशव्यम् । तस्य विकारः कांस्यम् । पारशवम् ।

इति विकारार्थाः ।

अथ प्राग्वहतीयाः।

प्राग्वहतेष्ठण् ॥ ३ । ३ । १२६ ॥ तद्वहतीति यो वक्ष्यते तत· प्राक् ठणधिक्रियते।

तेन दीव्यति खनति जयति जितम् ॥ ३ । ३।१२७। भासमर्थाद्दीव्यत्यादिषु ठण् भवति। अक्षैर्दीव्यति आक्षिकः। कुदालेन खनति कौदालिकः। आभ्रिकः। शलाकाभिर्जयति जितं वा शालाकिकम्। करणे भा। नेह–देवदत्तेन जितम्।

संस्कृतम् ॥ ३ । ३ । १२८ ॥ दध्ना संस्कृतं दाधिकम्। शाङ्गवेरिकम्। संस्कृतं भक्ष्या इत्यत्र त्वाधारविवक्षा।

कुलत्थकोपान्त्यादण् ॥३।३।१२९॥ कौलत्थम्। दार्दरूकम्।

तरति ॥ ३ । ३ । १३० ॥ तेनेत्येव। काण्डप्लवेन तरति काण्डप्लविक.। गौपुच्छिकः।

नौद्व्यचष्ठः ॥ ३ । ३ । १३१ ॥ नावा तरति नाविक.। नाविका। प्लविकः।

चरति ॥ ३ । ३ । १३२ ॥ चरतिर्गत्यर्थो भक्ष्यार्थश्च। शकटेन चरति शाकटिक। दध्ना चरति दाधिकः।

पर्पादेष्ठट् ॥ ३ । ३ । १३३॥ तेनेति चरतीति च वर्तते। पर्प इत्येवमादिभ्यष्ठट् भवति। ठणोपवाद·। पर्पेण चरति पर्पिकः पर्पिकी। अश्विक. अश्विकी।

श्वगणाद्वा ॥ ३ । ३ । १३४ ॥ पक्षे ठण्। श्वगणेन चरति श्वगणिक:। श्वगणिकी। श्वागणिकः, श्वागणिकी। अत्र द्वारादित्वादौवादेशे प्राप्ते—

आदेशावऽतः ॥५।२।१२॥ आदेर्गोरिकारादौ त्ये द्वारादेरित्यैव् न भवति। इति प्रतिषेधः। इदमेव द्वारादौ तदादित्वज्ञापकम्।

वेतनादेर्जीवति ॥ ३ । ३ । १३५ ॥ तेनेत्येव। वेतनेन जीवति वैतनिकः। भार्तिकः।

वस्नक्रयविक्रयाट्टः ॥ ३ । ३ । १३६ ॥ वस्न मूल्यं तेन जीवति वस्निकः। क्रयिकः। विक्रयिकः। सगृहीतादपि। क्रयविक्रयिकः।

छश्चायुधात् ॥ ३ । ३ । १३७ ॥ चाट्टः। आयुधेन जीवति आयुधीयः। आयुधिकः।

हरत्युत्सङ्गादेः ॥ ३ । ३ । १३८ ॥ उत्सङ्गेन हरति औत्सङ्गिकः। पैटकिकः।

ठद् भस्त्रादेः ॥ ३ । ३ । १३९ ॥ भस्त्रया हरति भस्त्रिकः। भस्त्रिकी। भरटिकः।

वा विवधवीवधात् ॥ ३ । ३ । १४० ॥ पक्षे ठण्। विवधः पर्याहारः। तेन हरति विवधिकः, वैवधिकः। वीवधिकः, वैवधिकः। पृषोदरादित्वाद्वा दीत्वम्।

अण् कुटिलिकायाः ॥ ३ । ३ । १४१ ॥ कर्माराणामङ्गारापकर्षणी व्याधानां पलायमानोत्क्षेपणो दण्डः परिव्राजकानां त्रिदण्डधारणं वा कुटिलिका। तया हरति कौटिलिकः कर्मारो, व्याधः, परिव्राजकः।

निर्वृत्तेऽक्षद्यूतादेः ॥ ३ । ३ । १४२ ॥ अक्षद्यूतेन निर्वृत्ता आक्षद्यूतिका।

भावादिमः ॥ ३ । ३ । १४३ ॥ वक्ष्यते शुद्धो धात्वर्थो भाव। कुट्टेन निर्वृत्ता कुट्टिमा भूमिः। सेकिमोऽसिः। पाकिम ओदन।

त्रेः ॥३।३।१४४॥ वक्ष्यते भावे त्रिल्यः। पुनरारम्भ केवलस्य ऽयन्तस्य वाक्यत्वनिवृत्त्यर्थः। पाकेन निर्वृत्तः पक्त्रिमः। कृत्रिमः।

नित्यम् ॥ ३ । ३ । १४५ ॥ यथान्ये भाववाचिनो निर्वृत्तार्थादन्यत्रापि प्रयुज्यन्ते तथा नायं, किन्तु नित्यमिमविषय एवेति नियमार्थमिदम्।

याचितापमित्यात्कण् ॥ ३ । ३ । १४६ ॥ याचितेन निर्वृत्तं याचित कम्। अपमित्य निर्वृत्तमापमित्यकम्। ल्यबन्तत्वेनाभान्तत्वेपि वचनसामर्थ्यात्त्यः।

संसृष्टे ॥ ३ । ३ । १४७ । दध्ना ससृष्ट दाधिकम्।

चूर्णादिन.। चूर्णैन संसृष्टाश्चूर्णिनोऽपूपा.। लवणेन संसृष्टमित्यत्र न भवत्यनभिधानात्। लवण शाकमित्यादिप्रयोगस्तु गुणवाचकस्य शब्दस्य द्रव्येण योगे तद्वाचकत्वसंभवाद्बोध्यः। यथा कषायमुदकम्।

मुद्गादण् ॥ ३ । ३ । १४८ ॥ मौद्ग ओदनः।

व्यञ्जनैरुपसिक्ते ॥ ३ । ३ । १४९ ॥ दध्नोपसिक्तं दाधिक भक्तम्। घार्तिक. सूपः। स्वरूपनिरासार्थो बहुत्वनिर्देश।

ओजःसहोऽम्भसा वर्तते ॥ ३ । ३ । १५० ॥ ओजसा वर्तते औजसिकः। साहसिक। आम्भसिकः।

तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ ३ । ३ । १५१ ॥ इप्समर्थेभ्यः प्रत्यनुपूर्वेभ्य ईपलोमकूलेभ्यो वर्तते इत्यर्थे ठण् भवति।

प्रतीपं वर्तते प्रातीपिकम्। प्रातिलोमिकम्। आनुलोमिकम्। प्रातिकूलिकम्। आनुकूलिकम्।

परिमुखम् ॥ ३ । ३ । १५२ ॥ परिमुखं वर्तते पारिमुखिकश्चौरः। परिपार्श्वाचेति व०। पारिपार्श्विकः।

प्रयच्छति गर्ह्यम् ॥ ३ । ३ । १५३ ॥ इप्समर्थात्प्रयच्छतीत्यर्थे ठण् भवति यदिप्समर्थं गर्ह्यं चेत्तद्भवति। द्विगुणं प्रयच्छति द्वैगुणिकः। द्विगुणं त्रिगुणं वा कर्तुं प्रयच्छतीत्यर्थः। वृद्धेष्ठणि वृद्धार्षिभावो व०। वृद्धिं प्रयच्छति वार्द्धुषिकः।

कुसीददशैकादशाट्टठौ ॥ ३ । ३ । १५४ ॥ तत्प्रयच्छति गर्ह्यं एव। कुसीदमृणं वृद्धिर्वा। तदर्थं द्रव्यमपि कुसीदम्। तत्प्रयच्छति कुसीदिकी। कुसीदिका। एकादशार्थो दश दशैकादशाः। निपातनात्सः। दशैकादशिकी। दशैकादशिका।

रक्षत्युञ्छति ॥ ३ । ३ । १५५ ॥ नगरं रक्षति नागरिकः। नीवाराण्युञ्छति नैवारिकः।

शब्ददर्दुरं करोति ॥ ३ । ३ । १५६ ॥ शब्दं करोति शाब्दिको वैयाकरणः। दार्दुरिकः कुम्भकारः। तदित्यधिकारात्सिद्धे पुनरिवुपादानं लौकिकप्रयोगानुसरणार्थम्। नेह—शब्दं करोति वायसः। अस्मिन्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यातव्यम्। माशब्द इत्याह माशब्दिकः। प्रभूतादिभ्यश्च। प्रभूतमाह प्राभूतिकः। पार्याप्तिकः। पृच्छतौ सुस्नातादिभ्यः। सुस्नातं पृच्छति सौस्नातिकः। गच्छतौ परदारादिभ्यः। परदारान् गच्छति पारदारिकः। गौरुतल्पिकः।

**पक्षिमत्स्यमृगान्हन्ति** ॥ ३ । ३ । १५७ ॥ स्वरूपस्य पर्यायाणां तद्विशेषाणां चेह ग्रहणम् । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । तैत्तिरिकः । मात्स्यिकः । मैनिकः । साफरिकः । मार्गिकः । हारिणिकः । सौकरिकः । सारङ्गिकः ।

**परिपन्थं तिष्ठति** ॥ ३ । ३ । १५८ ॥ परिपन्थशब्दादिप्समर्थात्तिष्ठतीत्यर्थे ठण् भवति । परिपन्थं तिष्ठति पारिपन्थिकश्चौरः । पन्थानं वर्जयित्वा व्याप्य वा तिष्ठतीत्यर्थः । हन्तीत्यपि वक्तव्यम् । परिपन्थं हन्ति पारिपन्थिकः ।

**माथद्युपदव्यनुपदाक्रन्दं धावति** ॥ ३ । ३ । १५९ ॥ माथः मार्गः । माथद्यु, दण्डमाथं धावति दाण्डमाथिकः । मौलमाथिकः । पदस्य वी पदवी । सर्वतोऽक्त्यर्थादिति ङी । पदवीं धावति पादविकः । पदस्य पश्चाद्धावति आनुपादिकः । आक्रन्दिकः ।

**पदद्योर्ग्रहणाति** ॥ ३ । ३ । १६० ॥ आदिपदं गृह्णाति आदिपदिकः । पौर्वपदिकः । औत्तरपदिकः ।

**प्रतिकण्ठललामार्थात्** ॥ ३ । ३ । १६१ ॥ गृह्णात्यर्थे । कण्ठं प्रतीति हसः । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । पुरुषध्वजभृङ्गेषु हविर्भूषणलक्ष्मसु । वामश्रेष्ठावनीन्द्रेषु ललामं नवसु स्मृतम् ॥ १ ॥ लालामिकः । आर्थिकः ।

**धर्मं चरति** ॥ ३ । ३ । १६२ ॥ समर्थविभक्त्युपादानादासेवायामेव । मुहुर्मुहुर्धर्मं चरति धार्मिकः । अधर्माच्चेति वक्तव्यम् । आधार्मिकः ।

प्रतिपथमेति ठश्च ॥ ३ । ३ । १६३ ॥ प्रतिपथशब्दाद्वीप्समर्थादेतीत्यर्थे ठो भवति ठण् च । प्रतिपथमेति प्रतिपथिकः । प्रातिपथिकः ।

समवायान् समवैति ॥ ३ । ३ । १६४ ॥ बहुत्वनिर्देशात्तस्य तत्पर्यायाणां च ग्रहणम् । समवायान्समवैति सामवायिकः । सामूहिकः । सामाजिकः ।

परिषदो ण्यः ॥३।३।१६५॥ परिषदं समवैति पारिषद्यः ।

सेनाया वा ॥ ३ । ३ । १६६ पक्षे ठण् । सेनां समवैति सैन्यः । सैनिकः ।

लालाटिककौक्कुटिकौ ॥ ३ । ३ । १६७ ॥ पश्यतीत्यर्थे एतौ निपात्यौ । ललाटं पश्यति लालाटिकः सेवकः । कुक्कुटीशब्देन कुक्कुटीपातमात्रो देशो गृह्यते । कुक्कुटीं पश्यति कौक्कुटिको भिक्षुः ।पुरो युगमात्रदेशमेक्षीत्यर्थः ।

तस्य धर्म्यम् ॥ ३ । ३ । १६८ ॥ शुल्कशालाया धर्म्यं न्याय्यं शौल्कशालिकम् । आपणिकम् ।

ऋन्महिष्यादेरण् ॥ ३ । ३ । १६९ ॥ ठणोपवादः । ऋदन्तात्–मातुर्धर्म्यं मात्रम् । शास्त्रम् । महिष्यादिभ्यः–माहिषम् । नारी । विशसितुरिटः खं च (ग) । वैशस्त्रम् । विभाजयितुर्णिखं (ग.) च । वैभाजित्रम् ।

अवक्रयः ॥ ३ । ३ । १७० ॥ तासमर्थाट्ठण् भवत्यवक्रये । अन्याय्यमपि स्वेच्छया परिकल्पितपरिमाणमेकत्र पिण्डितं द्रव्यमवक्रयः । शुल्कशालाया अवक्रयः शौल्कशालिकः ।

तदस्य पण्यम् ॥ ३ । ३ । १७१ ॥ शष्कुली पण्यमस्य शाष्कुलिकः ।

किसरादेष्ठट् ॥ ३ । ३ । १७२ ॥ किसरं पण्यमस्य किसरिकः । गन्धिकः ।

शलालुनो वा ॥ ३ । ३ । १७३ ॥ पक्षे ठण् । शलालु पण्यमस्य शलालुकः, शालालुकः ।

शिल्पम् ॥ ३ । ३ । १७४ ॥ शिल्पक्रियायां तच्छब्द उपचर्यते । मृदङ्गवादने मृदङ्गः । स शिल्पमस्य मार्दङ्गिकः । वैणविकः ।

मड्डुकझर्झराद्वाण् ॥ ३ । ३ । १७५ ॥ पक्षे ठण् । मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ।

प्रहरणम् ॥ ३ । ३ । १७६ ॥ असिः प्रहरणमस्य आसिकः । त्सारुकः ।

शक्तियष्टेष्टीकण् ॥ ३ । ३ । १७७ ॥ शक्तिः प्रहरणमस्य शाक्तीकः । याष्टीकः । दीर्घोच्चारणं किम् ? अन्यत्रापि यथा स्यात् । आम्भसीकः । ऐषीकः । भवेऽपि । बहिर्भवो बाहीकः ।

नास्तिकास्तिकदैष्टिकाः ॥ ३ । ३ । १७८ ॥ एते निपात्यन्ते । परलोको नास्तीति मतिर्यस्येति नास्तिकः । परलोकोऽस्तीति मतिर्यस्येत्यास्तिकः । दिष्टं दैवं प्रमाणमस्येति दैष्टिकः ।

शीलम् ॥ ३ । ३ । १७९ ॥ मोदकभक्षणं शीलमस्य मौदकिकः ।

छत्रादेर्णः ॥ ३ । ३ । १८० ॥ क्षत्रमावरणं, तद्वद्गुरुकार्येष्ववहितत्वम् । तच्छीलमस्य छात्रः । शैक्षः ।

कर्माध्ययने वृत्तम् ॥ ३ । ३ । १८१ ॥ वासमर्थार्थे ठण् भवति यद्वासमर्थं कर्म चेद्वृत्तमध्ययनविषयं तत् । एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः ॥ किं पुनस्तदेकमन्यदध्ययने कर्म ? अपपाठः । एवं द्वैयान्यिकः ।

बह्वजादिक्षुः ॥ ३ । ३ १८२ ॥ पूर्वविषये एव । द्वादशान्यानि अपपाठलक्षणान्यध्ययने कर्माणि वृत्तानि यस्य द्वादशान्यिकः ।

हितमस्मै भक्षाः ॥ ३ । ३ । १८३ ॥ वासमर्थादर्थे ठण् भवति यद्वासमर्थं हितं भक्षाश्चेत्तत् । शष्कुलीभक्षणं हितमस्मै शाष्कुलिकः ।

तद्दीयते नियुक्तम् ॥ ३ । ३ । १८४ ॥ श्राणा नियुक्तं नित्यं दीयतेऽस्मै श्राणिक. । साक्तवोदनिकः ।

भक्ताद्वाण् ॥ ३ । ३ । १८५ ॥ पक्षे ठण् । भक्तं नियतं दीयतेस्मै भाक्तो भाक्तिको वा ।

तत्र नियुक्तः ॥ ३ । ३ । १८६ ॥ शुल्कशालायां नियुक्तोऽधिकृतः शौल्कशालिकः ।

ठोऽगारान्तात् ॥ ३ । ३ । १८७ ॥ भाण्डागारे नियुक्तो भाण्डागारिकः ।

अध्यायिन्यदेशकालात् ॥ ३ । ३ । १८८ ॥ अध्येतुं शीलमस्येत्यध्यायी । तदभिधानेऽध्ययनाय प्रतिषिद्धाद्देशवाचि-

नः कालवाचिनश्च ठण् भवति । अशुचावधीते आशुचिकः । संध्यावेलायामधीते सान्ध्यावेलिकः । अदेशेति किम् ? चैत्यालये पूर्वाह्णे वाधीते ।

**कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥३।३। १८९॥** वृद्धकठिने व्यवहरति अनुतिष्ठति वार्द्धकठिनिकः । प्रास्तारिकः । सांस्थानिकः ।

**निकटावसथे वसति ॥ ३ । ३ । १९० ॥** निकटे वसति नैकटिकः । आवसथिकः ।

इति प्राग्वहतीयाः ।

---

## अथ तद्वहतीयाः ।

**तद्वहति रथयुगप्रासङ्गाद्यः॥ ३ । ३ । १९१ ॥** य इत्यापादपरिसमाप्तेरधिकारः । तदिति इप्समर्थेभ्यो रथयुगप्रासङ्गशब्देभ्यो वहतीत्यर्थे यो भवति । रथं वहति रथ्यः । युग्यः । दम्यानां स्कन्धकाष्ठं प्रासङ्गः । प्रासङ्ग्यः । रथाद्य इति सिद्धे रथग्रहणं तदन्तार्थम् । द्विरथ्यः । अन्यथा प्राग्द्वीयस्य रस्योऽनपत्ये इत्युप् प्रसज्येत ।

**धुरो ढण् वा ॥ ३ । ३ । १९२ ॥** पक्षे य । धुरं वहति धौरेयः । अभकुर्छुर इति प्रतिषेधात्र दीः । धुर्यः ।

**सर्वैकाभ्यां ख ॥ ३ । ३ । १९३ ॥** सर्वा धूः सर्वधुरा । ऋक्पू इत्यः । ता वहति सर्वधुरीणः । एकधुरीणः । एकधुरास्तस्योऽवक्तव्यः, एकधुरा वहति एकधुर इति, न वक्तव्यः,

एकस्या धुरो वोढेत्यागतस्याणो ख्योबनपत्ये इत्युपि सिद्धत्वात् । इष्टसंग्रहार्थं व्यवस्थितविभाषार्थो वानुवर्त्यः । तेन उत्तरधुरीणः ।

**विध्यत्यकरणेन ॥ ३ । ३ । १९४ ॥** इप्समर्थाद्यो भवति विध्यतीत्यर्थे, न चेत्तत्र करणमपेक्ष्यम् । पादं विध्यन्ति पथ्याः[1] शर्कराः। प्रतीयमानेऽपि करणेऽनभिधानान्न । शर्कं विध्यति ।

**जन्यधेनुष्याग्रवश्यवन्यगण्यपद्यमूल्यहृद्यसतीर्थ्यगार्हपत्याः ॥ ३ । ३ । १९५ ॥** एते निपात्यन्ते । जनीं वधूं । तां वहति जन्यः । परिणेतृसहायानामियं संज्ञा । प्रकृष्टा धेनुर्धेनुष्या । यः पुगागमश्च निपात्यः । अग्रं लब्धा आग्रः । अग्राण्णः । वशगतो वश्यः । वनगणाभ्यां लब्धरि यः । वनं लब्धा वन्यः । गणं लब्धा गण्यः । पदमस्मिन्दृश्यते इति यः । पद्यः कर्दमः । मूलमस्यावर्हीत्यस्मिन्वाक्ये यः । मूल्यो मीषः[2] । मूलोत्पाटेन संमाद्य इत्यर्थः । अथवा मूलेन सम आनाम्यो वा मूल्यः पटः । हृदयस्य प्रिय इति यः । हृद्यः । हृदयस्य हृल्लेखेति हृदादेशः । समाने तीर्थे वसतीत्यर्थे यः । समानस्य च सः । सतीर्थ्यः। गृहपतिना संयुक्त इति संज्ञायां ञ्यः । गार्हपत्योऽग्निः।

**वयस्तुलाभ्यां सम्मिते ॥ ३ । ३ । १९६ ॥** वयसा सम्मितो वयस्यः । संज्ञायामेव । नेह वयसा सम्मितः शत्रुः । तुलया सम्मितस्तुल्यः । सदृश इत्यर्थः ।

**नौधर्मविषसीताभ्यस्तार्यप्राप्तवध्यसमितेषु ॥ ३ । ३ । १९७ ॥** नावा तार्यं नाव्यमुदकम् । प्राक्तनेन धर्मेण प्राप्तं ध-

---

१ पथे इति पादस्य पदादेशः । २ आवर्हणमावर्हः उत्पाटनं तदर्हत्यास्तीति आवर्हि मूलमावर्हि येषां ते मूल्या माषाः।

र्यम् । विषेण वध्यो विष्यः । सीतया सम्मितं संगतं सीत्यं क्षेत्रम् । रथसीताहलेभ्यो यविधौ तदन्तविधिरपीष्यते । परमसीत्यम् ।

धर्मपथ्यर्थन्यायादनपेते ॥ ३ । ३ । १९८ ॥ निर्देशादेव समर्थविभक्त्युपादानम् । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ।

छन्दसा निर्मिते ॥ ३ । ३ । १९९ ॥ छन्दसा इच्छया निर्मितश्छन्दस्यः ।

उरसाऽण् च ॥ ३ । ३ । २०० ॥ चाद्यः । उरसा निर्मित औरसः, उरस्यः ।

मदजनहलात्करणजल्पकर्षेषु ॥ ३ । ३ । २०१ ॥ करणादयो भावे करणे वा व्युत्पाद्याः । मदस्य करणं मद्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । मतशब्दं केचित्पठन्ति । मत्यम् ।

तत्र साधुः ॥ ३ ॥ ३ ॥ २०२ ॥ सामनि साधुः सामन्यः । येऽड्ाविति वक्ष्यते । तेनानः लं न । एवं कर्मण्यः । सभ्यः । शरण्यः ।

प्रतिजनादेः खञ् ॥ ३ । ३ । २०३ ॥ जनं जनं प्रति प्रतिजनम् । तत्र साधुः प्रातिजनीनः । ऐदंयुगीनः ।

भक्ताण्णः ॥३ । ३ ।२०४॥ भक्ते साधुर्भाक्तस्तण्डुलः ।

परिषदो ण्यः ॥ ३ । ३ । २०५ ॥ परिषदि साधुः पारिषद्यः । अनुवृत्तेर्योगविभागाद्वा णोऽपि । पारिषदः ।

कथादेष्ठण् ॥ ३ । ३ । २०६ ॥ कथायां साधुः का-

थिकः। गौडिकः।

पथ्यातिथिवसतिस्वपतेर्ढञ् ॥ ३ । ३ । २०७ ॥ पथि साधु पाथेयम्। आतिथेयम्। वासतेयम्। स्वापतेयम्।

समानोदरे शयितः ॥ ३ । ३ । २०८ ॥ समानोदरे शयितः समानोदर्यः। समानस्येति योगविभागाद्वा सादेशे सोदर्यः।

इति तद्धहतीयाः।

## अथ छयाधिकारः।

प्राक् ठणश्छः ॥ ३ । ४ । १ ॥ आर्हाट्ठणित्यतः प्राक् छाधिकारः।

उगवादेर्यः ॥ ३ । ४ । २ ॥ उवर्णान्ताद्गवादिभ्यश्च यो भवति प्राक्ठणोर्थेषु। छस्यापवादः। अर्थविशेषो वक्ष्यते। शङ्कव्यं दारु। गव्यम्। हविष्यम्। नाभि नभं च (ग.)। नभ्योऽक्षः। नभ्यमञ्जनम्। शुनो जिर्वा च दीत्वम्। शून्यं, शुन्यम्। ऊधसोऽनङ् च (ग.)। ऊधन्यः।

हविरपूपादेर्वा ॥ ३ । ४ । ३ ॥ पक्षे छः। हविःशब्दस्तु गवादौ पठितः। इह तद्विशेषाणां ग्रहः। आमिक्ष्यम्, आमिक्षीयं दधि। पुरोडाश्याः पुरोडाशीयास्तण्डुलाः। अपूप्यम्, अपूपीयम्। अन्नविकारेभ्यश्च (ग.)। ओदन्याः, ओदनीयाः। न विस्ताचितकम्बल्यादिति निपातनात्कम्बलात्सुविषये नित्यमेव यः। कम्बल्यमूर्णाशतम्। असौ तु कम्बलीयाः।

१ स्वनाभ्योर्वेद्रन्।

तस्मै हितम् ॥ ३ । ४ । ४ ॥ शङ्कवे हितं शङ्कव्यम् ।

प्राण्यङ्गरथखलयवमाषट्पत्रह्मातिलाद्यः ॥ ३। ४ ।५॥ छापवादः । दन्तेभ्यो हितं दन्त्यम् । चक्षुष्यम् । नाभ्यं तैलम् । रथाय हिता रथ्या भूमिः । खल्यम् । यव्यम् । माष्यम् । ब्रह्मण्यम् ।

अजाविभ्यां थ्यः ॥ ३ । ४ । ६ ॥ अजथ्यम् । अविथ्यम् । लिङ्गविशिष्टस्यापि पुंवद्भावे तदेव रूपम् ।

विश्वजनात्मन्भोगान्तात्खः ॥ ३ । ४ । ७ ॥ विश्वजनाय हित विश्वजनीनो जिन । नोऽपुसो इतीति टिलं प्राप्तं नान्तोच्चारणसामर्थ्यान्न भवति । आत्मनीनम् । मातृभोगीण. । पितृभोगीणः। राजाचार्याभ्यां भोगान्ताभ्यां नित्यमिति व०। राजभोगीनम् । आचार्यभोगीनम् । क्षुभ्नादिषु पाठादणत्वम् । पञ्चजनादुपसंख्यानम् । पञ्चजनीनम् । सर्वजनाट्टण् खश्च व० । सार्वजनिकः, सर्वजनीन । महाजनाट्ठञ् व० । माहाजनिकम् ।

सर्वाण्णो वा ॥ ३ ।४ ।८॥ सर्वस्मै हित सार्व, सर्वीयम् ।

पुरुषाड्ढण् ॥ ३ । ४ । ९॥ पौरुषेयम् । वधविकारसमूहतेनकृतेष्वेव व० ।

माणवचरकात्खञ् ॥ ३ । ४ । १० ॥ माणवाय हित माणवीनम् । चारकीणम् ।

तदर्थं विकृतेः प्रकृतौ ॥३।४।११॥ तदर्थं समानजातीयमभिन्नसतानवर्ति कारण प्रकृति । तदवस्थान्तरमेव विकृति । तद्वा-

---

१ योग्यतावशादिह तादर्थ्यविभक्ता गृह्यते । पुरुषस्य वधः पौरुषेयम् ।

चिनोऽवन्तात्तदर्थायां प्रकृतावभिधेयायां यथाविहितं त्यो भवति। अङ्गारेभ्य इत्यङ्गारीयाणि काष्ठानि। शङ्कव्यं दारु। अपूप्या, अपूपीयास्तण्डुलाः। तदर्थे किम्? मूत्राय यवागूः। विकृतेः किम्? उदकार्थः कूपः।

छदिरुपधिबलेर्ढञ् ॥ ३। ४। १२ ॥ पूर्वविषये। छदिरर्थानि छादिषेयाणि तृणानि। इह पूर्वनिर्णयेन चर्मणोऽञिति बाधित्वा ढञ्। छादिषेयं चर्म। उपध्यर्थमुपधेयं दारु। बालेयास्तण्डुलाः।

ऋषभोपानहो ञ्यः ॥ ३। ४। १३ ॥ ऋषभार्थे आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। औपानह्यं चर्म।

चर्मणोऽञ् ॥ ३। ४। १४ ॥ वर्ध्र्यर्थमिदं वार्ध्रं चर्म। सनङ्गव्यं चर्मेत्यत्र तु पूर्वनिर्णयेनोवर्णान्तलक्षणो यः।

तदस्यास्मिन्नितीति ॥ ३। ४। १५ ॥ तादर्थ्यं नेह विवक्षितं किन्तु योग्यतामात्रम्। प्रासादोऽस्य स्यात् प्रासादीयं दारु। प्राकारीया इष्टकाः। प्रासादोऽस्मिन्स्यात् प्रासादीयो देशः। इतिकरणाद्यत्र सम्बन्धविवक्षा तत्र मत्वर्थीयः। अस्य संभावनेऽभिधानम्। तेन मत्वर्थीयाद्भेदः। अत एव प्रासादो देवदत्तस्य स्यादित्यत्र न।

परिखाया ढञ् ॥ ३। ४। १६ ॥ परिखास्मिन्देशे स्यात् पारिखेयः। पारिखेयी भूमिः।

इति छयाधिकारः।

---

१ छाद्यतेऽनेनेति विग्रहे अर्चिशुचीत्यादिना इसि पूर्वस्य प्रः, सस्य षत्वे छदिष् स्यते। २ इह मत्वान्न भवति प्रासादो देवदत्तस्य स्यादिति इतिकरणादविवक्षात्र।

## अथार्हीयाः ।

आर्हादृण् ॥ ३ । ४ । १७ ॥ तदर्हतीत्येतत्पर्यन्तं ठणधिक्रियते ।

शतादस्वार्थेऽसे ठयौ ॥ ३ । ४ । १८ ॥ को वक्ष्यते तदपवादोयम् । शतेन क्रीतं शतिकं, शत्यम् । अस्वार्थे किम्? शतं परिमाणमस्य शतकं स्तोत्रम् । नात्र प्रकृत्यर्थादर्थान्तरं स्वार्थः समुदायः । असे किम्? द्वौ च शतं च द्विशतम् । तेन क्रीतं द्विशतकम् । द्वाभ्यां शताभ्यां क्रीतमित्यत्र तु ठादुपि नास्ति विशेषः । सत्यविधौ तदन्तविधेरभावेप्यसग्रहणं 'प्राग्वतेः संख्यापूर्वपदानामनुपि तदन्तग्रहणस्य' ज्ञापकम् । तेन द्वैपारायणिकः । असे तु द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशौर्पिकम् । अत्र न शूर्पाद्वेति किन्तु ठणेव । अत एवेतः पूर्वस्य तदन्तविधेर्ज्ञापनम् । तेनागव्यम् ।

संख्यायाः कोऽतिशतः ॥ ३ । ४ । १९ ॥ त्यन्तशदन्तभिन्नायाः संख्यायाः को भवत्यार्हीयेर्थे । पञ्चभिः क्रीतः पञ्चकः । बहुकः । अतिशतः किम्? षाष्टिकः । चात्वारिंशत्कः । अर्थवतस्तेर्ग्रहणान्नेह, कतिकः ।

वतोर्वेट् ॥ ३ । ४ । २० ॥ वतो परस्य कस्येड्वा भवति । यावता क्रीतो यावतिकः, यावत्कः ।

विंशतित्रिंशद्भ्यां ड्वुरखौ ॥ ३ । ४ । २१ ॥ विंशत्या क्रीतो विंशकः । अत्र तेः खेऽसिद्धवदिति टिखप्रतिषेधः । तत

एप्यतोऽपदे इति पररूपम्। त्रिंशकः। स्त्रौ तु परिमाणादिति के विंशतिकः। त्रिंशत्कः। अतिशत 'इति प्रतिषेधो न स्यात्, ' विंशतित्रिंशद्भ्या 'मिति योगविभागकरणसामर्थ्यात्।

कंसाट्टट् ॥ ३।४।२२ ॥ ठणोपवादः। कंसिकः। टित्वान्ङी। कंसिकी। अर्धाच्च व०। अर्धिकी।

कार्षापणाद्वा प्रतिश्च ॥ ३।४।२३ ॥ अस्माद्वा ठट् भवति; तत्र प्रकृतेर्वा प्रतिरादेशश्च। कार्षापणिकः। कार्षापणिकी। प्रतिकः। प्रतिकी।

शतमानविंशतिकसहस्रवसनादण् ॥ ३।४।२४ ॥ ठण्कयोरपवादः। शातमानम्। वैंशतिकम्। साहस्रम्। वासनम्।

शूर्पाद्वा ॥ ३।४।२५ ॥ पक्षे ठण्। शूर्पं परिमाणनाम। तेन क्रीतं शौर्पं, शौर्पिकम्।

रादुबखौ ॥ ३।४।२६ ॥ रहेतुभूतस्यार्हीयस्याखुविषयस्यस्योब्भवति। द्विकंसेन क्रीतं द्विकंसम्। संख्यापूर्वपदानां तदन्तविधिना कंसाट्टट्। तस्योप्। द्विशूर्पम्। संख्यासंज्ञाविधाने अध्यर्धग्रहणं कर्तव्यमिति ठट उप्। अध्यर्धकंसेन क्रीतमध्यर्धकंसम्। रहेत्विति किम्? द्विशूर्पेण पटेन क्रीतं द्विशौर्पिकम्। अखौ किम्? पाञ्चलौहितिकम्। परिमाणात्संख्यायामिति ठण्। अत्र–

संख्यायाः संख्यासंवत्सरस्य ॥ ५।२।२७ ॥ संख्यायाः परस्य संख्याशब्दस्य संवत्सरस्य च धोरचामादेरच् पैब्भवति। इति प्राप्तस्य–

परिमाणान्तस्येति उत्तरपरवार्तिकं।

**परिमाणस्याखुशाणे** ॥ ५ । २ । २२ ॥ सख्यायाः परस्य परिमाणस्य खुविषयस्यैव धोराचेन् नान्यत्र । इति प्रतिषेधे आचैप् ।

**कार्षापणसहस्रसुवर्णशतमानाद्वा** ॥ ३ । ४ । २७ ॥ उप् । द्विकार्षापणम् । द्विकार्षापणिकम् । अनुपि तदन्तग्रहणम् । द्विपतिकम् । द्विसहस्रम् । पक्षे सख्याया इति चोरैपि द्विसाहस्रम् । द्विसुवर्णम् । द्विसौवर्णिकम् । द्विशतमानम् । अध्यर्धेप्येवम् ।

**द्वित्रिवहोर्निष्कवित्तात्** ॥ ३ । ४ । २८ ॥ वोप् । द्विनिष्क, द्विनैष्किकम् । त्रिनिष्क, त्रिनैष्किकम् । बहुनिष्क, बहुनैष्किकम् । द्विवित्तं, द्विवैत्तिकम् । एव त्रिबहुपूर्वकत्वेपि ।

**विंशतिकात्ख·** ॥ ३ । ४ । २९ ॥ विंशतिकान्तादात् खो भवत्यार्हीयेर्थे । द्विविंशतिकीन । वचनादेव खस्य नोप् ।

**खारीकाकणीभ्यां कप्** ॥ ३ । ४ । ३० ॥ रादेव । द्वाभ्या खारीभ्या क्रीत द्विखारीकम् । द्विकाकणिकम् । केवलाभ्यां च व० । खारीकम् । काकणीकम् ।

**पणपादमाषाद्यः** ॥ ३ । ४ । ३१ ॥ द्वाभ्यां पणाभ्या क्रीत द्विपण्यम् । पादान्तस्य खे कृते पाद" पदिति प्राप्ते —

**असिद्धवदत्राभात्** ॥ ४ । ४ । २१ ॥ इतः परमासिद्धवदित्यधिक्रियते आ भसशब्दनात् । इत्यसिद्धत्वान्नापद्ये इत्यादिपदादेशस्तु न स्यात्तत्र केवलस्यैव विधानात् । द्विपाद्यम् । द्विमाष्यम् ।

**शताद्वा** ॥ ३ । ४ । ३२ ॥ पक्षे ठण् । तस्योप् । द्विशत्य, द्विशतम् ।

एप्यतोऽपदे इति पररूपम्॥ त्रिंशकः। खौ तु परिमाणादिति के विंशतिकः। त्रिंशत्कः। अतिशव इति प्रतिषेधो न स्यात्, विंशतित्रिंशद्भ्या मिति योगविभागकरणसामर्थ्यात्।

कंसाट्टट् ॥ ३।४।२२ ॥ ठणोपवादः। कंसिकः। टित्वान्ङी। कंसिकी। अर्धाच्च व०। अर्धिकी।

कार्षापणाद्वा प्रतिश्च ॥ ३।४।२३ ॥ अस्माद्वा ठट् भवति; तत्र प्रकृतेर्वा प्रतिरादेशश्च। कार्षापणिकः। कार्षापणिकी। प्रतिकः। प्रतिकी।

शतमानविंशतिकसहस्रवसनादण् ॥ ३।४।२४ ॥ ठण्कयोरपवादः। शातमानम्। वैंशतिकम्। साहस्रम्। वासनम्।

शूर्पाद्वा ॥ ३।४।२५ ॥ पक्षे ठण्। शूर्पं परिमाणनाम। तेन क्रीतं शौर्पं, शौर्पिकम्।

रादुबखौ ॥ ३।४।२६॥ रहेतुभूतस्यार्हीयस्याखुविषयस्योब्भवति। द्विकंसेन क्रीतं द्विकंसम्। संख्यापूर्वपदानां तदन्तविधिना कंसाट्टट्। तस्योप्। द्विशूर्पम्। संख्यासंज्ञाविधाने अध्यर्धग्रहणं कर्तव्यमिति ठट उप्। अध्यर्धकंसेन क्रीतमध्यर्धकंसम्। रहेत्विति किम्? द्विशूर्पेण पटेन क्रीतं द्विशौर्पिकम्। अखौ किम्? पाञ्चलौहितिकम्। परिमाणात्संख्यायामिति ठण्। अत्र—

संख्यायाः संख्यासंवत्सरस्य ॥ ५।२।२७ ॥ संख्यायाः परस्य संख्याशब्दस्य संवत्सरस्य च ञ्णोरचामादेरच ऐब्भवति। इति प्राप्तस्य—

परिमाणान्तस्येति उत्तरपदवृद्धि.।

**परिमाणस्यासुशाणे** ॥ ५ । २ । २२ ॥ सङ्ख्यायाः परस्य परिमाणस्य सुविषयस्यैव चोराचैन् नान्यत्र । इति प्रतिषेधे आचैप् ।

**कार्षापणसहस्रसुवर्णशतमानाद्वा** ॥ ३ । ४ । २७ ॥ उप् । द्विकार्षापणम् । द्विकार्षापणिकम् । अनुपि तदन्तग्रहणम् । द्विपतिकम् । द्विसहस्रम् । पक्षे सङ्ख्याया इति चोरैपि द्विसाहस्रम् । द्विसुवर्णम् । द्विसौवर्णिकम् । द्विशतमानम् । अध्यर्धेप्येवम् ।

**द्वित्रिबहोर्निष्कविस्तात्** ॥ ३ । ४ । २८ ॥ वोप् । द्विनिष्क, द्विनैष्किकम् । त्रिनिष्क, त्रिनैष्किकम् । बहुनिष्क, बहुनैष्किकम् । द्विविस्तं, द्विवैस्तिकम् । एवं त्रिबहुपूर्वकत्वेपि ।

**विंशतिकात्ख** ॥ ३ । ४ । २९ ॥ विंशतिकान्ताद्रात् खो भवत्यार्हीयेर्थे । द्विविंशतिकीन । वचनादेव खस्य नोप् ।

**खारीकाकणीभ्यां कप्** ॥ ३ । ४ । ३० ॥ रादेव । द्वाभ्यां खारीभ्यां क्रीतं द्विखारीकम् । द्विकाकणीकम् । केवलाभ्यां च व० । खारीकम् । काकणीकम् ।

**पणपादमाषाद्यः** ॥ ३ । ४ । ३१ ॥ द्वाभ्यां पणाभ्यां क्रीतं द्विपण्यम् । पादान्तस्य खे कृते पाद पदिति प्राप्ते —
**असिद्धवदत्राभात्** ॥ ४ । ४ । २१ ॥ इत परमासिद्धवदित्यधिक्रियते आ भसशब्दनात् । इत्यसिद्धत्वान्नापचे इत्यादिपदादेशस्तु न स्यात्तत्र केवलस्यैव विधानात् । द्विपाद्यम् । द्विमाष्यम् ।

**शताद्वा** ॥ ३ । ४ । ३२ ॥ पक्षे ठण् । तस्योप् । द्विशत्य, द्विशतम् ।

शाणात् ॥ ३ । ४ । ३३ ॥ वा यः । पक्षे ठण् । तस्य चोप् । पञ्चभिः शाणैः क्रीतं पञ्चशाण्यं, पञ्चशाणम् ।

द्वित्रिभ्यामण् ॥ ३ । ४ । ३४ ॥ द्वित्रिपूर्वात्शाणान्ताद्दण् यश्च वा भवति । पक्षे ठण् । द्वैशाणम् । द्विशाण्यम् । द्विशाणम् । अखुशाण इत्यादैप् । त्रिशाण्यम् । त्रिशाणम् ।

तेन क्रीतम् ॥ ३ । ४ । ३५ ॥ भासमर्थात्क्रीतार्थे यथाप्राप्तं ठणादयो भवन्ति । निष्केण क्रीतं नैष्किकम् । शत्यम् । साहस्रम् । द्विकम् । अभिधानवशात्करणादिगतिर्ज्ञेयः । नेह, पाणिना क्रीतम् ।

तस्य वापः ॥ ३ ॥ ४ ॥ ३६ ॥ उप्यतेऽस्मिन्निति वापः क्षेत्रम् । तत्र यथासम्भवत्यो भवति । प्रस्थस्य वापः प्रास्थिकः । पात्रिकः । पात्रिकी । वातपित्तश्लेष्मसन्निपातेभ्यः शमनकोपनयोरुपसंख्यानम् । वातस्य शमः कोपो वा वातिकम् । एवं पैत्तिकम् । श्लैष्मिकम् । सान्निपातिकम् ।

निमित्तं संयोगोत्पादौ ॥ ३ । ४ । ३७ ॥ बुद्धिपूर्विका प्राप्तिः संयोगः । शुभाशुभयोः सूचक उत्पादः । उत्पात इत्यर्थः । तासमर्थान्निमित्तमित्यर्थे यथासंभवं त्यो भवति यन्निमित्तं संयोग उत्पादो वा स चेत् । शतस्य निमित्तं शतिकः शत्यो वेश्वरसंयोगः । सौमग्रहणिको भूमिकम्प उत्पादः ।

योऽसंख्यापरिमाणाश्वादेः ॥ ३ । ४ । ३८ ॥ ठणापवादः । धनस्य निमित्तं संयोग उत्पादो वा धन्यः । यशस्यः । आयुष्यः । असंख्येति किम् ? शतानां निमित्त शतकः ।

द्रोणिकः । आश्विकः। अश्व, अश्मन्, गण, ऊर्णा, उमा, भङ्गा, वर्षा, वस, वसु, इत्यश्वादिगणः ।

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या तु गणना स्मृता । इति संख्यापरिमाणयोर्भेदः ।

गोब्रह्मवर्चसात् ॥ ३ । ४ । ३९ ॥ यः । गोर्निमित्तं संयोग उत्पादो वा गव्यः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । ब्रह्मवर्चस्यः । पूर्वेण सिद्धे नियमार्थमिदम् । एकाचो गोरेव, बह्वचश्च ब्रह्मवर्चसादेवेति । नेह, नाविकः । वास्तुयुगिकः ।

पुत्राच्छ वा ॥३।४।४०॥ पक्षे यः । पुत्रीयः, पुत्र्यः ।

सर्वभूमिपृथिवीभ्यामण् ॥ ३ । ४ । ४१ ॥ सर्वभूमेर्निमित्तं सयोग उत्पादो वा सार्वभौमः । अनुशतिकादित्वादुभयत्रैप् । पार्थिवः ।

ईश्वरः ॥ ३ । ४ । ४२ ॥ तत्र विदितः ॥ ३ । ४ । ४३ ॥ सर्वभूमेरीश्वरस्तत्र विदितो वा सार्वभौमः । पार्थिवः ।

लोकात् ॥ ३ । ४ । ४४ ॥ लोके विदितो लौकिकः ।

सर्वात् ॥ ३ । ४ । ४५ ॥ लोकादेव । सार्वलौकिकः । अनुशतिकादिरयम् ।

तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ३ । ४ । ४६ ॥ वृद्ध्यादिभिः प्रत्येकमभिसंबन्धाद्दीयते इत्येकवचनम् । कलान्तरादिका वृद्धिः । पञ्चास्मिन्दीयते पञ्चको वृद्धिरायादिर्वा । नित्यानिबद्धा प्राप्तिरायः । मूल्यातिरेको लाभः । वणिजां रक्षाकारितो राजभागः शुल्कम् । उत्कोट उपदा ।

डडर्धाट्टः ॥ ३ । ४ । ४७ ॥ डडिति तस्य पूरणे डडित्यत आ तमटष्टकारात्प्रत्याहारः । डडन्तादर्धाच्च ठो भवति पूर्वविषये । पञ्चमो दीयते वृद्धिरायो लाभः शुल्क उपदा वा पञ्चमिकः । द्वितीयिकः । अर्धिकः ।

भागाद्यश्च ॥ ३ । ४ । ४८ ॥ चाट्टः । पूर्वविषये । भागो वृद्ध्यादिरस्मिन्दीयते भाग्यो, भागिकः ।

तद्धरति वहत्यावहति भाराद्वंशादेः ॥ ३ । ४ । ४९॥ वंशादिपूर्वाद्भारान्तादीप्समर्थाद्यथासंभवं त्यो भवति हरत्यादिष्वर्थेषु । वंशभारं हरति वहत्यावहति वा वांशभारिकः । वाह्रजभारिकः । भारभूतेभ्यो वंशादिभ्य इत्यन्ये । भारभूतान् वंशान् हरति वांशिकः । भारभूतात्किम्? एकं वंशं हरति । वंशादेः किम्? भारभूतान्यवान् हरति ।

वस्नद्रव्याभ्यां ठकौ ॥ ३ । ४ । ५० ॥ यथासंख्यम् । वस्नं मूल्यं हरति वहत्यावहति वा वस्निकः । द्रव्यकः ।

संभवत्यवहरति पचति ॥ ३ । ४ । ५१॥ कौद्रवं संभवति गृह्णातीत्यर्थः, अवहरति क्षयं नयतीति यावत्, पचति वा कौद्रविकी स्थाली । प्रास्थिकी । तत्पचतीति द्रोणादण् च वा० द्रौणी । द्रौणिकी ।

आढकाचितपात्रात्खः ॥ ३ । ४ । ५२ ॥ पक्षे ठण् । आढकं संभवत्यवहरति पचति वा आढकीना, आढकिकी । आचितीना, आचितिकी । पात्रीणा, पात्रिकी ।

राड्ढ च ॥ ३ । ४ । ५३ ॥ आढकाचितपात्रान्वाड्ढ

भवति खश्च वा संभवत्यादिषु । पक्षे ठण् । द्वे आढके सभवति द्व्याढकिकी , द्व्याढकीना । ठणो राढुक्खाविरुपि द्व्याढकी । परिमाणाद्धृदुपीति ङी । ठट्खयोस्तु वचनादेव नोप् । द्व्याचितिकी, द्व्याचितीना, द्व्याचिता । अत्र न विस्तेति ङीप्रतिषेध । द्विपात्रिकी, द्विपात्रीणा, द्विपात्री ।

कुलिजाच्च ॥ ३ । ४ । ५४ ॥ कुलिजान्ताद्राद्विगुमर्थाट्ट्खठणो भवन्ति सभवत्यादिषु । द्वे कुलिजे सभवत्यवहरति पचति वा द्विकुलिजिकी, द्विकुलिजीना, द्विकुलिजी । केचन ठणोपि विकल्पमिच्छन्ति । तत एव अलुशाण इत्यत्र कुलिजस्यापि प्रतिषेधमिच्छन्ति । तत्र द्वैकुलिजिकी ।

तदस्यांशवस्नभृतयः ॥ ३ । ४ । ५५ ॥ पञ्च अंशो, वस्नो, भृतिर्वा अस्य पञ्चक । शतिक , शत्य । षाष्टिक । मास्थिक ।

परिमाणात्संख्यायाः संघसूत्राध्ययने ॥ ३ । ४ ।५६॥ पञ्च परिमाणमस्य पञ्चक सघ । पञ्चक जैनेन्द्रसूत्रम् । ग्रन्थ इत्यर्थ । पञ्चकमध्ययनम् । स्तोमे डो वक्तव्यः पञ्चदशाद्यर्थः पञ्चदश मन्त्रा परिमाणमस्य पञ्चदश स्तोम । एकविंश ।

खौ ॥ ३ । ४ । ५७ ॥ खुविषये परिमाणविशिष्टाया सख्याया यथाविहित त्यो भवति । विंशति परिमाणमस्य विंशतिकम् । परिमाणनाम । स्वार्थे वा । पञ्चेव पञ्चका शकुनय ।

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ३ । ४ । ५८ ॥ एते निपात्यन्ते । पञ्च

पादाः परिमाणमस्य पङ्क्तिः । पञ्चशब्दाच्चिट्टिलं च । विंशत्यादयः संख्यार्थे । लिङ्गं वचनं च स्वाभाविकत्वादेव सिद्धम् । उपलक्षणत्वादेवं सहस्रादयोपि ।

पञ्चद्दशतौ वर्गे वा ॥ ३ । ४ । ५९ ॥ वर्गेभिधेये एतौ वा निपात्येते । पक्षे यथाप्राप्तम् । पञ्च परिमाणमस्य पञ्चत्, पञ्चको वा वर्गः । दशद्दशको वा वर्गः ।

तदर्हति ॥ ३ । ४ । ६० ॥ अभिषेचनमर्हति आभिषेचनिकः ।

इत्यार्हीयाः ।

अथ कालाधिकारः ।

प्राग्वतष्ठञ् ॥ ३ । ४ । ६१ ॥ तदर्हे वदित्यतः प्रागधिकारोयम् ।

छेदादेर्नित्यम् ॥ ३ । ४ । ६२ ॥ अर्हतीत्यनुवर्तमानं नित्यमित्यनेन विशिनष्टि । छेदं नित्यमर्हति छैदिकः ।

शीर्षच्छेदाद्यश्च ॥ ३ । ४ ६३ ॥ चाट्ठञ् । शीर्षच्छेदं नित्यमर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः । शिरःपर्यायः शीर्षोस्ति ।

दण्डादेः ॥ ३ । ४ । ६४॥ ठञोपवादो यः । दण्डमर्हति दण्ड्यः ।

पात्राद् घश्च ॥ ३ । ४ । ६५ ॥ चाद्यः । पात्रमर्हति पात्रियः, पात्र्यः ।

कडङ्गरदक्षिणास्थालीबिलाच्छश्च ॥ ३ । ४ । ६६ ॥

चाचः । मुद्गादिकाष्ठ कडङ्करम् । तदर्हति कडङ्करीय , कडङ्कर्यः। दक्षिणामर्हति दक्षिणीय , दक्षिण्य । स्थालीविलीयाः, स्थाली-विल्यास्तण्डुला । पाकार्हा इत्यर्थः ।

यज्ञर्त्विग्भ्यां घखञौ ॥ ३ । ४ । ६७ ॥ यथासङ्ख्यम् । यज्ञमर्हति यज्ञिय । आर्त्विजीनः । उपचारात्तत्कर्मापि तथोक्तम् । यज्ञकर्मार्हति यज्ञियः ।

**पारायणतुरायणचान्द्रायणं वर्तयति** ॥ ३ । ४ । ६८ ॥ पारायणं वर्तयति पारायणिक । शिष्य एव नाध्यापकः । तुरायणो यज्ञः । तौरायणिक । यजमान एव न याजकः । चान्द्रायणिकः ।

**संशयमापन्नः** ॥ ३ । ४ । ६९ ॥ संशयं विषयभावेनापन्नः सांशयिकः स्थाणुः ।

**योजनं याति** ॥ ३ । ४ । ७० ॥ यौजनिकः । सङ्ख्यापूर्वपदादपि । द्वैयोजनिक । क्रोशशतयोजनशतयोरुपसंख्यानम् । क्रोशशत याति क्रौशशतिक । यौजनशतिक । ततोऽभिगमनमर्हतीति च व० । क्रोशशतादभिगमनमर्हति क्रौशशतिको गुरु ।

**पथः कन्** ॥ ३ । ४ । ७१ ॥ पन्थान याति पथिक । पथिकी । द्विपथिक । इदर्थे रसे सान्तात्पूर्वनिर्णयेनायमेव ।

**पन्थो ण नित्यम्** ॥ ३ । ४ । ७२ ॥ कटोपवाद । पन्थान नित्य याति पान्थ ।

**उत्तरपथेनाहृतं च** ॥ ३ । ४ । ७३ ॥ यातीत्यर्थे च ।

उत्तरपथेनाहृत याति वा औत्तरपथिकः । वारिजङ्गलस्थलकान्ताराजसंकुपूर्वपदादपि च० । वारिपथेनाहृतो याति वा वारिपथिकः। जाङ्गलपथिकः। मधुकमरिचयोः स्थलपूर्वादण् व०। स्थालपथ मधुक मरिच वा ।

कालेभ्यः ॥ ३ । ४ । ७४ ॥ अधिकारोयम् ।

तेन निर्वृत्तः ॥ ३ । ४ । ७५ ॥ मासमर्थेभ्यः कालविशेषवाचिभ्यो निर्वृत्तेर्थे ठञ् भवति । मासेन निर्वृत्तो मासिक. । आर्धमासिकः ।

तमधीष्टो भृतो भूतो भावी ॥ ३ । ४ । ७६ ॥ अधीष्ट. सत्कृत्य नियुक्त । वेतनेन क्रीतो भृतः । संवत्सरमधीष्टो भृतो भूतो भावी वा सांवत्सरिकः । षाष्टिक ।

मासाद्वयसि खञ् ॥ ३ । ४ । ७७ ॥ अधीष्टभृतौ न सम्बध्येतेऽसम्भवात् । मास भूतो भावी वा मासीन· । ञित्त्वाञ्ण-द्धिदिति पुवद्भावप्रतिषेध । मासीना दुहितृका ।

यः ॥ ३ । ४ । ७८ ॥ मासादेव । मासं भूतो भावी वा मास्य । उत्तरार्थो योगविभागः ।

रात् ॥ ३ । ४ । ७९ ॥ मासान्तादेव । द्वौ मासौ भूतो भावी वा मास्यः । सङ्ख्यापूर्वपदानामनुपीति ठञपवादयोः यखञो प्राप्तयोरनेन यो विहित· ।

षण्मासाण्ण्यश्च ॥ ३ । ४ । ८० ॥ चाद्य. । षाण्मास्यः षण्मास्य । अन्ये ठञ समुच्चयन्ति । यस्त्वनुवर्तते एव । षाण्मासिकः ।

ठश्चावयसि ॥ ३ । ४ । ८१ ॥ षण्मासादवयसि वाच्ये ठो भवति, चाण्य । षण्मासिको नायक षाण्मास्यो वा ।

समायाः ख ॥ ३ । ४ । ८२ ॥ इप्समर्थात्समाशब्दात् खो भवत्यधीष्टादिष्वर्थेषु । समामधीष्टादि समीन । केचित् तेन निर्वृत्त इत्यप्यनुवर्त्य समया निर्वृत्तो समान इत्यप्याहु ।

रात्र्यूतवले ॥ ३ । ४ । ८३ ॥ समान्ताद्रात्रिनिर्वृत्तादिषु पञ्चस्वर्थेषु खो वा भवति । द्वे समे भूतो द्विसमीन । पक्षे ठञ्, द्वैसमिक । सख्यापूर्वपदाना तदत्र ग्रहणमनुपीति नित्ये खे प्राप्ते विभाषेयम् । भूतवल्विग्रहणमादरार्थम् । कालपरिमाण न परिमाण-ग्रहणेन गृह्यतेऽनो न "परिमाणस्याखुशाण" इति द्योरैप् ।

रात्र्यहःसवत्सरात् ॥ ३ । ४ । ८४ ॥ रादेव । निर्वृत्तादिष्वेव । खष्ठञ् च वा । द्व्यहीनो, द्वैयह्निक । अत्राहरन्तादिति वचनान्न राजाह इति ट । द्व्यह्नीन इति तु द्वयोरह्नो समाहार इति टे सान्ते "एभ्योऽह्नोह्न" इति चाह्नादेशे ततश्च खे सति सिध्येत् । द्विसवत्सरीण । ठञि, "सख्याया सख्यासवत्सरस्य" इत्यैपि द्विसावत्सरिक । सख्याया उदाहरण तु द्विनावतिकम् । परिमाणस्यालुशाणे इत्येव सिद्धे सवत्सरग्रहण निरर्थकमिति चेन्न, अशाण इति प्रतिषेधादतश्च वचनात् परिच्छेदमात्रस्यैव परिमाण-त्वस्वीकारात् कालकृतस्य परिमाणस्यारोहपरिणाहस्य च तत्राग्रह-णात् । अत एव वक्ष्यते वर्षस्येति ।

वर्षाद्वुप् च ॥ ३ । ४ । ८५ ॥ वर्षान्ताद्राद्वा ठञ् उभ-वति खश्च निर्वृत्तादिषु । द्विवर्षो, द्विवार्षिको, द्विवर्षीण । अत्र,

**वर्षस्याभाविनि ॥ ५ । २ । २१ ॥** संख्यायाः परस्य वर्षस्य ध्योरैज्भवति । इत्यैप् । भाविनि तु, त्रीणि वर्षाणि भावि त्रैवर्षिकम् । एव "परिमाणस्याखुशाणे" इत्युक्तेन सूत्रेण संख्यायाः परस्य परिमाणस्य समुदायेनाखौ गम्यमानायामऽशाणे च ध्यौ ध्योरैज्वि-धीयते । द्विसौवर्णिकम् । अत्र क्रीतेऽर्थे आर्हाट्ठणः कार्षापणसहस्रेति वाऽनुप् । खौ तु पाञ्चलौहितिक. । अत्र लोहिनीशब्दस्य वा ठञ्ठ-सोरिति पुंवद्भावे रूपम् । ततः परिमाणे ठण् । शाणस्यापि द्वैशाणम् । द्वित्रिभ्यामण् चेत्यण् । **कुलिजस्य प्रतिषेधो व०** । द्वैकुलिजिकम् ।

**प्राणिन्युप् ॥ ३ । ४ । ८६ ॥** पुनरुब्ग्रहण नित्यार्थम् । वर्षान्ताज्जातप्राणिनि वाच्ये त्यस्य नित्यमुब्भवति । पूर्वेण विकल्पे तु ठञ्खयो श्रवण प्रसज्येत । द्विवर्षा दारिक इत्येव । भूतभावि-नोरर्थयोरेवाय नित्यमुप्, अधीष्टभृतयोस्तु विकल्प एव । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति द्विवार्षिकः ।

**तदस्य ब्रह्मचर्यम् ॥ ३ । ४ । ८७ ॥** तत्–इतीप्समर्था-त्कालवाचिनो मृदोऽस्येति तार्थे ठञ् भवति, ब्रह्मचर्यं चेत्तदर्थः स्यात् । सवत्सरं ब्रह्मचर्यमस्य सावत्सरिको ब्रह्मचारी । सबन्धो वृत्तावन्तर्भूतः । इति पुरुषोऽभिधेयः । संख्यापूर्वपदाच्च । द्वादश-वार्षिक. । अत्रार्थे **महानाम्न्यादिभ्यस्तासमर्थेभ्य उपसंख्या-नम्** । महानाम्न्यो नाम ऋचः । महानाम्नीनां ब्रह्मचर्यमस्य माहानाम्निकः । आदित्यव्रतिकम् । **तच्चरतीति च महानाम्न्या-**

# प्रकरणक्रमोन्त्यमङ्गलं च.



सन्धिर्विनामविधिरथ लिङ्गालिङ्गस्य विधिविशेषश्च ।
स्त्रीत्यविभक्त्यर्था अपि समासतद्धितविधिरिति क्रमादुक्ताः ॥ १ ॥
एव तृतीयतुर्याध्यायगताः प्रत्ययास्तदर्थैः सह ।
पूर्वार्धेत्र विभागे सोदाहरणं कृता विशदाः ॥ २ ॥

वृंदारुसुजनानन्दकारिणी दुःखहारिणी ।
शीतला पुरुदेवस्य वाणी जीयात्सनातनी ॥ ३ ॥
धर्मोपदेशतो नीतं यया जगदशेषतः ।
दुरन्तसंसारकूपारात् सुमार्गं शिवतातिदम् ॥ ४ ॥

